कर्णितैतज्जननीजायोदन्तोऽहमन्तरा[1] दिवं भूमिञ्च न कमप्यात्मीयमवगच्छन्मूर्च्छि-तोऽरुग्णोऽपि घातरुग्णो[2] द्रुम इव द्रुतमपतमवन्याम् । ततो वर्षेणागत्यजगतोऽ-नित्यतामेवैकां सत्यतां बोधयित्वाहं कथञ्चिद् धारितधृतिश्छिन्नाखिलमायानिब-न्धनबन्धनोऽपरिमार्यं[3] दुःखविरक्तहृदयः प्रशमैकमात्रसहायस्तपोवनमशिश्रियम् ।

गच्छत्स्वहस्सु तपोवने तस्मिन्नयोध्यातः समायातः कश्चिद्विप्र इत्येकदोप लब्धो मन्निवसतिं समया[4] योगनन्दस्य वार्तामनुयुक्त इत्थमबोधयत्—'योगनन्दस्य सकाशात् त्वयि गते लब्धावकाशः शकटालो युक्त्या तद्वधोपायं चिन्तयंस्तेन सह चिरमवसत् । एकदा च स पथि क्षितिं खनन्तं चाणक्यनामानं ब्राह्मणम् पश्यत् । किमर्थमेतत् करोषीति पृष्टश्चाणक्य 'अनेन दर्भेण मदीयः पादो विद्धः, अहमेनमतः समूलं नाशयिष्यामि' इत्यवदत् । एतदाकर्ण्य मन्त्री शकटालो नाहमेव क्रूराग्रहेऽतीमकं[5] कमप्यन्यं नन्दविनाशाय साधनभूतं प्राप्स्यामीत्यय चार्याभाषणसम्बन्धेन तं चाणक्यनामानं च परिज्ञाय उक्तवान्—'विप्र, नन्दस्य गृहे त्रयोदशीश्राद्धाहेऽहं त्वयाँ[6] सुस्वादुभोज्यान्नमाशयिष्यामि । तत्र सर्वतः प्रथमं भुक्तस्य तव स्वर्णमुद्रालक्षं दक्षिणा भविष्यति । त्वं तावन्मद्गृहमेहि ।' एवमुक्त्वा स्वगृहमानीतश्चाणक्यः श्राद्धाहे नन्दं प्रदर्शितो धुर्युपाविष्टः । किन्तु कश्चित्सुबन्धुनामाऽन्यो ब्राह्मणस्तत्र धुर्युपाविविक्षदिति शकटालेन तथा कर्त्तुं विज्ञप्तो भूपतिर्धुरि समुपावीविशत् । चाणक्यं चोपगत्य भयावनतः शकटालः 'भगवन्! नाहमेतस्यापराधकः, अपितु राजाज्ञयैवेदं संजातम्' इति समभाषत । एतेनामन्दं नन्दं प्रति क्रुद्धश्चाणक्योऽवलिह्यमान इवापादमस्तकं क्रोधशिखिशिखया, शिखां च विवर्कामुन्मुच्यासिधारासगन्धीं सन्धामिमामावबन्ध, 'यावत्त

---

१ अन्तरायोगे द्वितीया । २ रुजोभङ्गे इत्यस्मात् क्ते ओदितश्चेति नत्वम् । ३ मृजेर्विभाषा इति वृद्ध्यभावे 'ऋहलोर्ण्यत्', 'चजोः कुघिण्ण्यतोः', ततो 'मृजेर्वृद्धिः' । ४ समयायोगे द्वितीया । ५ इममतिक्रान्तम् इति विग्रहे अव्ययसर्वनाम्नामकच् प्राक् टेः । ६ त्वया इत्यत्र गतिबुद्धीत्यादिना द्वितीया 'आदिखाद्योर्न' इत्यनेन बाध्यते । ७ ण्वुल्तृचाविति कालसामान्ये ण्वुल् तेनात्र तद्योगे षष्ठी ओदनस्यपाचक इतिवत् । भविष्यति गम्यादय इत्यधिकारे विहितस्य तुमुन्ण्वुलाविति ण्वुलो योगे तु अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीनिषेधः । ८ प्रत्ययस्थादितीत्वम् । ९ असिधारातुल्याम् ( अतिभयानकामिति भावः )

प्सरा भवतोर्भगिनी, उपैनामन्या नार्य, शापपरिभ्रष्टौ च युवाम्। अस्याः पुत्रप्रसव समकालमेव भवतां शापविमुक्ति । एवमुक्त्वाऽन्तर्हिते तस्मिन् स्तोकैरेव दिवसैः श्रुतार्था मामसूत । तत्क्षणमन्तरिक्षादुदभूदिय वाणी यन्नवच्छापविमुक्तिकारो गणावतारो³ऽय जात । अन्वेन मर्त्या, गुणाढ्यो नाम ब्राह्मणोऽयम्, भूलोके जन जनमभि कीर्तिरस्य प्रसरिष्यति इति । किञ्चित्कालान्तरमेव मे माता मातुलौ च क्षीणपापाः पञ्चत्व प्राप्ताः । किन्तु बालोऽप्यह स्व शुचेऽसमर्प्य स्थावष्ट म्भेनैतस्तत पर्यटन् सर्वा विद्याः परिसमाप्य स्वदेशमायातः प्रसिद्धिमगमम् ।

एकस्मिन्समयेऽह सशिष्य प्रतिष्ठित नगर प्रविश्य तत्रत्यानां परापराणां पौराणां विविधा वार्ता समाकर्णयन्, प्रतिपद सत्कृतकौतुकानि चावलोकय ध्निन्द्रसदनसदृश राजप्रासादमासादयम् । तत्र च शिष्यैर्निर्दिश्यमानवर्त्माऽन्वः समाविष्टोऽहमास्थानस्थितममरैः सर्वत परिवारित वासवमिव शर्ववर्मप्रभृतिभिः स्वमन्त्रिभिः परिवृत रत्नसिंहासनमासीन राजान सातवाहनमपश्यम् । तत्र राज्ञे विहितस्वस्तिकार विष्टरोपविष्ट मां स्तुतिपूर्वक शर्ववर्मादय 'देव, अयमेव जगद्विख्यातः, सर्वानवद्यविद्याविद्योतितान्त करण, विविधगुणगणाढ्यो गुणाढ्य' इति राज्ञा पर्यचीचयन् । राजा चापि निजमन्त्रिभि सुस्तुत मामाकर्ण्याति प्रीतः सत्कृत्य निजमन्त्रित्वे न्ययूयुजत । अहमपि च कृतदारपरिग्रहस्तत्र शिष्यानध्यापयन् सातवाहन राजकार्याणि चानुचिन्तयन् ससुख न्यवसम् । एतदाकर्ण्य सातवाहननामकरणकौतूहलाक्रान्तमना सुमना काणभूतिस्तत्रा मकरणहेतुगुणाढ्यमपृच्छत् । यदाकर्ण्य गुणाढ्य एव तस्य तत्कौतूहलमपनेतु प्रारभत—

'अभवदेको हीनेभ्यो धनद इव धनवो, गोद, करवलद्भ प्राग्वराज्यो ऽस्यन्यान् नृपतीन्नृपो नाम्ना दीपकर्णिः । तस्य प्रेयसी भार्या शक्तिमती रतान्तोद्यानसुप्ता जातु सर्पेण दृष्टा नष्टा । पञ्चत्वमवाप्ताया तस्यां मासेन

---

१ 'उपोऽधिके च' इति हीने कर्मप्रवचनीयता। २ 'कर्मण्यण्'। ३ 'अयेतुष्णोर्घञ्'। ४ हीनेऽनोः कर्मप्रवचनीयत्वम्। ५. 'अभिरभागे' इति वीप्सायां कर्मप्रवचनीयता। ६ 'पितृव्यमातुल०' इति सूत्रे 'मातुलुकच्'। ७ परे चापरे चति द्वन्द्वे 'द्वन्द्वे च' इत्यनेन सर्वनामताऽभावः। ८ 'ईदास' इति दागच आकारस्येत्वम्। ९ 'स्तु' पूजायाम्'। १० 'आतश्चोपसर्गे'। ११ 'अतिरतिक्रमणे च'। १२ अकर्मकधातुयोगे कालवाचकाद् द्वितीया।

द्विमो[1] दीपकर्णिरपुत्रोऽपि विधुर एव धुरं राज्यभारस्य विवहन् शौर्पायुष्को ब्रह्मचारी न पुनरुद्वाहमचिन्तयत्। एकदा राज्यार्हपुत्रासद्भावोद्विग्नमानसं राजानं भगवान् शशिशेखरः स्वप्ने समादिदेश—'अटव्यामटन् त्वं कुमारकमेकमवलोकयिष्यसि। तमादाय गृहमागच्छेः। स ते पुत्रो भविष्यति'। प्रबुद्धो राजा स्वप्नं[3] स्मरन्नतिप्रहृष्टस्तमनेहसं सम्प्रतीक्षमाणोऽतिष्ठत्। एकदाऽऽखेटाकृष्टोऽटव्यामुपमहीध्र[4] दवीयसीं पदवीमवगाहमानो मध्याह्ने एकस्य पद्मसरसस्तीरे तपनतेजसं सिंहारूढं पद्मपवर्पं[5] बालकमेकमपश्यत्। स्मृतस्वप्नेन तेन नृपेण[6] वतारितबालक एकेनैव च शरेण[7] व्यापादितः सिंहः सद्यः पुरुषत्वं प्रपद्य राजानं सम्बोध्योवाच धनदस्य सखा सातसञ्ज्ञो यक्षोऽहम्। पुरा व्योमचरं चार्वीं मुनिकन्यामालोक्य सञ्जातमन्मथोन्मथितमानसोऽहं सान्निध्यमुपगतस्तत्स्वीकृतिपूर्वकं गान्धर्वेण विधिना तां पर्यणयम्। अवबुद्धैतदुदन्तास्तद्बान्धवा आवयोः स्वैरच्छाचारमिममसहमाना 'पापौ, स्वैरच्छाचारौ सिंहौ स्ताम्' इत्यशपन्त। मुनयश्च पुत्रप्रसवकालं तस्याः, तदनन्तरं त्वच्छराघातपर्यन्तं च मम, शापावधिं व्यदधुः। अथ कालेन सिंहयोनिमापन्नयोरावयोर्दारकेऽस्मिन् जाते साध्वी स्वासून् भिष्यंयुज्यतेत्यन्यसिंहीस्तन्यसवर्धितमिमं प्रकृत्या[8] महासत्त्वं सुतं मद्दत्तं त्वं गृहाण। अहं तव बाणाहतो विमुक्तो यथाप्राप्तगतिं सुखेन[9] यामि। एवमुक्त्वाऽन्तर्हिते सातनाम्नि तस्मिन् गुह्यके, तस्य बालकस्य आदायधरः[10] समप्रसादमासादितनिजप्रासादो दीपकर्णि सातेनोढतया बालकस्य तस्य 'सातवाहन' इति नाम कृत्वा कालेन च तमेव राज्येऽभिषिच्यारण्यमाश्रयत्। सातवाहनश्च सार्वभौमो भूपतिः सञ्वृत्तः।

एवमुपशमितसातवाहननामविषयककाणभूतिजिज्ञासो गुणाढ्यः प्रकृतमनु

---

१ ओविजीभयचलनयो इत्यस्मात् 'श्वीदितो निष्ठायाम्', 'ओदितश्च'। २ शेपायुं ब्रह्मचर्यमस्येति 'तदस्य ब्रह्मचर्यम्' इति ठञि वृद्धौ 'इसुसुक्तान्तात्कः'। ३ 'स्वपो नन्'। ४ 'मूलविभुजादिभ्यः कः'स्ततोऽव्ययीभावः। ५ पञ्च वा षड्वेति सङ्ख्ययाऽव्ययेति बहुव्रीहौ, डचि पञ्चषाणां वर्षाणां भूत इति 'तमधीष्टोभृतोभूतो भावीति' प्रकरणे 'वर्षाल्लुक् चेति' विहितस्य खस्य ठञो वा 'चित्तवति नित्यम्'—इति लुक्। ६, ७ 'कर्तृकरणयोस्तृतीया'। ८ 'चतुर्वर्णादीनामुपसङ्ख्यानम्' इति ष्यञ्। ९ 'शरीरावयवाद्यत्'। १०, ११ 'प्रकृत्यादिभ्य' उपसङ्ख्यानम्। १२ 'भिक्षासेनादायेषु च'।

वृत्यामे वक्तुमेवमारभत—'स च सातवाहन एकदा वसन्तोत्सवसमये नन्दनेऽमरपतिरिव निजारामे रामा[1] दीव्यन् गाहमानजनतापहारिणि वारिणि रमणीये जलक्रीडां कर्तुं तत्रत्यवापीमवतीर्णः तत्र व्यात्युक्षिकायामत्यासक्ताभिर्वा कर वारिभिरभितः सिच्यमानो वारणो वशासु इव क्रीडापरवशासु तासु नखद्युति वल्लभमम्भः सिञ्चंस्तदभिषिक्तिमसहमानया शिरीषसुकुमाराङ्गया स्वकीयान्यतम महिष्योक्तः; 'देव, मोदकैर्मां ताडयेति'। तदाकर्ण्य प्रिया मे मोदकैस्ताड्यमाना मात्मानमिच्छतीति बुद्ध्या नृपतिर्दुग्ध वचनै[2]करेण बहुमोदकानानायमत्। ताना लोक्य विहस्य साऽभाषत—राजन्नत्र जलान्तरे कोऽवसरो मोदकानाम् ? उदकैर्मा मा सिञ्च इत्येवमुक्तस्त्व माशब्दोदकशब्दयोः सन्धिं प्रकरणञ्च नावगच्छसीत्ये तावान् मूर्खः। परजनमेजयो[3]ऽपि शब्दशास्त्रविदा तयैव पराजितो राजा सव्रीडः परित्यक्तजलक्रीडः, जातावमानः, परित्यक्तकार्यान्तरावधानस्तत्क्षण निजावास मविशत्। तत्र च परित्यक्ताहारविहारः, विवर्जिताखिलव्याहारः, विरहितकुशे शयशयनीयः पाण्डित्यं मृत्युं वा शरणं करवाणीति कृतमना न मनागपि शान्ति मुपजगाम। अकस्मादथ राज्ञस्तथाविधामभूतपूर्वावस्थामवलोक्य सम्भ्रान्ते सवस्मिन् परिजनक्रमे क्रमेणाह शर्ववर्मा च तत्सर्वमवगतवन्ताविरपरमदाहूत पृष्टेन हृसाध्येन राजचेटकेनायाचि यद्राज्यवमानानुतापजन्यमन्युनाऽनिशं दन्दह्य मानमानसो नृपो न निशि नेत्रे निद्रया निमीलति। एतदाकर्ण्यान्योन्यमालो क्याह शर्ववर्मा च सर्वावरुद्धप्रवेशमपि सातवाहनवासवेश्म कथमपि प्राविशाव। निकटोपविष्टेन च मया तदवस्थावस्थाहेतुमनुयुक्तो नृपोऽविकलसकलेन्द्रियोऽपि वार्तां[4] विकल इवानुत्तरयन्नेव मौनेन[5] मुनिरिव तथैव तूष्णीकामास्त। किन्तु ततस्तु शर्ववर्मणि 'देव, दर्शनेन[6] मयाऽद्य दृष्टं यन्नभसोऽम्बुजमेकं च्युतम्। तच्च दिव्येन केनचित् कुमारेण विकासितम्। तस्मान्निर्गता धवलाम्बरैका दिव्या स्त्री तत्क्षणमेव भवन्मुखं प्रविष्टा। इत्थं स्वप्नं गत प्रबुद्धः मन्ये, सा स्त्री साक्षात्सरस्वती देवस्य वदनं प्रविष्टेति'। इत्थं निवेदितनिजस्वप्ने, भग्नमौनमुद्रः सातवाहनः साकूत मामवदत्—'प्रयत्नेन[7] शिक्षमाणः पुमान् कियता कालेन पाण्डित्यमधिगच्छतीति त्वयाऽद्य वाच्यः। यतो हि तेन विनैषा[8] सत्यं रमणी रमणीगणमुख्यस्यापि मे

---

१ दिव' कर्म चेति करणसंज्ञापवादात्कर्मत्वम्। २ 'कृञो हेतुताच्छील्यानु लोम्येषु' इति करोतेष्टः। ३ 'एजे खश्'। ४ 'येनाङ्गविकारः'। ५ 'इत्थंभूतलक्षणे'। ६ दृष्टः। ताच्छील्यवयोवचनशक्तिषु चानश्। ७ 'स्वपितृषोर्नजिङ्'। ८ 'यजयाचेति नङ्'।

सम्पन्नकमनीयरमणीव विरक्तस्येति । काष्ठस्याभरणानीव विभवा न मे मूर्खस्य शोभासंवर्द्धिनः । एतदाकर्ण्य तस्य राज्ञो वैदुष्यासादनोत्कटेच्छया[1] सजातानोऽहमवदम् 'देव अभ्यासेन सर्वं सिध्यतीत्यलं चिन्तया[2] । यत्नेनोद्गन्धिना[3] पुष्पस्य तिलतैलमिव[4] मूर्खोऽपि मूर्खोऽप्युपलब्धवैदुष्यस्योपस्कुरुते[5] । व्याकरणं हि सर्वविद्यानां मूलम् । तच्च नरैर्द्वादशभिर्वर्षैरभ्यस्यते[6] । किन्त्वहं त्वां तद्वर्षषट्केनैव शिक्षयिष्यामि । एतदाकर्णितशर्ववर्मा, सहसा सेर्ष्यमभाषत-सुखोचितो जनः कथमेतच्चिरमेव क्लेशं कुर्यात् इति हे देव, त्वामहं मासषट्केन शिक्षयिष्यामि तद् व्याकरणमिति । एतेनासम्भाव्यमानेनास्मानमुच्चैः[7] क्रोधं मदर्शयन्त कृपाऽहं समवोचम्—यदि मासषट्केन त्वया देव शिक्षितः क्रियेत तदा संस्कृत, प्राकृत, देशभाषाश्चेति मनुष्यसम्भव भाषात्रयं मया सद्यः परित्यक्तं स्यात् । शर्ववर्मा चैतदाकर्ण्यावदन्न चेदहमेवं कुर्याम्, द्वादशाब्दान् यावत्तव पादुके शिरसा वहँस्ते वशंवदतां[8] कुर्याम् । एवमन्योऽन्यं निभरत्वं निर्गतयोरावयोरुभयत सिद्धिं मत्वा राजा समुपलब्धाश्वासन स्वासने समश्वसत् । शर्ववर्मा च तां सुदुस्तरां[9] प्रतिज्ञां तितीर्षुं सानुशयः सर्वं स्वस्त्रियै शंसित्वा सङ्कटे चास्मिन् स्कन्देन विनाऽन्यां गतिमपश्यन् तस्या एव त्रियामायाः पश्चार्द्धे[10] भागे प्रस्थितः स्कन्दप्रसिषादयिषया वातैकभक्षः, कृतमौन शरीरनिरपेक्षेण[11] तपसा सन्तोषितात् कुमाराद्यथेप्सितवरमुपलभ्यागतश्चिन्तितोपस्थिताः सर्वा विद्या राज्ञे प्रदत्तवानिति नियतैरेवा[12]होभिर्भूप सर्वशास्त्रपारङ्गमो[13] बभूव ।

इत्थं राज्ञोऽखिलविद्यालाभं समाकर्ण्य सर्वं तदीयं राष्ट्रमानन्दममन्दमविन्दत, राजा च 'गुरुरिति' राजार्हरत्नराशिभिरर्चित्वा शर्ववर्मणेऽनुनर्मदाकूलविनिवेशितं मरुकच्छविषयराजधानीम्, मोदकैरित्याद्यभिहितवत्यै विद्यागमप्रेरणावमानेन तन्मौर्ख्यमपसारितवत्यै तद्राज्ञ्यै सर्वसपत्नीषु प्राधा[14]भीक्ष्णं प्रीत्या प्रायच्छत् ।

---

१ 'सहोऽन्यतरस्यां कर्मणि'। २ गम्यमानापिक्रिया कारकविभक्तौ प्रयोजिका'। ३ गन्धस्येदुत्पूतिसुसुरभिभ्यः'। ४ 'स्नेहे तैलच्'। ५ 'कृञः प्रतियत्ने'। ६ 'अपवर्गे तृतीया'। ७ 'क्त्वा च'। ८ 'प्रियवशे वदः खच्'। ९ 'ईषद्दुःसुषु०' इति खल्। १० अपरश्चासावर्धश्चेति विग्रहे पूर्वापरेति समासे 'अपरस्यार्धे पश्चभावो वक्तव्यः' इत्यपरस्य पश्चादेश । ११ 'हेतौ',तृतीया । १२ 'अपवर्गे तृतीया'। १३ 'गमेः सुपि वाच्य' इति खच्। १४ प्रधानस्य भाव इति ष्यञ तस्येन पित्वात् ङीपि 'हलस्तद्धितस्येति' यलोपः ।

सर्वस्मिन्नेव सञ्जातेऽवलम्बितमौने मयि च द्वितीयस्मिन्नहनि राजान्तिकं प्रातरिर्वनि, कश्चिद्द्विजः स्वयंकृतश्लोकमेकमपठत्। यच्छ्रुत्वाकर्ण्य राजा सम्यक् संस्कृतया गिरैकं मधुरं स्पष्टमन्वाचष्ट येन च सन्ततधा सर्वे जना प्रमुदिता सञ्जाता। तदनन्तरं राज्ञा सविनयं पृष्टः शर्ववर्मा स्वस्मिन् कृतं देवानुग्रहप्रकारमेव सविस्तरमुपवर्णितवान्—'देव, इत इतोऽहं हीनाहारः, सयतव्याहारः, परित्यक्तबन्धुबान्धवजायाकायादिमायः, तीव्रतपःकृशक्लान्तकायः, निःसज्ञोऽवनिधरण्यामेकत्र न्यपतम्। तदा जाने, कश्चिच्छक्तिहस्तः पुमानेत्य मामेव विस्पष्टमाचष्ट 'पुत्र, उत्तिष्ठाभीष्टं सर्वं ते सम्पत्स्यते', इति। तेनाहं तदा सुधाधारासारसिक्त इवानुभूताशनायोद्य इवाभवम्। तदनन्तरं देवस्य सामीप्यं प्राप्य भक्त्यासक्तचेतसे ज्ञात्वा गर्भगृहं प्रविष्टाय मे प्रभुणा स्कन्देन दर्शनं दत्तम्। मुखे च मदीये साक्षात्सरस्वती प्रविष्टा। अथ भगवान् षडाननः षड्भिराननैः 'सिद्धो वर्णसमाम्नायः' इति सूत्रमुदैरयत्।

तदाकर्ण्य मानवसुलभचापलेन मयाम्युद्योत्तरं सूत्रमुदितमिति देवो मामेवमब्रवीत्—यदस्त्वयं चेत्त्वं नावदिष्य शास्त्रमेतत्पाणिनीयोपमर्दकमभविष्यत्। अधुना चैतत्स्वल्पत्वात् कातन्त्राख्यम्, मद्वाहनस्य कलापस्य च नाम्ना कलापकमिति प्रसिद्धिं यास्यति। एवमभिनवं लघुशब्दशास्त्रं प्रकाश्य स भूयो मामभाषत यद् युष्मदीयो राजा पूर्वस्मिञ्जन्मनि भरद्वाजमुनिशिष्यो महातपाः कृष्णनामा मुनिरासीत्। मुद्याभिलाषां मुनिकन्यकामेकामालोक्याकस्मात्कन्दर्पशरशरव्यतां गतः स मुनिभिः शप्तोऽधुनाऽवतीर्णः। तस्य देवी भवितुं स मुनिकन्यकाप्यवतीर्णा। इत्यमूल्यमवतारो नृपतिरयं सातवाहनस्त्वयि दृष्टे स्वदिक्षयैवायातसर्वविद्यो भविष्यति। एवमुक्त्वाऽन्तर्हिते देवे, गृहीतदेवप्रसादतण्डुलपलोऽहं बहिरागच्छम्। अल्पमात्रा अपि भक्षिता बुभुक्षावाविनस्ते च तण्डुला मया मार्गेऽनुदिनं भुज्यमाना अपि तावन्त एवेति विस्मीयमाणचेताः क्रमेणाहमिहायातः'।

---

१ 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिपि 'दृश्यस्य विति कृति तुक्'। २ 'स्वयं क्तेनेति' समासः। ३ 'एक बहुव्रीहिवत्'। ४ अहानेः के 'घुमास्थागापाजहातिसां हलि'तीत्वे ओदितश्चेति नत्वञ्च। ५ निवासचितिशरीरेति घत्रि कुत्वम्। ६ 'अनुनासिकस्य क्विझलोः क्ङिति' इत्युपधादीर्घः। ७ 'आतश्चोपसर्गे'। ८ चक्षुर्वर्णादित्वात् ष्यञ्। ९ 'चतुर्थी सम्प्रदाने'। १० 'अन्येभ्योऽपि दृश्यन्ते' इति ओणूधातोर्विनिपि, 'विड्वनोरनुनासिकस्यात्', आदेशः।

एवं स्वमृत्तान्तमुक्त्वा विरतवचसि शर्ववर्मणि, दर्पोत्कर्षाकृष्टत्वात् सात वाहनं शिक्षासुरुदतिष्ठत्। तदृष्ट्विवर्द्धाभ्युपजातवैलक्ष्य कृतमौनोऽहं व्यवहार बहिष्कृतस्ततो गच्छन्तमनिच्छन्तमपि भूपतिं सातवाहनं प्रणामेनैवामन्त्र्य शिष्यद्वया नुगतो नगरात्तस्मान्निर्गत्य कृततपोदृढीयोनिश्चयो विन्ध्यवासिनीदर्शनार्थमायात स्तात्स्वप्नोपदेशेन त्वद्दिदृक्षया भीषणामिमां विन्ध्याटवीं प्रविष्टो बहूनाममीषां पिशाचानामन्योन्यालापान् दूरादाकर्णयमिति मयेयमात्ममौनमोक्षसाधनभूता पिशाचभाषाऽभ्यस्ता। तेभ्य एव च त्वामुज्जयिनीगतमाकर्ण्य भवतेऽत्रावध्यत्र न्यवसम्। भवन्तञ्चायावलोक्य चतुर्थ्या भूतभाषया सम्पादितस्वस्वागतेन मया स्वजातिः स्मृतेत्येतरिमञ्जन्मन्येतद्‌न्तो मद्वृत्तः।

एतदाकर्ण्य काणभूतिर्गुणाढ्यमुवाच—'शृणु, उज्जयिन्यां भूतिवर्माख्यो मदीयः सखा वर्तते। स द्रष्टुमेव तत्र गत, तस्मादवगतात्मशापमोक्षसाधनभूत त्वदागमनोऽहमिहायात इति तुभ्य[3] रोचमानां तां पुष्पदन्तोदितां कथां कथयामि। एवमुक्त्वा स सप्तकथामयीं दिव्यां कथां कथयामास। सा च पैशाच्या भाषया सप्तभिर्वर्षैर्गुणाढ्यो लक्षसप्तकश्लोकैः 'मैनां विद्याधरा हार्षुरिति' धारणयाऽटव्यां मस्यभावात्स्वात्मशोणितेन लिलेख। गुणाढ्येनैवमुपनिबद्धां महाकथां दृष्ट्वैव मुक्तशापः काणभूतिः 'भगवन्निमं शापमोक्षं त्वं मह्यमधारय' इति प्रदर्शितविनयो निजां गतिमगमत्। तत्सहचारिणस्तत्रत्या अन्येऽपि पिशाचास्तां दिव्यां कथामाकर्ण्य दिवमुपजग्मुः। तदनन्तरमियं दिव्योमेशोक्तबृहत्कथा भुवि कथं प्रतिष्ठापनीया, कोवाऽस्यै स्पृहयालु, न को वास्याय[6]सूयिष्यति कस्मै वा तावदिमां समर्पये इति चिन्तयन् महाकविर्गुणाढ्यः स्वपुस्तकं दत्त्वा गुणदेव नन्दिदेवाभिधस्वशिष्यौ सद्यानोन्तनकाव्यरसिकस्य सातवाहनस्यान्तिकं प्रेषयामास। स्वयं च प्रतिष्ठान पुराद्बहिः कृतसङ्केत उद्याने तस्थौ। तौ च शिष्यौ तत्र गत्वा गुणाढ्य कृति रेषेति कथयित्वा पुस्तकं सातवाहनायादर्शयताम्। किन्तु स तदाकृती तौ शिष्यौ पिशाचभाषोपनिबद्धां शोणिताक्षरविन्यस्तां तां बृहत्कथाञ्चावलोक्य विद्वन्मानी

१ दृष्टिरेव वढवा तस्या भ्रशते 'किप् च' इति मश्चभ्रस्जेति पाये जरत्वम्।
२ 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्'। ३ 'रुच्यर्थानां प्रीयमाणः'।
४ 'धारेरुत्तमर्णः'। ६ 'स्पृहेरीप्सितः'। ५ 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः'।
६ आत्मानं विद्वांसं मन्यते इति 'आत्ममाने खश्च' इति णिनि, मुमुरुषुष्य स्वनहुहो दः इति सस्य दत्वे तस्यानुनासिकत्वम्।

निजलक्ष्मीमदोन्मत्तोऽवहेलया परावर्तयदिति द्वावपि शिष्यौ परावर्त्य गुणाढ्याय यथावृत्तमवर्णयताम् ।

तदाकर्ण्यातिखिन्नो गुणाढ्यः सत्वज्ञेनैवमवज्ञातः सशिष्यो नातिदवीयसि विविक्तारण्यरम्यभूमिभागे विहिताग्निकुण्ड तत्राग्नावेकैकं पत्रं वाचयित्वा मृगपक्षिणः श्राव[1] श्राव स्वशिष्याभ्यामभीप्सितां श्लोकलक्षोपनिबद्धां नरवाहन दत्तकथामेकामवशेष्यावशिष्टं ग्रन्थरत्नमाशुशुक्षणौ प्रचिक्षेप । तमेव दिव्यां कथां पठन्तं दृष्ट्वा च समग्रा निखिला अप्यारण्यका सारङ्गवराहमहिषादयः परित्यक्त तृणाहारा बद्धमण्डला पर्यवारयन् ।

अत्रान्तरे स राजा सातवाहनोऽस्वस्थो जातः । तदस्वस्थताहेतुश्च वैद्यैः शुष्कमांसोपयोगो निरणायि । तन्निमित्तमाक्षिप्ताः सूदास्तथाविधमांसदायिनो[2] तद्गुत्तरदायित्वेऽतिक्षिपन् पृष्टाश्च लुब्धकास्ततो नेदीयसि गिरौ पत्रमेकैकं पश्चिवाऽग्नौ क्षिपतो द्विजस्य कथां श्रोतृणामखिलवनौकसां स्वकृत्यपर्यन्तमन्यत्र गमनाभावेन निराहारत्वाच्छुष्कमांसत्व सम्पन्नमिति व्याजह्रुः । तच्छ्रुत्वा तान् व्याधाननुगम्य स्वयं सातवाहनस्तत्र गतो जटाभि समाकीर्णं सवाष्पमृगमध्यग गुणाढ्यमपश्यत् । नमस्कृत्य च स तद्वृत्तिलवृत्तान्त महीपतिर्ज्ञातुमाचकांक्ष । सोऽपि च ज्ञानी मूलतः सर्वं भूतभाषया समाचक्ष्याविति गणायतार स ज्ञात्वा पादानताय नृपाय स्वमुखोद्गतामवशिष्टां तां कथां तस्माद्याचमानाय दत्त्वा स्वशिष्यौ च तद्व्याख्यातृत्वे नियुज्य नृपमामन्त्र्य योगशक्तिपरित्यक्ततनुर्गुणाढ्य शापनिर्मुक्तो दिव्य निजपदमवाप ।

सातवाहनश्च नरवाहनदत्तमयीं तां बृहत्कथामादाय निजनगरमागतस्तत्र गुणाढ्यशिष्यगुणदेव नन्दिदेव साहाय्येन-कैलासे शम्भुमुखात्पुष्पदन्तम्, परतश्च भूताच्च तस्माद् भूतले काणभूतिम्, काणभूतेश्च गुणाढ्यम्, गुणाढ्याच्च परम्परया प्राप्तामात्मानम्–तद्विद्याधराद्भुतकथां तत्पूर्वजवर्णनानुक्रमेणेत्थमाकल्पयाञ्चकार—

इति गुणाढ्यवृत्तान्त



१ नित्यवीप्सयोः । २ सुप्यजातौ णिनिस्ताच्छील्ये ।

# उदयन-कथा

## ( उत्पत्ति )

अस्ति वत्सेषु कौशाम्बी नाम नगरी, तस्यां पाण्डवान्वयसम्भवो विष्णुमती पत्नीक शतानीको नाम राजाऽभूत्। तेन, पत्न्या सह विस्रब्धस्याहार विहारैर्यापितास्वपि बह्वीषु निट्[1]सु, न पुत्रमुखावलोकनसौभाग्यमलम्भीति सुता सद्भावखेदखिन्नचेता एकदा विमलदिवि, शारदेऽह्नि, स्वजवेन गरुत्मन्तमप्यधरी कुर्वन्तमर्वन्तमारुह्य, परनिरासनपरशरासनवरकरः, परन्तप, समन्ततः शकुन्तर वनिरन्तरदिगन्तरमखिलमृगकुलशरण्यमरण्य मृगयार्थं गत, शाण्डिल्यमुनिना सह परिचयमलभत। आभाषणप्रसङ्गेन च मुनिर्भूपतेः पुत्राभावजन्यदशायां दयालुः कौशाम्बीमागत्य पुत्रेष्टियाजिनस्तस्य पत्नीं मन्त्रपूत चरु प्राशयदिति यथासमयमन्तर्वत्नी शतानीकपत्नी, अभ्रङ्कुरशुभयुताविकासमये समये, सहस्रानीकसञ्ज्ञक सूनु सुषुवे। शतानीकस्तेनाभितो मुदमादधानोऽतिक्रान्तशैशवस्य विविधशाखोपशाखाकूपारपारदृश्वनः सहस्रानीकस्य राजत्वा निश्चिन्तो बभूव।

एवमतिक्रामत्सु दिवसेषु, सम्प्रवृत्तेऽसुरैर्निर्जरैर्वा सङ्ग्रामे शतानीकाय सुरा साहा साहाय्येच्छया विसृष्टो मातलि समाययाविति नृपतिर्मन्त्रिमुख्यस्य युगन्धराख्यस्य सेनापतिप्रधानस्य सुप्रतीकाभिधानस्य चाभिभावकत्वे समर्पितस्वसूनुसाम्राज्यशासनोऽपरपाकशासनो यथा, करधृतपरासनशरासन, सूरमन्यान् असुरान् सङ्ग्रामे सहन्तु सत्वर मातलिना सहामरावतीमाजगाम। तत्र च सहस्राक्षप्रत्यक्षमेव धरासुरापाट्, सांयुगीन शतानीक, उत्पतत्कबन्धधुरे समरे सहस्रशोऽसुरान् सत्साहाय्यसहितानहितान् यमदष्ट्रादींश्च यमदष्ट्राऽतिथीन् विधाय, सहयुध्वा[12], स्वयमपि महाध्वाध्वनीन सँव्वृते। मातल्यानीतवीतासुदेह प्रियतममवलोक्य

---

१ 'इः सि धुट्'। २ 'उत्तरपदत्वे चापदादिविधौ प्रतिषेध' अतः 'दिघ उत्' इत्युत्वाभाव। ३ 'ऋदोरप्'। ४ 'द्विपत्परयोस्तापे', 'खचि ह्रस्वः'। ५ 'करणे यज'। ६ गतिबुद्धीत्यादिना कर्मत्वम्। ७ 'अभ्रभासभिदो घुरच्', 'घजो कुषिण्यसो'। ८ 'दशोः क्वनिप्'। ९ 'राजनि युधिकृञ'। १० 'आरम्भाने रुश्च'। ११ 'प्रतिजनादिभ्यः खञ्'। १२ 'सहेच' इति क्वनिप्।

मीन स बालः क्षत्रियोचितैरखिलसंस्कारैः संस्कृत्य सर्वाभिर्विद्याभिर्धनुर्वेदादिभिश्च जमदग्निना व्यनीयत। मृगावती च वात्सल्यस्नेहात्स्वकराकृष्टसहस्रानीकनामाङ्कित कटकेन तस्यकरौ वलयीकृत।

एकदाऽऽखेटके उदयनोऽटव्यां शबरगृहीत सुन्दर सर्पमेकमवलोक्य तस्मिन् दयालुस्तन्मुक्त्यर्थं शबरमभिहितवान्, किन्तु सोऽवादीत्—प्रभो, एष सर्पो मदीया जीविका। विषधरपूर्वपन्नगेन मया मन्त्रौषधिबलाद् भवद्दृष्टोऽयमटव्यामुपलब्ध। इम खेलायन्नेवाह वर्ते। एतदाकर्ण्य त्यागी उदयनस्त जननीदत्त कटक तस्मै शबराय दत्वा पन्नग तममोचयत्।

गृहीतकटके च गते शबरेऽतिप्रीत पन्नग उदयनमुवाच—'महात्मन्, अह वासुकेर्ज्यायान् भ्राता वसुनेमिर्नाम, त्वमिमा मत्सरचितां वीणां गृहाण, एव सेनोक्त आत्तवीणोऽतिप्रीणं उदयन स्वमातरमागात्। इत स शबरश्चोदयन प्रदत्त राजनामाङ्कित कटक विपणौ विक्रीणानो राजपुरुषैर्निगृह्येनैसभमानीत, 'कुतस्त्वयैष कटक उपलब्ध' इति राज्ञा सहस्रानीकेन सद्य स पृष्टः शबरस्तदा गमप्रकार सविस्तर वर्णयामास, तदानीमेव दिव्यया वाण्या 'राजन्नधुना स ते पाप क्षीण, जमदग्न्याश्रमे त्वदीया जाया मृगावतीदानीं पुत्रवती वर्तते' इत्युक्तः सहस्रानीकः समुपलभ्य प्रियजायाजातोदन्तोऽनुभूतातिमुत्कः, प्रियतमा वाप्तिसमुत्क, स शबरमेव पुरस्कृत्यापरेद्युरुदयाचलमनुप्रतस्थे।

अथ समतिक्रान्तदवीयोऽध्वनेऽनुभूयमानातिश्रान्तये दिने तस्मिन्नेकस्मिन् कासारतटे कृतवसतये, भूपतये साय सेवासलग्न सगतकाभिध कथक काञ्चन मनोविनोदिनीं कथां कथयितुम् प्रतिश्रुण्वन्नवादीत् 'देव, अलमात्यनुतापेन; आसन्न एव ते देव्याः संगमः। सयोगवियोगसूत्रसम्बद्धा हि प्राणिन इत्येतत्सम्बन्धी कथामेकां शृणु—

एव ब्रुवाणाय सगतकायानुशृण्वन् नृपतिविस्तरेणेमां कथां श्रोतुमवहितमना

---

१ एषधातो दानचि आने मुक्। २ पन्न पतित गच्छतीति विग्रहे 'सवत्रपन्नयोरुपसख्यानम्' इति ड'। ३ सम्बृधानुरूपेति विग्रुन्। ४ दवा दिव्यः इति भावे, णत्वम्। ५. इनस्य सभेति विग्रहे 'समाराजाऽमनुष्यपूर्वा' इति नपुसकत्वम्। ६. 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इति चतुर्थी। ७ 'अनुप्रतिगृणश्च'।

बभूव— आसीत् पुरा मालवे यज्ञसोमाख्यो विप्र । तस्य कालनेमि विगतभयना मानौ द्वावतिजनप्रियौ पुत्रावुत्पन्नौ, पितरि मृते तौ सीर्णशैशवौ भ्रातरौ विद्याप्राप्ति कामनया पाटलिपुत्रक प्रययतुः । तत्र समुपात्तविद्ययोस्तयोस्तदुपाध्यायस्य देवशर्मण सुताभ्यां परिणीतयोश्च तयोः कालनेमिरितरांस्तत्रत्यान् धनाढ्यानव लोक्येर्ष्यापर कृतमतोऽयुत्तमैराहवनीयद्रव्यैर्लक्ष्मीमियाज, स तुष्टा च सा साक्षात्समभाषत—'त्वमनल्प धन सार्वभौम पुत्रञ्च समवाप्स्यसि, किन्त्वमर्थ कलुषितात्मवृत्तिर्हि श्रियं[3] त्वमहौषीरिति चौरसदृशो वधोऽन्ते ते भविष्यति', एवमुक्त्वा श्री[4]रन्तरधात् ।

कालक्रमेण कालनेमिरप्यपरिमितधन समुत्पन्नसूनुश्च सञ्जातः, पुत्रस्य च श्रीव राप्राप्तिमाकलय्य श्रियै[5] श्लाघमान कालनेमिस्तस्य श्रीदत्त इति नाम चक्रे। क्रमा द्यौवनमवाप्तो[6] श्रीदत्तो, विप्र सन्नप्यस्त्रेषु, बाहुयुद्धेषु, चाप्रतिमः पृथिव्यां संवृत्तः । कालनेमेर्भ्रातुर्विगतभयस्य च भार्या भुजङ्गदष्टा नष्टेति तीर्थार्थी स देशान्तरमियाय, कालनेमिपुत्रस्य श्रीदत्तस्य च तदानींतनगुणसम्पूर्णतेर्वल्लभशक्तेः पुत्रेण विक्रम शक्तिना मैत्री समजायत, किन्त्वतितरस्विनतया, तस्याभिमानितेन दुर्योधन- भीमयोरिवानयो सहवास शैशवे समवर्तत, अनन्तरञ्च विप्रस्तस्य बाहुशालि बाहुशालिनामानौ द्वावपन्तिजौ क्षत्रियौ मित्रतापन्नौ, अथान्येऽपि गुणग्राहिणो दाक्षिणात्या मन्त्रिपुत्राश्चास्य मैत्रीमापन्ना ।

एकस्मिन् प्रावृषि[6]के दिने श्रीदत्तः सराजपुत्रः सान्मसिन्नश्च सिद्यूषु भागीरथी- तटमाटत् । तत्र राजपुत्रभृत्यास्त राजसुत स्वनृप चक्रुरिति श्रीदत्तोऽपि तत्काल निजमित्रै राजा कल्पित', एतेन सञ्जातरोषो राजपुत्र आहवान तामात्य मनीषं विप्रवीरम् आजुहाव। किन्तु श्रीदत्तेन बाहुयुद्धे राजपुत्रो निर्जित इति मानान्तरेण सम्भूयो राजपुत्रस्तमजिघांसत् । राजपुत्रस्यैतदभिप्राय ज्ञात्वा शङ्कितः श्रीदत्तः समित्रस्ततस्समीपादपासरन् मध्ये गङ्गाजलौघन ह्रियमाणां कांचित् स्त्रियमवलोक्य जलात्तामुद्दिधीर्षुर्बाहुशालिप्रभृतीन् पश्चात् स्थापयित्वा स्वयं तरङ्गिणी

---

१ 'यस्य च भावेन भावलक्षणम्' । २. 'कर्मणा यमभिप्रैति स सम्प्रदानस्य च कर्म सञ्ज्ञा' । ३ 'क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्' । ४ श्रियमाश्रयन्ती श्रीयते वा विपत्सु या येति श्रिधातोः क्विप्, दीर्घश्च । ५ 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' श्रिय श्लाघते स्वयं । ६ 'प्रावृषष्ठप्' ।

सार्थिको[1] मार्गे विश्राम कुर्वंस्तस्मा मृगावतीमाच्छिद्याश्वमारोह्य सत्वरमितरो बभूव। श्रीदत्तस्तमनुसरन् साम्ना कार्यस्य सिद्धिमनाकलय्य 'चोर! चोर![3]' अलमहं तुभ्यमिति कृपणाय मन्यमानोऽहं त्वामेव हन्मीत्युक्त्वा पादैकगुल्फेन तमा गृह्णानो भ्रामयित्वा पाषाणे चैकस्मिन्निक्षिप्य सञ्चूर्णयन्नन्येषां परेषामधिकां दिशि दिशि कांदिशीकतां दिदेश। समुपात्ततरसाश्वि मृगावत्या सह पुरस्ससार। किन्तु नातिदविष्ठमार्गगमनानन्तरमेव प्रणित पतितोऽश्वोऽसून् विजहौ। एतस्मिन्नेवावसरे मृगावती उदन्याजन्यातिकष्टपीडिताऽभवदिति श्रीदत्तस्तां तत्रैव परित्यज्य प्रतिपदं पयःपर्यन्वेषणपरोऽपि नाऽऽसाद्य सलिलं समवाप। अस्तमिते च भगवति गभस्तिमति समवाप्तसलिलोऽपि परावर्तमानो मार्गं परिभ्रष्टोऽटव्यामटाट्यापर एव स्वपितस्तत्र प्रातस्तत्रागतो मृगावतीविरहितं तत्स्थानमवलोक्य भूमिस्थापितनिजखड्गमृगाङ्कस्तामितस्ततोऽवलोकयितुं वृक्षमेकमारुरोह। एतस्मिन्नेव काले तेनैव पथा गच्छन्नेकः शबरस्तस्य तं खड्गमुपाददाविति तमवलोक्य वृक्षादवरुह्य श्रीदत्तस्तस्मा मृगावतीवृत्तान्तमपृच्छत्। शबरोऽवादीत्, यत्सा मम पुरे वसते, त्वमेभिर्मम सार्थिभिस्तत्पुराय गच्छ। अहं तत्रैवागत्य तव खड्गमिमं दास्यामीति। एतदाकर्ण्य तत्र गतः श्रीदत्तोऽध्वपरिश्रान्त्या क्षणं निदद्रौ। सुप्तोत्थितश्च स निगडितपादमात्मानमुपलभ्यातिचिन्तापरवशस्तत्रागतया मोचनिकानामकभुजिष्ययाऽभिहितो यदिहागच्छता त्वया न समीचीनमाचरितमिति। कार्यपरवशोऽनायः स शबरः श्रीचण्डनामकोऽद्य बहिर्गतः। आगमनसमकालमेव स ते देहेन देव्यै बलिमुपहरिष्यति। एतदर्थमेव त्वमिह विन्ध्यान्तीतः समानीतः। अस्तीदानीमेक एव तव मोचोपायो यत्[1] सुन्दरीनामधेयायास्तदवलोकनमदनविह्वलोपनेयायास्तच्छबरसुताया आकाङ्क्षां पूरयेः। एतदाकर्ण्य सुमुखैकोद्देश्यः श्रीदत्तश्चेटीकथनमेव तत्कालोचित

१ सक्तिनाचरतीत्यर्थे 'चरति' इत्यनेन ठक्। २ 'इण् नशजिसर्तिभ्यः क्वरप्'। ३ वाक्यादेरामन्त्रितस्येति भर्त्सने द्वित्वम्। ४ नमःस्वस्तिस्वाहेति चतुर्थी। ५ 'तृणे च जातौ' इति को कत्वादेशो 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति चतुर्थी। ६ मयूरव्यंसकादित्वात् सिद्धिः। ७ 'सहयुक्तेऽप्रधाने'। ८ गत्यर्थकर्मणीति चतुर्थी। ९ 'क्षिपिपूञ्जिपचिकुशिविपधात्र' इत्यच्।

मन्यमानो गान्धर्वेण विधिना तां हस्तेकृत्य[1] प्रतिनिश च तया सह रममाण सस्नेहमनेहसमत्यवाहयत् ।

अथ कालेनान्त सत्वा सुन्दरी प्रकाशिताखिलतत्त्वा स्वमातर कृत्वा जामातृ प्रेमपरायत्तया तया श्रीदत्त मोचितवती । तत शिप्र निगमनार्थं च निर्दिशन्ती तज्ज ननी, निर्गमनसमये 'न त्वया सुन्दरी विस्मृतिपथातिथीकरणीयेति' तमवोचत् । श्रीदत्तोऽपि च मदीय खड्गस्तव पित्रा गृहीत इति सुन्दरीमुखात्[2] तस्मात् प्रस्थितो मृगावतीं मृगयमाण पुनरपि स्वाश्रा तिमनिश्वासस्थलमवाप । तत्र चागच्छन्त मेक व्याध प्रदत्तमृगाङ्कवतीपरिचयस्त्वयैवभूताभिजाता काचिन्नारी समवलोकि ता भवेदित्यपृच्छत् । व्याधोऽवादीत्-'आम्, तामह जानामि, श्वापदचौरादिभ्यो[3] भीतैकाकिनी साऽस्मात्स्थानात् स्वपुर नीता । किन्तु युवकशबराकीर्णमेतत्पुर मेवभूताया युवते कृतऽसुरक्षितमित्यवगच्छता मयोपमथुर नागस्थलनामक ग्रामे धर्मादप्रमाद्यतो[4] विश्वदत्तनामकस्थविरविप्रस्य गृहे निक्षेपरूपेण स्थापिता वर्तते । तदाकर्ण्य नागस्थलमागतो विश्वदत्तयाचितनिजपत्नीक श्रीदत्तो विश्व दत्तेनाभिहितो यन्मया सा राज्ञ शूरसेनस्य मन्त्रिपुरोहितगृहे निवासितेति त्वमिहैवाद्य तिष्ठ, प्रातस्तरा तत्र गन्ताऽसीति समाकर्ण्य श्रीदत्तस्तत्र क्षपितसत्त मिस्त्र स्वभिपापर्यन्वेषणपरिश्रमादपराजयमान[5] प्रातर्मथुरामायया । तत्र नगरा द्वहिरेकस्यां वाप्या दीर्घाध्वमलिनमालिन्यापचिकीर्षया सिस्नासुरवतीर्णश्चौरनिवे शितमम्बलवद्धहार वस्त्रमेकमलभत । तदादायालक्षितवद्धहार प्रियां दिदृक्षु श्रीदत्त मथुरां प्रविवेश । तत्र नगररक्षिभिरतद्वस्त्रप्रत्यभिज्ञानपूर्वकहारावाप्त्या चौरोऽयमित्यवष्टभ्य नगराधिपसमीपमानीतो वधायादिष्टः । परेद्यवि पश्चात्प्रहत डिण्डिम वध्यभूमिं नीयमान त राजमार्गे मृगावत्यवलोक्य मन्त्रिमुख्यमाचष्ट यदय मे भर्ता वध्यभूमिं नीयते । एतदाकर्ण्य राजान विज्ञाप्य वधकर्मात्[6] तद्वधा न्निवार्य स मन्त्री श्रीदत्तमात्मगृहमानयत् । पारस्परिकसलापप्रसङ्गेन सजाते च पारस्परिकपरिचये, श्रीदत्तः स्वपितृव्यपादयोरपतत् । अवर्णयच्चाखिलमुदन्तम् । सोऽपि चावोचत्-'पुत्र, मा भैषी , समैका यक्षिणी सिद्धा । सा मह्य सहस्रपद्मक

1 'नित्य हस्तेपाणावुपयमने' । २ 'अपादाने पञ्चमी' । ३ 'भीत्रार्थाना भयहेतु ' । ४ 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' । ५ 'पराजेरसोढ ' । ६ 'वारणार्थानामीप्सित ' ।

मधानाम्, कोटिसहकाश स्वर्णस्याद्वाद्यिपुत्रस्य मे तद् फेयोपयोग मारयतीति सर्वं तत्तवैव। एतदुक्त्या स श्रीदत्ताय तथियां मृगावतीं दर्वैकान्ते समेवमयो चद्। अस्य राज्ञः शूरसेनस्य सुताऽवन्तिदेशे नेतव्या, तदाज्ञया तत्र देया चेत्ये तेनैवापदेशेनैनां नीत्वा तुभ्य दास्यामीति तदनुरो चले सम्प्राहे, मयि च तत्र वर्तमाने, श्रिया समाविष्टमचिरेणैव त्व राज्यमवाप्स्यसीति। इतीतस्त्रिमयौ तौ पितृव्यभ्रातृष्पुत्रौ शूरसेनसुतामादाय तत प्रस्थितौ। मार्गे विन्ध्याटव्याम कस्माद्घोरशवरसेनया महत्या शरवर्षिण्याऽवरुद्धाविप्युभयत शस्त्रमपात् तत्र वृत्ते, विहृताऽपसैन्य प्रहारमूर्च्छितस्तस्करापहृतसवस्वः, श्रीदत्त शवरपल्लीं नीतः। तत्र च सोपणे चण्डिकासद्म्युपहाराय समानीत त देवीदर्शनार्थमागता ससुता तत्पल्लीपतिसुता सुन्दरी समपश्यत्। तत्र परिचितनिजपतिका सा सर्वान् दस्यूनपवार्य परमानन्दतुन्दिनी त निजसद्मानयत्। तत्र तयाँकारोषा नन्यसन्तते दिव गच्छतो निजपितु समवाप्त सराज्य स्वोपतेय तदीय मृगाङ्क खङ्गञ्चेति तत्रैव परिणीतसूरसेनसुतः कालनेमिसुत ( श्रीदत्तः ) तन्नगरनरेशः समपद्यत। अथ च प्रैष्य प्रेष्य समाहूतौ विम्बकिसूरसेनावपि ससेनौ तत्रायातात्र वधूद्वसम्पन्धौ परमानन्दमविन्देताम्। ताभ्यां श्वशुराभ्यां सहितेनैव च श्रीदत्तेन जनकवधजन्यमन्युहुताशनोऽपि विक्रमशवरयाहुत्या सन्तर्पितः। एवमुत्तीर्णसकल वियोगव्यसनार्णव श्रीदत्तोऽखिलवलयां मेदिनीमवाप्य मृगावत्या सह भुव बुभोज।

इत्थ धीरधारयां अपारयाऽऽत्मशक्त्या समुत्तीर्णव्यसनाकूपाराः कल्याणतट मोजोमयन्तीति तवापि श्वः परश्वो वावश्य देवीसङ्गमसम्भव।

सुगतकमुखादेवमाकर्णितकथो नृपः सहयानीको दयितासयोगसमुत्सुको नीतनिश प्रातरेव प्रियां प्रति प्रस्थितस्तस्मात् स्थानाद् योजनानि वर्तमान जमदग्नेराश्रम कतिपयैरेव प्रयाणकैरवाप। तत्र स मुनिं प्रणम्य स्वीकृतसत्कृता शिष्य आसने समुपाविशत्। मुनिरपि च तस्मै राज्ञे सतनयां तापसीं मृगावतीं

---

१ अविद्यमानपुत्रस्य (नि गन्ततेरिति भाव)। २ 'एवेचानियोग' इति पररूपम्। ३ 'तुन्दादिभ्य इलचे'त्यत्र चकारादिनिस्ततो ङीप्। ४ 'देयेत्रा च 'तदधीनमकरोदिति भाव'। ५ 'पष्यतिधिवसतिस्वपतेर्ढम्'। ६ 'भुजोऽनवने' इत्यात्मनेपदनियमाद्रक्षणार्थे परस्मैपदम्। ७ 'अनुपसर्गाल्लिम्पविन्दधारिपारि'-इत्यादिना श। ८ 'भजो ण्विः'। ९ 'यतश्चाध्वकालनिर्माण तत्र पञ्चमी', 'तद्युक्तादध्वन प्रथमा सप्तम्यौ'।

समर्पयामासेति शापावग्रहविदीर्णभियहृदयस्थल सयोगानन्दामृतधारासारेण पङ्किलत्वमापेदे ।

अन्येद्यू राजा सहस्रानीको जमदग्निमामन्त्र्य सजायाजातस्तस्माद्दाश्रमाच्च स्थितः क्रमात्कौशाम्बीमवाप्य स्वमन्त्रिपुत्रवसन्तकरुमण्वद्योगन्धरायणसहायके स्वयमीय सूनावुदयने न्यस्तभारो वर्षीय सचिवप्रियतमासहायो महाप्रस्थानाय द्रुत हिमगिरिमशिश्रियत् ।

वासवदत्तया सह विवाह

इत्थमवाप्तवत्सराज्योदयनो, यौगन्धरायणाविविश्वस्तसमस्तमन्त्रिवर्गविन्यस्तराज्यभारो, मृगयायां, विशेषेण हस्तियन्धने, वसुनेमिप्रदत्तघोषवतीवीणावादने वा समयमतिवाहयन् 'नन्मे कुलानुरूपा भार्या वर्तते, एका वासवदत्ताख्या चण्डमहासेनसुतोज्जयिन्यां वर्तते कथ सा प्राप्येति' चिन्तातुरोऽभवत् । तत्र चण्डमहासेनश्चापि मद्दुहितुरनुरूप क्वापि कोऽपिभर्त्ताऽत्र भुवि नावलोक्यते, एकश्चास्त्युदयननामक स तु मे विपक्ष इति कथ स मे वश्यो जामाता च भवेदिति विचारपरायणोऽभवत् । एव विचिन्तयँश्चण्डमहासेनश्चण्डी-मन्दिरमागत्याभ्यर्चितचण्डीक 'राजन्नेतत्तव वाञ्छितमचिरेण सम्पत्स्यत' इत्य शरीरिणीं वाचमश्रौषीत् । एतेन सुसन्तुष्टो नृपतिर्निजसदनमागत्य मन्त्रिबुद्धदत्तप्रदत्तपरामृष्टिमनुसृत्य पूर्वं साम्नैव कार्यसाफल्यमाकलयन् कदय एवानल्पचतुरिमजल्पाक प्रैषमेकमुदयन प्रति प्रहिण्वन्नैदम्पर्यमादिदेश–'दूत, मद्वचनादुदयनो वाच्यो यन्मदीया पुत्री गान्धर्वे तव शिष्या बुभूषुरिति स्नेहश्चेदस्मासु ते स्याद स्मत्सदनमासाद्येहैव सा शिक्षेणिमेति' । प्रैष्यश्च स्वकर्णदेशाध्वनीनीकृततन्निदेशः कौशाम्बीमनुप्राप्योदयनमवगतचण्डमहासेनस देशमकरोत् । समाकर्णितासाशिष्टजनोचिततद्वचोऽनुभूतावमाननो वत्सराजश्च 'त्वत्पुत्री मच्छिष्यतांम् अभिलाषुका चेदिहैव प्रहेतव्या सेति प्रतिसमादिशन्नपि त कौशाम्बीमानिनीषुश्चण्डसेनमभिषेणयितुम् यौगन्धरायणेन सम सममन्त्रयत् । पर तच्छुभेच्छुनाऽमुनाऽधुना महाराज, नैतत्साम्प्रतम्; महाप्रभाववान् हि चण्डमहासेन , राजन्वती चोज्जयिनी तेनैव जनैरुच्यते । तद्गत किञ्चिदुपवर्ण्यमान मया श्रुतिपथमवतार्यताम् इति सदभिप्रायेण विपानिषिषेध विपुणाऽवाचि—

---

१ 'लपपतपद'–इत्यादिना उकञ्, 'न लोकाव्ययनिष्ठेति' षष्ठीनिषेधः ।

अस्ति सुधाधवलितप्रासादा प्रस्फुरन्नानावर्णपताकाभिरुपहसन्तीवामरावतीमुज्जयिनी नाम नगरी। तत्र शास्त्यग राजा महासेनो राजसेनिः। स चायमेकदा न मेऽनुरूप खड्गो नापि च कुलोद्भवा भार्येति चिन्ताकुलश्चण्डिकामन्दिरमागत्य निराहारश्चिर चण्डिकामाराधयन्नुरुरक्तयोः कृत्य स्वमक्ष्येण हव्यवाहनमयष्ट। तेनातिप्रीता देवी कात्यायनी खड्गमेकमस्मै ददती समुवाच—'पुत्र प्रीताऽस्मि ते, गृहाणेममसिमस्यसेरस्य साहाय्येन परापराजेयस्त्वम्। किञ्च, अचिरादेव त्व त्रैलोक्यसुन्दरीमङ्गारकासुरसुतामङ्गारवतीं भार्यामवाप्स्यसि। यतो हि त्वया स्वमांसदानरूपमतीव चण्ड कर्म कृतमित्यद्य प्रभृति चण्डमहासेन इत्याख्यया ख्यास्यसीति। एवमुक्त्वा प्रदत्तखड्गा देवी समतिरस्यत्। राजा च निजप्रागाद्मासाद्य तत्खड्गप्रभावेणैरावणकल्पस्वकीयनडागिरिगजसाहाय्येन च सशुन्तिवमञ्जुपाध्याये[3]भ्यो विविधशास्त्रोपदेशानाददानोऽवर्तत।

एकदा स मृगयायै वन गतोऽकाण्डपिण्डितनैश तम इव दिवा, घोरघोणघोणिनमेकमविलपयीचकार। प्रखरतरशरैराहतोऽपि शूकरोऽनवाप्तेर्मं एव पलायमानो विलमेकमविशत्। समुत्पुष्टस्यन्दनो जयसेनन दत्तोऽपि गृहीतधरामा शूकरमनुसरन् सुविरान्तर प्रविश्य नगरवरमेकमपश्यत्। तदन्तर्दीर्घिकातटे सविस्मय निपार्द्धातिसुन्दरीं कन्यकामेकामवालोकत। सा च राजानमालोक्य प्रेमरसासारवर्षिणा चक्षुषा स्नपयन्तीव सद्रतिकमागत्य, 'कस्त्वम्' कस्मात् कुत आयात' इत्यादि प्रश्नानन्तरमवासयधाताबोत्तरा विमुक्तधैर्यं रोदितुमारभत। रोदनहेतुमनुयुक्ता च साऽब्रवीत्—योऽयं वराहोऽत्र प्रविष्ट सोऽङ्गारकाभिधो दैत्यः। अहमस्माज्जाताऽङ्गारवतीनामा कन्या। अय हि शापदोषाप्राप्तसीभूतो वज्रमयो महासुरस्तृष्णाश्रमात् इति भवन्त प्राप्तमपि परित्यज्य परित्यक्तवराहरूप क्षणं शय्यायां विश्राम्यति। सुप्तोत्थितस्त्वामिव ते श्रेयः इति निश्चयचमनुचिन्तयन्त्या मेऽन्त सन्तापक्वथिताः प्राणा बाष्पविन्दुरूपेण गच्छन्ति। श्रुतैतद्ङ्गारवतीवचनो राजा, स्नेहस्ते मयि चेत्प्रवृद्धस्तर्ह्याप्रे त्य

---

१ 'यजेः कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञेतिवाच्यम्'। २ 'सपत्रलोहितादिकृतन्तेभ्य'। ३ 'आख्यातोपयोगे'। ४ 'ऊर्ध्वमुविशुष्कमपोर', 'मयूरव्यसकादयश्च'। ५ 'नतिकर्तुः प्रकृतिः'। ६ 'त्यन्तोरे चर्मण्यधिकरणे च' (शय्यायामुपविश्येति भाव)।

रुदिहि। रोदनहेतुमनुयुञ्जानं च तं 'केनापि त्वयि व्यापादिते का मे गतिर्भवेत्' इति रोदनहेतुञ्च तं चद। एवमुक्त्वा साऽसुरायणी[1] यथानिदिष्टमुपरन्ती पित्रा प्रत्युदतारि पुत्रि मामिके[2], सर्वं हि मामकीनं शरीरं दम्भोलिघटितम् एकञ्च वामकरे छिद्रं तच्चापि चापेन रक्ष्यते। एवं स्वसुतामाश्वासयतो दैत्यस्य सर्वं भेदं तत्रैव तस्मान्निलीनो[3] नृपः समाकर्णयामास।

तदनन्तरं स दैत्य उत्थाय स्नातः कृतमौनो भगवन्तं हरं पूजयितुं प्रववृते। एतस्मिन्नेवान्तरे समाकृष्टशरासनेन नृपेण तत्रोपेत्य स दैत्यः रणायाहूयमानः समुत्थितवामहस्तरन्ध्रं क्षणं प्रतीक्षितुमसमर्केतदिति समवाप्तधनुर्विद्याविशारदिम्ना राज्ञा तस्मिन्नेव मर्मस्थले पृषत्केनैकेन हतो घोरं रावं कुर्वन्निरसुरवन्यां न्यपप्तत्। राजा चापि सममङ्गारवत्योज्जयिनीमागत्य परिणीय च तां तत्र तस्यां पालक गोपालकनामानौ द्वौ पुत्रौ समुत्पादयामास। ततस्तेन तुष्टसुरापाट् स्वप्नेऽवोचत् यत् मत्प्रसादादनन्यसदृशीं त्वमेकां सुतां समवाप्स्यसीति कालेनोत्पन्नायां तस्यां व्योमवाणी तस्या[4] प्रभविष्यन्तं सुतं रतिपत्यवतारं विद्याधराधिपमाशु चा सुसूचत्। एतेनातितुष्टो राजा स्वप्ने वासवेन दत्ततया स्वप्नवासवदत्तेति तत्तनयानाम चकार। रतेः[6] प्रति सा चाद्य तद्गृहे मन्थनात्प्राग् रत्नाकरे वर्तमाना कमलेव विष्णवे प्रदेयत्वेन तिष्ठति।

एवंविधप्रभावश्चण्डसेनो न सारल्येन पर्य्यंलौकिकशक्तेर्जय्यः किन्तु स वीर्याहे तां तुभ्यं दित्सति निजकौलीन्यस्य गौरवाद्बद्धोऽमूल्यकन्यारत्नेन त्वां लोभयितुं तच्छिक्षणव्याजेन तत्राकारयति चेति।

इत्थमाकर्णितवासवदत्तोदयनोदयनः सपदि तद्वाहृतहृदयोऽपि निजमहाकुलीनपथाच्च स्तोकात्[11] प्रच्यचलत्।

इतो दूतमुखश्रुतवत्सेशप्रतिश्रुतप्रतिवाचिकश्चण्डमहासेनः कन्याप्रेषणे स्वछा

१ 'आसुरेरुपसंख्यानम्' इति ष्फे षित्वात् ङीप्। २ 'मामकनरकयो रुपसंख्यानम्'। ३ 'अन्तर्धौ येनादर्शनमिच्छति'। ४ वर्णदृढादिभ्यः ष्यञ्चे'यत्र चादिमनिच्। ५ 'भुव प्रभव'। ६ 'प्रति प्रतिनिधिप्रतिदानयो', 'प्रतिनिधिप्रतिदाने च यस्मात्'। ७ 'अन्यारादितरर्त०। ८ 'अपपरी वर्जने', 'पञ्चम्यपाङ्परिभि'। ९ 'उपसर्गस्य' घञ्यमनुष्ये बहुलम्'। १० विभाषा गुणेऽस्त्रियाम्। ११ 'करणे च स्तोकाल्प०'। १२ 'वाचो व्याहृतार्थायाम्' इति स्वार्थे ठक्।

र्थैवम् श्रुते वत्सेशात्[1] स्वकन्याविषयाभिलाषापूरकानुकूलवरान्तरमपश्यन् उदयन प्राध्वंकृत्य[3] तत्रानयनमेव च कार्मणम्[4] आकलयन् विहितस्वमन्त्रिपरामर्शो निज हस्तिनडागिरिसदृशम् दारुयन्त्रमयं महान्तं करिणमेकं कारयित्वा विन्ध्याटव्यां समतिष्ठिपत् । अन्तःप्रच्छन्नसैन्यं विन्ध्याटव्यां च दारुमययन्त्रबलेनेतस्ततः सञ्चरन्तं गजमालोक्य तद्वन्यधनरसासक्तोदयनोपजीविनः सत्वरमागत्य देव, विन्ध्य[5]वनादारात् भ्रमन्निरस्माभिरेको अङ्गमोऽचल इव मित[6]ङ्गमोऽपूर्वोऽवलोकित इति व्याजह्रुः । समाकर्णितचारचारवचो[7] विचारदक्षोऽपि तदानीमविचारदक्ष इव देवो वत्सराजः सुवर्णलक्षेण तच्चारान् सन्तोष्य 'नडागिरिप्रतिमल्लं तं लभेय चण्डसेनो ध्रुवमस्मद्वशम्वदतां स्वीकुर्यात्' इति तत्प्राप्तिचिन्तापर एव तां निशामनैषीत् । प्रातश्च गजलिप्सयाऽनालोडितमन्त्रिगणालोडितैः[9] ससैन्यः पुरस्कृततत्प वञ्चकचारो[10] बहिर्नगरा[11]न्निर्गत्यागत्य च विन्ध्याटवीमिभक्षोभाशङ्कया दूरापसारित सकलसैनिकः, घोषवतीं वीणा[12] द्वित्रमात्रसहायो विवेश विविधानोकहलता गुल्मादिविस्तीर्णामरण्यानीम् । तत्रोपवीणय्यैकाकी तद्गजप्रबन्धविचारादान्त स्वान्त स्वच्छन्दं तद्वशात्परिलक्षितमायागजो गीतरसाभिभूतेनोत्कीर्णवालेनोपेत्योपेत्य विघल्लता च कृत्रिमगजेन तत्संहार्ये[13] पृथक् कृत्वा चण्डमहासेनसाम्राज्य सीमायाँ[14] सुदूरमाकृष्टोऽकस्मात्तत्र यन्त्रमयाद् गजादपि स्वस्य सन्नद्धैः पुरुषैः परिवारितः सद्याकृष्टासिरप्रस्थानसमर्थोऽपि[15] पश्चादागत्यान्यैः सैन्यैर्निगृहीतश्चण्डसेनान्तिकमानीयत । चण्डमहासेनोऽपि सावज्ञस्तमुद्दन्तो, निर्जयुके[16] सुहितः, सतां[17] गत

---

१ 'इगन्ताच्च लघुपूर्वात्' । २ अन्यारादितरर्ते° । ३ 'प्राध्वं बन्धने' (प्राध्वमित्येतदव्ययं बन्धनेनानुकूल्येवर्तते ) । ४ 'तद्युक्तात्कर्मणोऽण्' इति स्वार्थे अण्, वाचिक श्रुत्वा क्रियमाणं कर्मेत्यर्थः । ५. अन्यारादितरर्ते° । ६ गमश्चेति खच् । ७ 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इति युचोऽपवादोऽङ् । ८ चिन्तिपूजि° । ९ आलोडित बाधा विमर्दः । १० तत्र कुशलः पथः इति वुन् । ११ 'अपपरिबहिरञ्चवः पञ्चम्ये'ति समासविधानसामर्थ्यात् 'बहिर्योगे पञ्चमी । १२ वीणयोपगायन् । १३ 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' । १४ 'दूरान्तिकार्थेभ्यो द्वितीया च । १५. 'कर्तृकरणाद्धात्वर्थे' इति गणसूत्रेण असि माहन्तीति विग्रहे णिचि, डाप् । १६ पूरणगुणसुहितार्थेति समासनिषेधः । १७ 'षष्ठी शेषे' ।

मनुसरणच्छ्रगर्यीवच्छोध च विनीतवचन, कृतवत्सराजादरादरो, वत्सेशेन[1] समम् प्राविशदुज्जयिनीम् ।

इतस्तदार्जवाह्लादा पौरा हर्षाद् यद्दमिव वत्सेशमाकर्ण्य प्राणपणेनापि तन्मोचनकृतनिश्चया समवेत्य राजद्वार समागत्य केन हेतुना[2] वत्सेशो निगृहीत इति कोलाहल कुर्वाणा नितरामक्षुभ्यन्। किन्तु चण्डमहासेनो न मया वत्सेशो हन्तव्योऽपि तु सन्धातव्य इति तान् समाश्वास्य तत्क्षणमेव स्वसुता वासवदत्ता तस्मै गान्धर्वशिक्षाया[4] हेतो समार्पयत्। उवाच च वत्सेशम्—'शिक्षयमाणो गन्धर्वविद्या त्वमेनकौ[5] मे न का मूर्ति समवाप्स्यसीति मा वृथा विषाद कृथा । उदयनोऽपि च तदेव तत्कालोचित मन्यमान शिष्यत्वेन वासवदत्ता स्वीकृत्य ता तद्गतेक्षणो गापयन्, स्वसमय यापयन्, तदवलोकनोपजातस्नेहो, विस्मृत चण्डसेनकृतमन्युजन्यमन्युः, प्रासादमुत्तरेण तस्य निकटमेव निर्मापितगान्धर्व शालमध्युवास। वासवदत्ताऽपि च तत् परिचर्यापरायणा गन्धर्वविद्याया[11] ज्ञानेऽस्ये शाना विस्मृतान्यव्यापारा वीणावादनकलाया[13] विशेषेण नाथते स्म ।

इतो वत्सराजानुचरेषु परावृत्य कौशाम्बीमायातेषु सर्वं तदनुरागपरायणं तत्राष्ट्र स्वप्रभु यद्द क्षुद्राऽतिक्रुद्ध सचण्डमहासेनं स्योज्जयिन्यामुज्जासन वत्सेश स्योजसन चैव स्वप्राणाना सत्पणनमाकलयति स्म । किन्तु माऽमूल्याना प्राणाना दीव्यत, मा च स्वतनूना मांस्यसृञ्जि च छागस्य वपाया मेदसो[17] यथा चण्डमहासाहवाहावाय प्रेष्यतेति बहुकालस्तस्य स्थिरस्य ब्रुवाणेन रुमण्वता सर्वे तत्रा

---

१ 'अच्छगत्यर्थवदेषु'। २ 'सहयुक्तेऽप्रधाने'। ३. 'अकर्तर्यृणे पञ्चमी'। ४ 'सर्वनाम्नस्तृतीया च'। ५ हेतुशब्दप्रयोगे' 'षष्ठीहेतुप्रयोगे' इत्यनेन षष्ठी। ६ 'अव्ययसर्वनाम्नामकच् प्राक्टे'। ७ 'त्वे च' इति टापो ह्रस्व । ८. 'एनपा द्वितीया'। ९ 'दूरान्तिकार्थै पञ्चम्यन्यतरस्याम्। १० विभाषा सेनेतिनपुसकत्वे 'उपान्वध्याङ्वस'। ११ 'ज्ञोऽविदर्थस्य करणे' १२ 'अधीगर्थदयेशाकर्मणि'। १३ 'आशिषि नाथ'। १४ जासिनिप्रहण० ( जसु हिंसायां चुरादि, जसु मोक्षणे दिवादिश्चेत्युभयोरत्र क्रमश प्रयोग )। १५ 'व्यवहृपणो समर्थयो'। १६ 'दिवस्तदर्थस्य। १७ 'प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ( अत्र वपामेदसो हविर्विशेषवाचकत्वेन षष्ठी, मांसासृक्शब्दयोश्च तथात्वाभावाद् द्वितीया । १८ 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे'।

ह्रिया क्षोभान्न्यवर्तत । धीरो यौगन्धरायणश्चानुरक्तमेव राष्ट्रमवलोक्य भवत्सु भवतां स्थितिरिहैव, यूयं हि राष्ट्रस्य रक्षितार । वत्सराजद्वितीयोऽहं त्वया प्रज्ञया वत्सेशं मोचयित्वा निःसहाय कौशाम्बीमानेता । नास्याश्चर्या वत्सेशस्य निर्मोक्षो भवता । विभिन्नसायां हि सजातायां प्राकारस्य, कस्यचिद्वि गहस्य याऽवलोक्यते तदानीमेव मे तस्य भेदिका । विचित्रा च मे दर्शनस्य शक्तिरिति ब्रुवाणो यौगन्धरायणो रुमण्वता मतो बुद्ध पूजितश्च, सप्रीचा वसन्तकेन कौशाम्ब्या निर्गत्य स्वप्रज्ञामिव सत्वाढ्याम् स्वनीतिमिव दुर्गमां विन्ध्याटवीं प्रविवेश । तत्र चाधोऽधोलतागहनवनवृक्षान् गच्छन्निश्चितमितस्ततो दृष्टिं प्रति क्षिपन् वसन्तक विविधारण्यरूपादिविषये इदं यातप्रभ्योमोषितम्, एतद् गमयाना शायितम्, तच्च गतां गतमेव निर्दिशन् विन्ध्यैकदेशवासिनो वासवस्य सहृतिमविदुषः सज्जुषः पुलिन्दकस्य पुलिन्दाधिपतर्गृहमागत सर्वञ्च समभिधाय सेनैव च पथा समागमिष्यन्त वत्सेशं रिरक्षिषुस्तत्र बहून् सज्जान् अरीन् घातुकान् नियुज्ययोज्जयिन्याः नरमांसाद्यैर्निः शङ्ककङ्ककुलसकुलम्, अधदग्धचिताचक्रसिमसिमायमानवसाविस्रविकटकटम्, आनन्दतनुप्रेतकपालकौकिनोकलितप्रायभयम्, महाकालश्मशानं प्राप्तवान् । तत्र च वत्सेशं द्विपत तदपहारकस्य च जिष्णोरस्य दर्शनात् भीतो योगेश्वराख्यो ब्रह्मराक्षससमासेदिवान्, उवाच चैनं

---

१ 'कर्तृकर्मणोः कृति' । २ 'तृजकाभ्यां कर्तरि' इति समासनिषेधः । ३ 'गुणकर्मणि वेष्यते' ४ 'उभयप्राप्तौ कर्मणि' इति षष्ठी तस्याश्च 'कमणि च' इति समासनिषेधः । ५, ६ 'स्त्रीप्रत्यययोरकाकारयोर्नाय नियम' ७ 'शेषे विभाषा' । ८ मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्ते 'क्तस्य च वर्तमाने' इति षष्ठी तस्याश्च 'क्तेन च पूजायाम्' इति समासनिषेध । ९ 'धिगुप र्यादिषु त्रिषु' इति द्वितीया । १० 'प्रतिपदशाश्च कृतेः' । ११ 'अधिकरणवाचि नश्च' इति षष्ठी, 'अधिकरणवाचिनाचेति' समासनिषेधः । १२ न लोकाव्ययेति षष्ठीनिषेध । १३ 'सपत्यद्व वमरष्ट्' । १४ सिमसिम इति शब्द कुवया वसया मेदसा, विस्रः आमगन्धिः, विकटः भीषणः, कट शव, यत्र 'अव्यक्ता नुकरणे डाचि बहुलं द्वे भवत' इति द्वित्वे 'लोहितादिडाज्भ्यः क्यष्', तत 'वा क्यष' इत्यात्मनेपदे शानच् । १५. 'गलादिभ्य इनिर्वाच्यः । १६ द्विप शतृर्वा । १७ 'शवे षष्ठी', न लोकाव्ययस्य कारकषष्ठ्या एव निषेधात् ।

'वत्सेश रक्षार्थमुज्जयिनीं[1] गामिना त्वया नून रूपपरिवृत्तिर्विधेयेति'। तदुपदिष्टया यौगन्धरायण सद्य एव परिवर्तितस्वरूप कुब्ज, खलति, पलित, तुन्दो[2] ऽवटीटश्चैवमविहासस्रञ्जनन संवृत्त । तथैव च युक्त्या तेन वसन्तकोऽपि सिरानद्धपृथूदरस्तुन्दिभ, दन्तुर[5], प्रज्ञुर्विप्रश्च[6] विहित ।

एव रूपपरिवर्तनपूर्वकमुज्जयिनीं प्रविश्यादौ यौगन्धरायणो वसन्तकमेव राजकुलद्वारम् प्रैषयत् । स्वय च विक्षिप्तेन सदृश स्वानुरूप नृत्यन् गायन् यक्षितरतत प्रयोजन मे सिध्यात्, शत्रुस्तश्च वत्सेश[7]स्य भूयादित्येव ध्यायन् कौतुकावलोकनपटुभिर्वटुभि परिवृतो राजगृहमाययौ। तत्र राजावरोधानां कृतकौतुक कर्णाकर्णि वासवदत्तया स्वश्रवसोरतिथित्वमानीत, चेटिकां प्रेष्य सत्वर सगीतशाले समाहूत प्रविश्य च तत्र गृहीती च्छद्मवेशो, कार्यसाधने[11] साधुर्यौगन्धरायणो बद्ध वत्सराजमवलोक्य विगलद्वाष्प सकतेनैव तस्मै स्वपरिचय ददत्निजयुक्तिबलाद् राज्ञैव केवलेन दृश्यमान: सान्त पुरपरिजनवासवदत्ताचक्षुरलक्षित 'कामुकोऽकस्मादस्मादुन्मत्तो गत'—इति वदन्ती: स्वावरोधवनिता विस्मयोद[12]न्वति न्यमज्जयत् ।

उदयनश्च कौतुकमेतदवलोक्य सर्वमेतद्यौगन्धरायणयोगबलकृतमेव इत्य वधार्य वासवदत्तां सवयस्यां सरस्वतीवरिवस्या कर्तुं विससर्ज । इत्थमवाप्तावसरो यौगन्धरायणो वत्सेश्वराय निगडभञ्जनयोगान्, वीणातन्त्रीनियोजितान् वासवदत्तावशीकरणयोगांश्च समर्पयन् द्वारि स्थित परिवर्तितवेष वसन्तक स्वस्यान्तिके[13] स्थापयितुञ्च विज्ञाप्य इदानीं तिष्ठ, विस्रम्भमायातायाञ्च वासवदत्तायां यदह वक्ष्यामि तत्त्वया कर्तव्यम् । एवमुक्त्वा सत्यपि[14] वत्सेशविप्रयोगनिबन्धनदु:खबन्धने मधु तस्मान्निर्ययौ ।

स्वल्पकालानन्तरमवसायितसपर्या वासवदत्ता सङ्गीतशालामनुप्राविशत् ।

---

१ 'अकेनोर्भविष्यदाधमर्ण्ययो' इति षष्ठीनिषेध । २ 'क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी,' 'चुल् च'। ३ नते नासिकाया सज्ञायां टीटच्०। ४ 'तुन्दिवलिवटेर्भ'। ५ 'दन्त उन्नत उरच्'। ६ 'प्रसम्यां जानुनोर्ज्ञु'। ७ 'येप्रोवक्तव्य'। ८ 'तुल्यार्थैरतुलोपमाभ्यां तृतीया च'। ९, १० चतुर्थी चाशिष्यायुष्य०। ११ 'साध्वसाधुप्रयोगे च'। १२ 'उदन्वानुदधौ च', ततोऽधिकरणे 'सप्तम्यधिकरणे च' इति सप्तमी। १३ दूरान्तिकार्थै षष्ठी०। १४ 'यस्य च भावेन भावलक्षणम्'।

मातुलपितृभूमापवतीनां देव्यौ । एवमाकर्ण्य प्रहृष्टो वत्सेशो वसन्तकोक्तसन्देशाद् विन्ध्यसानुमद्रु मुक्त निजसुहृद पुलिन्दकमारमागमनमधिगमयितुमग्रे वसन्तक प्रेष्य, दयिताद्वितीय पादचारी यावदेव तदभिमुखमेतितुमना बभूव तावदेव उच्चैर्विपक्षैः [3]पारिपन्थिकैः पूर्वपक्षैः सिद्धान्तमिव मुद्राय पर्यमियत । शरासन सहायो वत्सेशस्तदानीं, साहसिकानां तेषां पञ्चोत्तरशतं वासवदत्तायाः समक्ष मेवाघातयत् । एतस्मिन्नेव काले वसन्तकपुरस्सरं सयौगन्धरायणः ससुहृत्सु पुलिन्दकोऽप्यायात इति दस्यूनन्यान्निवार्य प्रणिपातपूर्वकं सपर्यितः स निजपल्ली मनैषीत् । एवमुपत्यका[4]पर्या[5]पतागुरुया घर्मपातितपादया वासवदत्तया सह तत्र गत्वा निवसन्त वत्सेशं प्राग्यौगन्धरायणेन दूतं सम्प्रेष्य सूचितं सकटकौ सेनापती रुमण्वान् आयादिति स कटकं प्रविश्योज्जयनीवार्ताजिज्ञासापरो विन्ध्याटवीमुखमधितष्ठौ वत्साधीशः ।

द्वित्रदिनाभ्यन्तर एव यौगन्धरायणसुहृदेको वणिगुज्जयिन्याः समागत्य सूचितवान्, देव, चण्डमहासेनेनातिप्रीतेन त्वदन्तिकं प्रतीहारः प्रेषितः । स चागच्छन् पश्चात्तिष्ठति । अहञ्चेह देव विज्ञापयितुं प्रच्छन्नः समायातः । एतद्वा कर्ण्यातिहृष्टेन वत्सेशेनापगतालिङ्गोदन्तीकृता वासवदत्ताऽपि सातिशयं जहर्ष, वसन्तकेन कथ्यमाना, भयभक्तिविवर्धिनीर्विविधाः कथाश्चाकर्णयमाना निजपितृ प्रहितप्रैष्यञ्च प्रतीक्षमाणा, वत्सेश्वरैकतानमानसा, पल्लीपतिवसतौ निजवत्समसुहृ त्रिसपल्लीं[6] समया समयाचकार[7] ।

अचिरादेव च तत्र चण्डमहासेनरूप्येण[8] प्रैष्येण प्रणामपूर्वकं वत्सेश इत्थ मुक्तः देव, देवचण्डसेनो भावत्कमाययमभिनन्दन् मन्मुखेनेत्थं सन्दिशति यद् वासवदत्तामेव हरता भवता [9]समीचीनमाचरितम् । तदुपनयं च त्वमिद मयाऽऽ

---

१ 'मनोर्जातावञ्यतौ षुक् च' इत्यत्र ... ङीप्, जाति लक्षणो वा ङीष् । २ देवस्यापत्यं देव्या (देवाद्यञञौ इति यञः प्राग्दीव्यतीयत्वेना पत्याधिकारस्थत्वाभावाच्च 'यञश्च' इति ङीप् प्रवृत्ति )। ३ 'परिपन्थं च तिष्ठति' इति ठक् (चौरः)। ४ 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकनि 'त्यक नश्च निषेध'। ५ 'विषमस्थधनुषा', 'यतापतदर्प'। ६ समया शब्दयोगे अभित परित इति द्वितीया। ७ 'समयाच्च यापनायाम्'। ८ चण्डमहासेनागतम् (हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य )। ९ 'विभाषाञ्चेरदिक् स्त्रियाम्' इति ख 'समः समि' इति सम्यादेशः।

सीरानीतः किंतु सयताय तुभ्य प्रदत्ता वासवदत्ताऽस्मास प्रीणीयादिति विशङ्किभिरस्माभिर्न तथाकृतम् । इदानीं वैवाहिकविधिसम्पादनार्थं मत्सुतो गोपालकोऽचिरेणैव समागमिष्यतीति ।

एतत्सर्वं वत्सेशमाख्याय प्रैष्य स वासवदत्तायामपि सर्वं निवेदितवान्। एतेमानन्दित सोऽतिनन्दितया चण्डसेननन्दिन्या कौशाम्बीं विप्रजितुर्गोपालकागमनप्रतीक्षणार्थं सश्वाशुरप्रैष्यनिजसुहृद पुलिन्दक तत्र संस्थाप्य, प्रातरेव परेद्युरपरिमितनिजबलपरिवृतो, मनुजपरिवूढो, वत्सेशो, देव्या वासवदत्तया सह स्वपुरीं प्रति प्रतस्थे । पञ्चषैरेव च दिनैर्मार्गोत्सुको सुखजनाम्, विकचकुवलयनिचयोपचीयमानमेचकमरीचिमलिम्लुचेन पौरनारीलोचनरोचिषा कवचितराजपथाम्, कौशाम्बीमागत्य सेवासमागतनृपाकीर्णं मागधोद्गीतमङ्गल, राजगृह प्रविवेश ।

अचिरादेव च वासवदत्ताभ्राता तत्रायात सप्रतीहारपुलिन्दको गोपालक इति सविधि निर्वर्तितविवाहौ वधूवरौ स्वावासवेश्म विवशतु । वत्सराजविवाहोत्सवमुपलक्ष्यप्रहितदूताहूता समागताश्च प्राघुणिका सरुमण्वद्यौगन्धरायणसत्कृता स्वस्वावास गताः । रुमण्वद्यौगन्धरायणवसन्तकादयोऽपि च राजकुलपरिजना वस्त्राङ्गरागाभरणग्रामग्रामैर्वत्सेशेन विशेषेण सम्मानिता ।

एव सुसम्पन्ने शुभोद्वाहे कतिपयदिवसान् तत्र स्थित्वा वत्सेशमापृच्छ्य स्वगृह गमी गोपालकोऽप्युज्जयिनीमभिप्रतस्थे। ततो रुमण्वन्त सैनापत्ये, यौगन्धरायणञ्च मन्त्रित्वे, एवमन्यानपि यथायथ तत्तदुचितपदेषु अधिकृत्याधिकौशाम्ब्यां वत्सेशो नवोढवासवदत्ताविलासासक्तैकमानस उवास ।

॥ इति कौमुदीकथाकल्लोलिन्यां कारकनिर्देशात्मको द्वितीय कल्लोल ॥



---

१ श्वशुरस्याय श्वशुरादागतो वेत्यण् । २ 'प्रभौ परिवूढ' । ३ समूहैः । ४ 'गमेरिनि' इत्यौणादिक इनि 'गम्यादीनामुपसंख्यानम्' इति समास । ५ विभाषा कृञि इत्यधे कर्मप्रवचनीयत्वम् । ६ अधिरीश्वरे इति कर्मप्रवचनीयत्वे 'यस्मादधिक यस्य चेश्वरवचन तत्र सप्तमी' ।

रथकट्यानैकट्यान्मगधेश्वरस्तत्सर्वं बाधते इति तद्भूतये[1]ऽनुभूतये च विनोदानन्द स्यावश्यमस्माभिस्तत्र गमेलिमम्, एतदाकर्ण्याखेटकीदैकलालसेन वत्सेशेन स्वीकृतौ वृत्तायां, परिकल्पिते च गमनलग्नेऽकस्माद्धरिकथापारायणप्रवीणो वीणो ज्ञावितमधुरगगनगुणप्रसारणविशारदो नारदोऽटचितस्ततस्तत्राजगाम तथा अनु-सम्पादितविधिवत्सपर्यायातिप्रह्वाय नृपाय पारिजातमयीं स्रजं दत्त्वा विद्याधराधिप कामदेवांशपुत्र शुभयिकायायार्यिकायायाशसन्नुवाच—'देव, युधिष्ठिरादयस्ते पूर्वजा मम सुहृद आसन्निति तत्प्रीत्याऽहमिहायात । अचिरेणैव त्वमाप्स्यसि महतीमृद्धिं किन्तु कञ्चित्काल सुखान्त दुःख ते भविष्यति, तथापि न कर्तव्या धीर, धैर्यावधीरणा, न चाप्यमाङ्गलिक कर्तुं स्वदेहस्याध्यवसेलिमम् । गरिम्णि महामहिमवतो हिमवत सत्त्वस्य सवात्त्वस्य महत्यामपि विपत्त्यां वैयात्येन भवितव्यम्' इत्युक्त्वा भङ्गिसूचनविशारदे नारदे दिवमुद्गते सम्भावितचिकीर्षित स्विकसिद्धयः प्रयत्नपरा यौगन्धरायणादय पूर्वोक्तयुक्त्या ससेनापरिच्छद, द्वेपितहृयम्, करटिगमनभारविविधरथकाधरीकृताधरम्, रथकट्याऽटाट्या सचू र्णितधराधरम्, समवाप्स्यमानाञ्च मन्त्रिचिकीर्षितसिद्धिमिव सम्मूर्च्छताऽनेकवाद्य घोषेणाभिव्यक्तीकुर्वन्त वत्सेश सवासवदत्त लावाणकमानिन्यु । नातिदवीयसी च यत्रत्याऽटवी, [10]स्वरूपैराक्कङ्करिणी, शरणीकृतबहुहरिणी, रमणीयतरु[11]णीव सन्ममोहत्तु प्रावर्तत ।

एकस्मिन् दिने मृगयार्थं गते वत्सेशे, गोपालकसमन्वितो यौगन्धरायण

---

१ 'ऊतियूति०' इत्यादिना साधु । २ 'केलिमर उपसंख्यानम्' । ३ गगनगुण शब्दः । ४ स्त्रीप्रत्ययाकाराभावात् 'उदीचमात स्थाने०' इति वैकल्पिकेत्वाप्रवृत्तौ 'प्रत्ययस्थादि'ति नित्यमित्वम् । ५ आर्याशब्दात् स्वार्थे के, 'केऽण' इति टापो ह्रस्वे 'उदीचामात'-स्थाने यकपूर्वाया' इति वैकल्पिकमित्वम् । ६ 'प्रयोजनम्' इति ठञ् । ७ 'प्रत्ययस्थादि'तीत्वम्, आत्मीयसिद्धय इत्यर्थं । ८ रथानां समूह इति विग्रहे खलगोरथादिति सहकारेण 'इनित्रकट्यचश्चे'ति रथशब्दात् कट्यच्, ततष्टाप् । ९ 'परि चर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम्' । १० निजमाकृतिकरूपै, पशुभिश्च । ११ 'आढ्यसुभगस्थूले'ति ख्युन्, 'नञ्स्नञ्ईकक्'ति ङीप् । १२ 'नञ्स्नञ्' इति ङीप् ।

बभूव। तत्र स्थिताया वासवदत्ताया कल्पनातीतेन[1] सौकुमार्येण शयनासन शरीरसौष्ठवसौरभादिना च आत्मसदृशीं तामवलोकयन्ती निश्चिन्वती च ताम दृष्टप्रेरणयाऽमरपुरपतिताम् इव, त्रिलोकीविजिहीर्षया यथाकाममवनीमवतीर्णामिव, दुस्तस्पर्शमात्रश्लेषाम्, अनुपमेयाम्, शिष्टविशिष्टोपचारैरुपाचरत्।

एकदा पद्मावतीप्रसाधनप्रसङ्गे वासवदत्ताकृतौ वत्सेशशिक्षितपूर्वविज्ञानमालातिलकाववलोक्य पद्मावतीं तस्या माता पप्रच्छ 'केनेमौ विहिताविति' तदनु सम्मुखान्निजमन्दिरस्थितामावन्तिकानामधेयाम् ब्राह्मणसुतां तत्कारिणीं ज्ञात्वा 'या ईदृशी सर्वगुणसम्पन्ना न सा मनुषी कदापि भवितुमर्हति' एव तामुपह्वरे समाहूय ततोऽप्यधिकसम्मानपूर्वक तद्व्यवहरणम् आदिदेश। इत्थ तदादेशानुसार सत्कृता वासवदत्ता पद्मावतीगृहे सुरक्षिताऽवर्तत। तत्र च तिष्ठन्त्यास्तस्या न कस्मादप्यकस्माद् धर्षकभीति, नापि च अपसदभयम्। विप्रकृष्टाद् आगतामपि स्वहृदयाभ्याशाद् आगतां सद्विचारसन्ततिमियामन्यत पद्मावतीयत्नपक्लृप्तं पोढ सुखमनुभवन्ती सा निशीथपद्मिनीव निजप्रियतमोदयनसयोग-सुप्रात-सुदिनाह[11] प्रतीक्षमाणा तस्थौ।

अत्रान्तरेऽतिदूरभूमिषु मृगयां कृत्वा सायाह्ने लावाणकमायातो वत्सेशो भस्मीभूत स्वावासमवलोक्य तत्र सवसन्तकां वासवदत्तां मन्त्रिभ्यो दग्धां चाकर्ण्य

---

१ द्वितीयाश्रितातीते'ति समास। २ 'समामान्ययोश्चेति वक्तव्यम्' इति दृशो कञि 'दृग्दशवतुषु' इति समानस्य सादेशे कयन्तत्वात् टिड्ढाणञि'ति ङीप्, तत 'पूर्वसदृशसमोनार्थे'ति समास। ३ 'पूर्वकालैकसर्वजरत्०' इत्यादिना समास। ४ 'मनोर्जातावञ्यतौषुक् चे'ति निष्पन्नान्मनुष्यशब्दात् 'योपधप्रतिषेधे हयगवयमुकयमनुष्ये'ति वार्तिकसहकारेण जातिलक्षणे ङीषि 'हलस्तद्धितस्य' इति यलोपः। ५-६ 'पञ्चमी भयेन, भयभीतभीतिभीभिरिति वाच्यम्'। ७ ८ 'स्तोकान्तिकदूरार्थे'ति समासे 'पञ्चम्या स्तोकादिभ्य' इति पञ्चम्या अलुक्। ९ 'अपेतापोढे'ति समास। १० शोभन प्रातरस्येति विग्रहे 'सुप्रातसुश्वेत्या'दिनाऽच्प्रत्ययान्तो निपातितः। ११ सुदिन पुण्यञ्च तदेवाह' इति विग्रहे प्रशस्तवाचकसुदिनशब्देन कर्मधारये 'राजाह सखिभ्यष्टच्', 'अह्नोऽह्न एतेभ्य' इति प्राप्ते 'उत्तमैकाभ्याञ्चेति निषेधे 'अह्नष्टखोरेवे'ति नियमेन 'नस्तद्धिते' इति टिलोपे 'रात्राह्नाहा पुंसी'ति बाधित्वा 'पुण्यसुदिनाभ्यामह्न' क्लीबतेष्टे'ति नपुसकत्वम्।

निश्चेतनो भूत्वा भूमावपतत्। अदहच्च तस्य देहं दहन इव दारु, दारुणो दयिताविरह सम्भवः। क्षणादुपलब्धसंज्ञश्च हा! प्रियतमे, क्व मामशरणं त्यक्त्वा गता! एहि! एहि!! इत्युच्चैस्तराम् विलिखिताम् इव विद्धां विद्धिं च उत्कीर्णाम् इव चक्षुषि, निखातामिव हृदये, वासवदत्तामाह्वयमानो मोहाविष्टचेतसाऽतिकरुण विलपंस्तद्वियोगज्वालाजालावलीढ प्राणपरित्यागप्रवणो बभूव। किन्तु तदानीमेव स्वविषये स्मृतनारदवचनः, स्मृततत्परिचयनिर्देशश्च शुभोदर्कं तर्कयंस्तद्वियोग स्वरूपशोकप्रयोपाठकमनविदु खित यौगन्धरायणप्रावष्टोभय सम्भावितपासवदत्ता जीवितो मन्त्रिनीतिमाविदेवीसमागमो मन्त्रिभिर्बोध्यमानो धैर्यं दधे।

इतो लावाणकस्थेभ्यश्चारेभ्यो मगधराजो विदितसवृत्तो वृत्त इति कालज्ञोऽसौ स्वसुतां पद्मावतीं यौगन्धरायणादिमन्त्रिभि प्रार्थितचरीं वत्सेशस्य जीवन सहचरीं चिकीर्षुः स्वेप्सित यौगन्धरायणाय सन्दिदेश। सोऽपि च तत्सन्दिष्टं सर्वमुररीकृत्य ततः सप्तमेऽहनि निर्धारितोद्वाहलग्नोऽह्नाय मगधराजाय प्रतिदूतं प्रजिघाय। दूतमुखाच्च सम्वादमेनमाकर्ण्य स्वसुतास्नेहनिजविभवानुरूपसयोजि तोद्वाहसम्भारो नृपाणां श्रेष्ठो मगधेश्वरस्तत्तद्देशस्थितान् सर्वानिजसम्बन्धिन सुहृदश्च निमन्त्रयितु सादिनः प्रैषयत्। वत्सेशोऽपि तथैवाकरोदिति निश्चितोद्वाहदिवसे भरते[1] समायातानां नैषध्यानाम्, आवन्त्यानाम्, पाण्ड्यानाम्, पौराणाम्, पाञ्चाला नाम्, कम्पातश्चायातानाम्, मागधानाम्,[10] वाङ्गानाम्, सकुपकुशोरकमेठकाश्मीर्य सुहृणदेवणादिविविधोभितेतरम्ब्यो, वाद्ये-पाण्डुकम्बे लिहैर्यै वैवाहरथ्याऽऽश्रित्य

१ 'षष्ठी'त्यनेन समासः।२ 'न निर्धारणे'। ३ षष्ठ्या भ्याश्रये' इत्यनेन यस्त कम्पातश्रोमयत्र पञ्चम्यान्तात्तसिः यस्य कम्पायाश्च यत्त इत्यर्थः। ४ कुरुना विष्णो ण्य। ५ 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इतीकान्तात्वादपत्ये ञ्यङ्। ६ 'पाण्डो ड्यण्'। ७ 'पूरोरण् वक्तव्यः'। ८ पञ्चालानां राजेति विग्रहे 'क्षत्रियसमान शब्दादि'ति वार्तिकेन 'अद्भुतादपि बहुवचनविषयात्' इति कुम बाधित्वा अञ्। ९ १० 'मगधगधे'ति राजन्यपत्ये वा अण्। ११. कुशो हरिदसु सोऽस्त्यस्मिन्निति 'रप्रकरणे रामुजकुमेभ्य उपसंख्यानम्' इति रः। १२ अश्वानां समूह इति विग्रहे 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्'। १३ 'तद्धतोऽसपुग मामक्रम्'। १४ परिवृतो रथः। १५. 'पाण्डुकम्बलादिनि'। १६ 'हैयङ्गैया प्राक्रम्', रथानां समूहः इत्यर्थे 'खलगोरथात्' इति यः। १७ 'पद्मपूर्वारम्'।

रथ्याकीर्णरथ्या, भेरीझर्झरमृदङ्गपणववेणुकरतालादिवाद्यप्रपरिजनादिचरणशतसंक्षोभचलितक्षितितला, विचित्राभिरपि सचित्राभि पताकाभि प्रतिभवनमुल्लासमाना[2], समाना दिवा, दिवारात्र सम्पाद्यमानानेकसमुत्सवा, महाजनसम्मर्दाऽभून्मगधाधिपराजधानी[3]। अथ प्राप्ते शुभयौ लग्ने, यथापथ स्थितेषु च शुभग्रहेषु, गायत्सु सुतरां गायकेषु नृत्यन्तीषु च पौरपुरन्ध्रीषु आमुक्तकौतुकाम्, सद्योतकाम्, विश्राणितबहुसूर्य्यामोऽयमुजिष्याम्, स्वविभूत्यनुरूप महार्घालङ्कारैरलङ्कृत्य मगधेश्वरप्रदत्ताम्, पद्मावतीम्–सम्पाद्यमानतद्विवाहाया दिव्यावम्लानमालातिलकौ दृष्ट्वा वासवदत्ताविमुक्तोऽपि पुनस्तदुपलब्ध्याशात सुसमवनद्धहृदयो वत्सेश–पाणौकृत्यापि[6] न तत्याज हृदयात् क्षणमपि तत्रालक्षितस्थिताम् वासवदत्ताम् ।

अथ विवाहानन्तर मगधेश्वरेण श्वाणा सयाव पेटक-कूर्चिका कुण्डलिनी फाण्टरसगोलक त्रिकोणक मोदकै, यवागूशष्कुलीघृतचौरिकचौरीण्डरिकापूपपर्पटैः, शुष्कासुततेमनै, रामठजीरकादिविविधाभिधार्यमाज्याज्यसुगन्धितद्रव्याभिघारितसहरिद्रशतपुष्पैलाकुस्तुम्बुरुमरिचलवङ्गलतुवरिकामाषमुद्गमसुरतकचणकसतीनकसूपैः, उग्रगन्धाराजकर्णिकासोपस्कारकारवेल्लपटोलमहाफलासप्तलापालकवास्तुककोशातकीमूलिकाकर्कारुचिर्भिटिकालाबूलताकालुप्रभृत्यनेकशाकै, स्वादिष्ठभिरसाकरपट्टिकादधिवटकादिविविधवर्णनातीतषड्रसव्यञ्जनै, विविधैरार्तवफलैरन्यैश्च सर्वकालोपलब्धानार्तवफलैः, द्राक्षादाडिमादिरसैश्च यथाकाल स्वादुङ्कार मूलकोपद[11]शञ्च सुसम्पादितेऽखिले[12]ऽश्नीतपिबतप्रीतिभोजनादौ चतुरो यौगन्धरायणो मन्त्रभि[13]दामिया 'वत्सेशोऽद्यैवास्माद्यास्यतीति' मगधेशमुक्त्वा कन्यास्नेहपाशबद्धादपि

---

१ 'रथाद्यत्'। २ उत्पूर्वकाल्लासधातोः शानचि 'लाभयमनुष्यधकार्यमादेशानामि'ति स्टष्टिस्वेऽपिङीबभावे टाप्। ३ राजाधीयतेऽस्यामिति 'करणाधिकरणयोश्चे'ति ल्युटि टित्वात् ङीप्। ४ 'सूतयुवत्याम्' इति ष्यङ्, 'यङश्चाप्'। ५ 'भोजनक्षत्रिये'। ६ 'नित्य हस्ते पाणावुपयमने'। ७ 'कुस्तुम्बुरूणि जाति'। ८ 'मूलमस्याबर्हि', मूलमाबर्हि येषां ते मूल्या मुद्गाः। ९ 'अन्नेन व्यञ्जनम्'। १० 'स्वादुमि णमुल्' 'अमैवाव्ययेन'। ११ 'उपदंशस्तृतीयाम्', 'तृतीयाप्रभृतीन्यन्यतरस्याम्'। १२ 'आख्यातमाख्यातेन क्रियासातत्ये'। १३ 'पिञ्छिदादिभ्योऽङ्'।

तस्मात्कथञ्चिदुदधितीर्णानुमतिः सवत्सेशः पद्मावतीं वधूयानमारोप्य स्वयमागो यथा सह सपरिच्छदागन्तुकराजन्यो लावाणकमुपेत्य परेद्यवि समागतप्राघुणिकान् सबहुमानं सत्कृत्य विसर्जितवान् ।

इतः सैन्यस्य पृष्ठतः कृतरूपविपर्ययं वसन्तकं पुरस्कृत्य वासवदत्ताऽपि पद्मावतीपितृगृहात्सङ्गता लावाणकमासाद्य सायाह्ने गोपालकगृहं प्रविवेश । तत्र प्रदर्शितानवद्यादरं सोदरं निजभ्रातरं साक्षात्कृत्य कण्ठे गृहीत्वा रुदत्या बाष्पव्याकुललोचनायाश्च तस्या वत्सेशविश्लेषदुःखं व्यपाकर्तुमागत्य यावदेव सरुमण्वत्को यौगन्धरायणः प्रयतते तावदेव पद्मावती सकाशात्प्राप्ता महत्तरास्ता ऊचुः —'देवि, अस्मास्विह समायातेषु राजभवनमपहायावन्तिदेशीया राजपुत्रस्य गोपालकस्य गृहे वर्तते ।' एतदाकर्ण्य किञ्चित्साशङ्का पद्मावती सा स्वतन्त्र प्रहिण्वती वत्सेशस्याग्रे एवं सन्दिशन्ती—'आवन्तिके, त्वं हि मे निक्षेप इति मा परत्र कुत्रापि स्यात्तु न प्रयोजनम् । अतो यत्राहमस्मि तत्रैव त्वयाऽऽगन्तव्यम् ।'

एतदाकर्ण्य प्रमाषेषु तेषु 'कनेयमावन्तिका कुतो' इति जिज्ञासापरः रहसि राजानं पद्मावती प्रत्युवाच 'मद्गेहे विप्रेणैकेन न्यस्ता वैषाऽऽवन्तिकाऽभिधा, तस्याः प्रथमसिद्धमेतदिति श्रुत्वैव वत्सेशो नूनं सा वासवदत्तैव भवेदिति चिन्तयन् महत्तरस्तावितद्वारमन्तःस्थदेवीगोपालकमन्त्रिद्वयवसन्तकं गोपालकगृहं प्रविश्य निजविश्लेषपाण्डुरगात्रीं वामवामां वाम्भ्रमसमूर्तिमिव वासवदत्तां ददर्श । पारस्परिकसाक्षात्कृतिसमनन्तरमेव च शोकविक्लेशिभिपाण्डुरौ शोकदीनौ चिरं रुरुदतुः । दम्पत्योश्च तथाभूतामवस्थामवलोक्य यौगन्धरायणोऽपि बाष्पाकुलितनेत्रोऽवरुद्धकण्ठश्च सञ्जात इतीत्थं सर्वत्र प्रवृत्ते कोलाहलेऽतिव्याकुला पद्मावत्यपि तत्रैवाजगाम । व्यतिकरञ्च सर्वमिममाकर्ण्य तुष्टया वत्सराजस्य पद्मावत्याः प्रत्यक्षं भूपमाक्रोशन्ती वासवदत्ता मद्गुरुद्वारादागताया मे जीवितेन किं प्रयोजनमित्यात्मानं व्यपकुर्वन्ती सातिशयमन्तस्तापमाप ।

---

१ पद्मनादश्चतेश्च, 'वस्य विभाषा', 'अचोऽचाव्यादाने' इत्युभयोरप्रवृत्तिः । २ 'आदरानादरयोः सदसती' । ३ 'पुरोऽव्ययम्' इति गतित्वे 'कुगति प्रादयः' । ४ अह्नः सायं इति विग्रहे 'अहःसर्वैकदेशे'ति ... समासः । ५ 'साक्षात्प्रभृतीनि च' । ६ पाण्डुशब्दात् 'वर्णादनुदात्तात्तोपधात्तो नः' ... रः ततः गात्रशब्देन बहुव्रीहौ 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति ङीप् । ७ 'प्रतिपरिसमनुभ्योऽक्ष्णः' । ८ 'ऋन्नेभ्यो ङीप्' ।

एवमात्मनिन्दापरवशो वासवदत्तामालोक्य 'मगधेशसुतालाभेन तव साम्राज्यलाभः' इत्यभिकांक्षिणा मया सर्वमेतत्कृतमिति सर्वथाहमेवात्रापराध्यामि न देवीति वत्सेश विश्वास्य देव्या वासवदत्ताया शुद्धतामात्मनो नि स्वार्थराज्यभक्तिञ्च प्रमाणयितुमाचम्य प्राङ्मुखोपविष्टो यौगन्धरायण उवाच—'यद्यहं राजशुभेच्छु, समुत्कृष्टबुद्धिमती देवी वासवदत्ता च शुद्धिमती तदा हे लोकपालाः, सर्वमेतद् युष्माभिरुचेलिमम्। येन युष्माकं वाचमुपनिपत्कृत्य[2] राजा सर्वथा विश्वासपरो भवेत्। अन्यथाद्यैवाहमात्मतनुमतनूष्मणि तनूनपाति पातयित्वा भस्मसात्करोमि। एवंलोकपालान् स्वाथराजशुभैषणयो र्मध्येकृत्योक्तवचसि[3] राजभक्तिपरायणे यौगन्धरायणे निर्वचनेकृत्य स्थिते सति, समुदभूद् दिव्या वा[5]गेवम्—राजन्, धन्यस्त्वम्, यस्यैव भूतो मन्त्री यौगन्धरायणः, जीवनसहचरी[6] च यस्यैवंभूता सर्वथा विशुद्धा निर्दोषा चेति।

एतदाकर्ण्य गोपालकसहितो वत्सेशो 'मन्त्रिन्, धन्यस्त्वम् य एव स्वनीतिशक्त्या यथावसरमुपाजेकृत्य[7] पद्मावतीमनुनेतु मगधान् गतस्तत्रापरिगणितनिर्वाशिता[8]नशितो यथेष्टं कारिकीकृत्य[9] मामुपकर्तुं वासवदत्ताया आत्मनश्च चरित्रमेवमुदात्तं प्रदर्शितवान्' एवं यौगन्धरायणाचरितं सर्वं प्रशंसन् गोपालकगृहाद् वासवदत्तामात्मावासमानाय्य मूर्तिमतीभ्यां रतिनिर्वृतिभ्यामिव वासवदत्तापद्मावतीभ्यां सहाकुतोभयो[10] लावाणके परमोत्सवेनोवास।

अन्येद्यु स्नानानन्तरं तन्त्रकतान्तवांशुकसुवो[11] वत्सेश सम्पादितभोजनादि

---

१ वच्धातोः केलिमरि सम्प्रसारणम्। २ 'जीविकोपनिषदावौपम्ये'। ३ 'मध्ये पदे निवचने च'। ४ वाचन्नियम्येत्यर्थ। ५ 'क्विब्वची'ति क्विब् दीर्घं सम्प्रसारणञ्च। ६ पचादिषु चरडिति पाठात् ङीपि सहेन समासः। ७ 'उपाजेऽन्वाजे' (दुर्बलस्य बलमाधायेत्यर्थं)। ८ अशितञ्च अनशितञ्चेति 'क्तेन नञ्विशिष्टेनानञ्' इति तत्पुरुषसमासेऽपरिगणितशब्देन बहुव्रीहिः। ९ 'कारिकाशब्दस्योपसंख्यानम्'। १० नास्ति कुतोभय यस्येति मयूरव्यंसकादित्वात्समास। ११ 'तन्त्रादचिरापहृते' इति कन्, तन्तूनां विकार इति विग्रहे 'ओरञ्' इत्यञ् एव सुष्ठु वस्ते इति सुव, धातुत्वादत्वसन्तेतिदीर्घाभावस्ततस्तन्त्रकतान्तवांशुकस्य सुव इति समास।

दैनिकृत्यो वासवदत्तापद्मावतीभ्यां सह विविक्ते पानलीलासक्तो गोपालकम्, रुमण्वन्तम्, यौगन्धरायण वसन्तकञ्चाहूय विभिन्ना वि कौशाम्बीपरावर्तनम् रुग्मिणी कथाः कथयन् यौगन्धरायणेनोक्त', देव, पत्युर्हितैषितैव सापत्नीलक्षणम्, न तु प्रियकारित्व मात्रम्। एवं राज्यकार्यभारैकचिन्तन रामवद्धृत्वानुरोधनञ्चोपजीविलक्षणमिति तानुरूपेण मगधराजेन सह सम्भिन्नतया पृथिवीविजयहेतुना चापसजीविकैरस्मा भिरित्थ प्रायासि अतो हे देव, भावत्कमत्रयमनुभूतासद्यविमुक्तिर्नेया न कथमप्य पराध्यति, सा तु भवन्त पूर्णतयोपाकार्षीत्। एतदाकर्ण्य वत्सेशः, मन्त्रिन् भावत्कं सर्वं चातुर्यमहं जाने। देव्याः शीलौदार्येण चारित्रेण च नाहमत्य परि चितोऽस्मि तथापि मयदनुरागमनसा प्रणयाधिक्येन या किञ्चिदसमञ्जसयुक्त मर्षणीयम्। एव प्रायैरालापैस्तद्दिन वासवदत्तया सहैव नीतवान्।

परश्वि मगधेशेन प्रेषितो दूतः समागत्य वत्सेशमेवविज्ञापितवान् यावद्गीय मन्त्रिभिर्वयं वञ्चिताः। किन्तु त्वयाऽधुनैव विधेय येन पद्मावतीविषयकशोकेना स्माकं जीवनं शोकमय न भवेत्। वत्सेशश्चैतदाकर्ण्य स दूत पद्मावतीपार्श्वं प्रेषितवान्। सापि चातिनम्रतया दूत स्वसखिपावाकार्य तस्मात्स्वपित्रोरनामय पृष्टवती तेन तयथा तत्रत्य धर्ममभिहिता—'पुत्रि[1]त्वमनेनचात्मार्जीतापास्तेपति मन्यामत्समसुखिन्तपद्दह नेकदिवमनुतपामि' एवमुक्तपितृसन्देश सन्देशहरञ्चोवाच पद्मावती 'भद्र,तातोऽम्बा च मद्वाचा वाच्यौ यत्रकोऽपि विषयोऽनुतापस्य। आय पुत्रो हि मयि सातिशय दयोदयः, वासवदत्ता चापि मयि स्वस्वसरीवसातिशय सस्नेहेतिलेशमात्रेणापि शोकेमाष्टम्। एव प्रतिसन्दिश्य सत्कृते दूते मगधान् प्रति निवर्तितेऽभिलब्धाप्तो यसन्तको विभिन्नकथाभिर्वासवदत्तापद्मावतीमनोऽनुरञ्जयन् 'युवामुभे द्वापरयुगे पूर्वजन्ममगिन्यावित्यस्मिन्नपि जन्मनि युवयोरन्योन्यदित हृद्यदय वर्तते एव विज्ञापितवान्। येन सपत्नीत्वनियन्धन मात्सर्यपरिक्लेशा लेशमप्यदर्शनतो भवन् सर्वथा तयोर्विद्युद्दमा[2]व्यवहाराः परस्परिकप्रेमोपचिते वाराणतां ययौ। विगतेषु च कतिपयदिवसेषु प्राप्तपद्मावतीसन्देशवचनेनाति

---

1 प्रातापदे च द्वितीयया' इति समासे 'परवल्लिंगं द्वन्द्वतत्पुरुषयो' इति प्राप्ता परवल्लिंगता 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्य' इति मिनि ष्यते। २ 'कृतेश्च इति पाः। ३ 'भवत्पुरविमपुर–' इत्यादिना माधु।

तुष्टो मगधेश्वरो वासवदत्तां प्रति सर्वथा सन्तोषं प्रकटीकृतवान्। तथैव चण्डमहासेनोऽपि पद्मावतीं प्रति निरतिशय स्वकीय स्नेहभाव दूतमुखेनाभिव्यक्तवान्। एव श्वश्रू्द्वयसन्तोषप्रवर्द्धितप्रमोदो वत्सेशो यौगन्धरायणपरामृष्टयाऽचिरेणैव जीर्णदेहमपि महाबलसम्पन्नम्, मागधमप्यविगीतप्रशस्तिम्, पद्मावतीपितरमामन्त्र्य विविधाम्यदुर्लभवसुधायसमेधितवसुधान् मगधान् परित्यज्य वर्णकैःप्रतारितनयनकर्णिकांवर्गिकांस्तूयमानमृडानीम्, क्वचिदुपाध्यायीभ्याप्यमानकठीवद्बृचीम्, इतरत्र पौरपुरन्ध्रीवर्गाश्रयमानाशिरवीम्, अतिरतिरूपाङ्गनोपहस्यमानशूर्पणखायीम्; स्वीयपातिव्रत्यशीलशौर्यशस्यमानोन्नायीम्, सामाजिकनियमनिरूपणविदुषितरैरवधीरीक्रियमाणमनोयीम्, अकाण्डामपि सद्विकाण्डाम्, विलसद्बहुपुरुषामपि द्विपुरुषाम्, स वृषलीमप्यवृषलीम्, गोपीमप्यश्वपालिकाम्,

---

१ मागधीयत्वीति विरोध, मगधे भव मगधानां राजानमिति वा विरोधपरिहारः। २ वर्णकया प्राकारविशेषेण प्रतारिता तथा भूता कर्णिका कर्णालङ्कारः यया एव भूता या वर्णिका स्तोत्रकर्त्री तया स्तूयमाना मृडानी यस्यां ताम्, 'वर्णकाता सब'। ३ कर्णलङ्कारकनलक्षारे। ४ स्तोत्रकर्त्री। ५ 'इन्द्रवरुणभवशर्व'-इत्यादिना ङीप् आनुगागमश्च। ६ या तु स्वयमेवाध्यापिका तत्र वा ङीप्। ७ शाखाध्ये सूत्रादित्वेन जातिलक्षणा ङीप्। ८ न वर्तते शिशुर्यस्या इति विग्रहे 'सख्यशिश्वीति भाषायाम्। ९, १० 'वृषाकप्यग्नि'-इत्यादिना उदात्त ऐकारो ङीप् च। ११ विदुषाशब्दशाततरपि 'उगितश्च'ति वैकल्पिकह्रस्व। १२ 'मनो रौ वे'ति वैकल्पिककारः। १३ न काण्डो दुघटना यस्यामपि सद्विकाण्डामिति विरोध 'काण्डान्तात्क्षेत्रे इति ङीपो निषेधे द्विकाण्डया क्षेत्रभवया सहितामिति परिहारः। १४ बहुपुरुषामपि द्विपुरुषामिति विरोधः 'पुरुषात्प्रमाणेऽन्यतरस्याम्' इति वैकल्पिकङीबभावे द्विपुरुषया परिखया युक्तमिति परिहारः। १५ 'जातेर स्त्रीविषयादयोपधात्' वृष धर्मं शान्ति गृह्णन्तीति वृषला धार्मिकास्तेषां स्त्रियो वृषल्यस्ताभियुक्तामपि अविद्यमाना वृषल्यो वृषलपत्न्यो यत्रेति विरोधपरिहारौ। १६ 'पुंयोगादाख्यायाम्' तथा 'पालकान्ताने'ति उदाहरणपदे विरोधः, गा पातीति' गोपूर्वकात् पिवतेः के जातिलक्षणा ङीप्, एव पालयतीति पालिका अश्वानां पालिका तयोक्ता ताम्, गवां रक्षिका अश्वानामपि पालिकेति विरोधपरिहार।

सत्तर्कनिर्भिन्नानेकप्रतिवादिशङ्का नव्यनैयायिका न जरन्नैयायिका[1], प्रवृत्तवाग्बन्धा[2] न निगडबन्धा[3], प्ररूढनिद्रारूढखट्वा न खट्वारूढा[4], विहिताविहितविचार शालिनो देवब्राह्मणा[5] न ब्राह्मणब्रुवा[6], गुरुजनाभीष्टदेवप्रिया न देवानां[7] प्रिया, विविधदूणाशकालिक[8]-क्षेत्रियामयागदङ्कारा सद्वैद्या[12] न भिषक्पाशा,[13] [14]प्रात्यहिकमूत्रबलिसन्तर्पितत्र्यक्षा न तीर्थध्वाङ्क्षा[15], घटशरावादिविविधमृ[16]त्स्नामयभाण्डनिर्माणकुशला कुलालाः न आणककुलाला[17], पादसंवाहनादिविविध सेवाऽऽपन्नाः सन्नापिता न पापनापिता[18], सर्वयाज्ञिको[19] नववेदपाठ्यांश्च[20] प्राप्त जीविका[21] विद्वांसो निजवशानुरूपानुसृतकृत्याश्च भृत्या । न केवल कौशाम्बी सिद्धा[22] अपि तु विश्वप्रसिद्धा दानशौण्डा[23] । याञ्च विविधराजकार्यवसूंका[24] पुरीं प्रविशति दर्शनीयतमभार्ये[25] वत्सेशे हर्म्यस्थमनोरमरामाननशतैर्देवीहृदयसुखविनि तविधोरसेवासमागतसैन्यैरिव समपूरि समन्तात्तभ । गवाक्षजालाग्रलग्नपक्ष्मल लोचनैश्चानिमेषक्षणमीक्षमाणाः काश्चित्तु विकसिताम्भोजसर शङ्कामुदपीपदन् । नव वधूदर्शकानां कासाञ्चिद् सम्भ्रमच्छिन्नहारमुक्ताकणास्तपद्दृश्यहर्षबाष्पाम्बुसी

---

१ 'पूर्वकालैकसर्वजरत्०' । २ 'सिद्धशुष्कपक्वबन्धैश्चे'ति समासे 'नेन्सिद्धब ध्नातिषु च' इति सप्तम्या नालुक् । ३ 'बन्धे च विभाषा' । ४ 'खट्वा क्षेपे' । ५ देवानां पूजका ब्राह्मणा इति विग्रहे 'याजकादिभिश्च' इति समासानन्तर शाकपा र्थिवादित्वात्समासे मध्यमपदलोप । ६ ब्रूधातो पचाद्यचि वच्यादेशगुणाभावनिपा तनेन निष्पन्नस्य ब्रुवशब्दस्य चेलडादित्वाद् वृत्तिविषये कुत्सनवाचित्वेन 'कुत्सि तानिकुत्सनैः' इति समास । ७ देवानां प्रिय इति च मूर्खे । ८ 'दुरोदाशनाश'— इति वार्तिकेन साधु । ९ प्रकृष्टः काल अस्यति कालिक 'प्रकृष्टे ठञ्' । दीर्घकाल- चिकित्स्य इति भाव । १० 'क्षेत्रियच् परक्षेत्रे चिकित्स्य' । ११ 'कारे सत्यागदस्य' १२ सन्महत्परमोत्तमेति समास । १३ 'याप्ये पाशप्' । १४ अहनि अहनि, प्रत्यहम्, तत काठाद्ठञ् ततो बहुव्रतत्पुरुषस्य ?शाङ्गान्तेन यहुमादि' । १५ 'ध्वाङ्क्षेण क्षेपे' । १६ सस्नौ प्रशसायाम् । १७, १८ 'पापाणके कुत्सितै' । १९, २० 'पूर्वकालैकसर्वजरत्०' । २१ 'प्राप्तापन्ने च द्वितीयया' । २२ 'सिद्ध शुष्कपक्वबन्धैश्च' 'नेन्सिद्धबध्नातिषु च' । २३ 'सप्तमी शौण्डै' । २४ 'नद्यृतश्च' । २५ दर्शनीयतमा भार्या यस्येति तमपि 'तसिलादिष्वाकृत्वसुच', तत 'स्त्रिया- पुंवदि'ति पुंवद्भावः ।

करा इवापप्तुः। क्रमशश्चैव जनतानुभूतामन्दानन्दोत्सवे वहति द्वारि, पौरपुरन्ध्रीणां नीरन्ध्रितगवाक्षैः कटाक्षैः सौन्दर्यवर्जितमपि पिच्छैः, पिच्छातपत्रापमागधवलातपत्रं, सुहृद्दुर्हृद्[1]पृथ्येषु सौहार्द्य[2] उल्लासं[3] एकपदे प्रयोत्पादयन् सम्पादिताशेषमाङ्गल्याचारं निजमन्दिरमाविवेश। क्षणादेव च तदगणितभूपालमौलिमल्लोपायनैरपरि इति सम्मानिताखिलराजलोको वत्सराजोऽभ्रीतपितृतोदरो[4] रसुखादिक्रियाकलापैर्दिनदोषं निःशेषं चकार।

इति कौमुदी-कथाकल्लोलिन्यां समासक्षोभप्रत्ययनिर्देशात्मकस्तृतीयः कल्लोलः।



१ 'सुहृद्दुर्हृदौ मित्रामित्रयोः'। २ सुहृदयस्य भावः कर्म वेति विग्रहे ष्यञि 'हा शोकष्यञ्लोपेषु'। ३ 'हृदयस्य हृल्लेखयदण्लासेषु' (हृल्लासम्)। ४ 'भाव्यन्तमाभ्यातेन क्रियायोगाय'।

# समास-तद्धितनिर्देशात्मकश्चतुर्थः कल्लोलः

द्वितीयस्मिन् दिने सुधर्मा[1]नवमेनसभ[2]मण्डपच्छायगतस्य नृपस्य द्वारि समागतो ब्राह्मण एकोऽब्रह्म[3]ण्यमुद्घोषयन्नाह—देव, विविधपशुशर[4]ण्येऽरण्ये पापैर्गोपालकैरकारणमेव मत्पु[5]त्रस्य पादच्छेदो विहित । एतच्चाकर्ण्य द्वित्रान्[6] गोपालकानाहूय राजा द्विजव्यथाकर व्यतिकर त पप्रच्छेति तेषामन्यतम सविस्तर वर्णयितु गिरमित्थमुत्थापयामास—देव, गोपालका भूत्वा क्रीडता मस्माक मध्ये देवसोमाख्यो गोपालक 'अह युष्माक राजाऽस्मीति निगदन्नोऽनु ल्लङ्घितशासनोऽनुशास्ति । अद्य तेनैव वर्त्मना विप्रस्यास्याय तनयस्तमप्रणम्य गच्छन् एहीड[7]यागिराऽऽकारितोऽप्यस्मानवधूय हसन्नग्रे प्रचलित इत्यविनीत त पादच्छेदेन निगृहीतु समाज्ञप्तै गोपालकेनास्माभी राजाज्ञोल्लङ्घनाद्धर्मैर्घाविरवाऽस्य पादच्छेदो विहितः । एव गोपालकैर्विज्ञप्तो राजा रहसि यौगन्धरायणेनोक्त 'देव नून निधानादियुक्तेन तत्स्थानेन भुवेलिमम्, यत्प्रभावेण गोपालकोऽप्यवमीष्टे अतोऽविलम्ब तत्र गन्तव्यम् । मन्त्रिणेत्युक्तस्तद्गोपालकपुरस्सरः ससैन्यस्तत्र गतो राजा यावदेव भूमिं परीक्ष्य कर्मिभि खानयति तावदेव शैलाकृतियॅक्ष एकोऽधस्ता[8]दुत्थायेत्थमाह राजन्, स्वपिता[9]महनि[10]खात शेवधिमिममङ्गीकुरुष्व' एवमुक्त्वा स्वीकृतवत्सेवाविहितसपर्ये यक्षेऽन्तर्हितेऽवटाज्झटिति तस्मात् समहार्हसिंहासनो

उदयनस्य राजसिंहासनारोहणम्

---

१, २ शोभनो धर्मो यस्य ( धर्मादनिच् केवलात् ) तस्मात् अनवमा अभिन्नकोटिका या इनसभा ( सभाराजाऽमनुष्यपूर्वा ) इति नपुसकत्वम्, तत इनसभमण्डपस्य च्छाया इति विग्रहे 'विभाषा सेनासुराच्छाये'ति नपुसकत्वे क्लान्तेन समास । ३ 'सलयवमापतिलघ्वपब्रह्मणध्वे'ति यति 'ये चाभाव कर्मणोरि'ति प्रकृतिभाव । ४ 'तत्र साधु'। ५ प्रत्ययोत्तरपदयोश्चेत्यस्मदो मदादेश । ६ द्वौ वा त्रयो वेति विग्रहे 'सङ्ख्ययाव्यये'ति बहुव्रीहौ, 'बहुव्रीहौ सङ्ख्येये डजबहुगणात्' इति डच् । ७ एहि ईड इति यस्यां गिरि सा एहीडा तया, 'एहीडादयोऽन्यपदार्थे' । ८ 'दिक्शब्देभ्य '—इति अस्तातिप्रत्यये 'अस्ताति चे'त्यधरशब्दस्य अधादेशः । ९ 'मातृपितृभ्यां पितरि डामहच्' । १० जन सनखनां सञ्झलोरि'ति दीर्घ ।

कीर्तिपार्थिव[1] शुभेऽह्नि गजता[2]श्वीय[3]पदिक[4]धानुष्कासिक[5]प्रासिक[6]पारश्वधिक[7]शाक्तीक[9]यष्टीका[10]दिविविधपरिच्छदसुसज्जित पूर्वं [11]प्राचीविजिगीषयाऽभ्युज्जगाम [12]अभ्यमित्रीणो [13]वाराणसेय प्रद्युम्नस्तम् । जिते च तस्मिन् क्रमेण वायुवृक्षानिवाऽन्यानपि तत्सहायान् समरश्रममपरिष्टून्, उन्मूलयंश्च कौक्षिरकठोरानन्यान् किं[14]राजन्यान्, वङ्गाब्धिवेलातटे स्थापितनिजविजयस्तम्भो भूपतिकुञ्जर[15] करदीकृतान् कलिङ्गान् अवनमय्य [16]महेन्द्राभिभवाद्भीतैरिव समवेतैर्गजैः इभयुवति[17]भिश्च विन्ध्यारण्यानीं जित्वाऽवाचीं दिशं ययौ, तत्रत्यपर्वतीयशत्रू[18]न् सम्मर्दयन् कावेरीमुल्लङ्घमानश्चो लङ्केश्वरकीर्ति चुलुकीकृत्य प्रमदामिव नर्मदां नर्मदामुत्तीर्य विगतराजान्तर[19]भयेन चण्डसेनेन सत्कृत उज्जयिनीं प्रविवेश, तत्र च वासवदत्तया, पद्मावत्या च समागतोऽतिप्रीणश्चण्डसेनोऽनुभूतामन्दानन्दोऽभूदित्यतिप्रीतियुक्तो वत्सेश कांश्चिद्दिवसांस्तत्र विश्रम्य श्वाशुर[20]सैन्यैरन्वित प्रतीचीं दिशं जगाम । तत्र ईषदुद्[21]दृप्तक-मेघार्तिवाचाटान्[22] लाटान् अवनमयन्त तमवलोक्य मा मामयमब्धिमुन्मन्थितुमुन्मूलयेदिति सशीरया भीत्या तद्गजावधूतवनव्याजेनावेपत मन्दरधराधर । इत्थं भास्वद्विलक्षणोद्यमनस्तेजस्वी उदयन प्रतीच्यामपि प्रकृष्टमभ्युदय प्राप्नुवन् कुबेरतिलकामलकासङ्कशसिनीं कैलासहाससुभगामुदीचीं ककुभमभिससार । तत्र

---

१ कीर्तिः प्रिया यस्मै स कीर्तिप्रिय स चासौ पार्थिव इति शाकपार्थिवादित्वात्समास । २ 'गजसहाभ्याञ्चेति वक्तव्यम्'। ३ 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्'। ४ पादाभ्यां चरतीति पदिक 'पर्पादिभ्यष्ठन्,' 'इके चरतावुपसङ्ख्यानम्' इति पादस्य पदादेश । ५–७ 'प्रहरणम्' । ८ 'परश्वधाट्ठञ्' । ९ १० 'शक्तियष्ट्योरीकक्' । ११ 'उगितश्च' । १२ अमित्रमभिलषयेति विग्रहे 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावे 'अभ्यमित्राच्छ च' । १३ 'नद्यादिभ्यो ढक्' १४ 'राजश्वशुराद्यत्', 'ये चाभावकर्मणो ' ततः कुत्सिता राजन्या इति 'किं क्षेपे' इत्यनेन समास । १५ 'वृन्दारकनागकुञ्जरै पूज्यमानम्' । १६ महांश्चासाविन्द्रः, 'सन्महदि'ति समासे 'आ महत समानाधिकरणे'ति आत्वम् । १७ इभी चासौ युवतिश्चेत्यत्र 'पोटायुवती'त्यादिना समासे 'पुंवत्कर्मधारये'ति पुंवद्भाव । १८ 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इति निष्पन्नपर्वतशब्दात् 'पर्वताच्चे'ति छ । १९ अन्यो राजा राजान्तरम्, मयूरव्यंसकादित्वात्समास । २० श्वशुरस्येमे ( तस्येदम् ) सेनायां समवेता ( सेनाया वा इति ण्य ) तत उभयो कर्मधारयः । २१ 'ईषदकृता', 'ईषद्गुणवचनेनेति वाच्यम्' । २२ 'आलजाटचौ बहुभाषिणि' ।



१० कथा०

विनम्रेषु राजसु शासनमधिरोप्य तौर्यमङ्गलतारघोररवप्रतिरवैः, सन्मन्त्रिमुख्यपरितोषितलोकपालप्रतिदिशप्रदत्तसाधुवादैः सह निधानाधिगतं कुलोचितं सिंहासनमारुरोह। वीतलोभश्च सन् वसुधाविजयार्जितं च वसुवासवोपमं सत्कृत्य द्विजेभ्यो वितरन्, सामन्तमन्त्रिललाटिक[1]क्षितिपतिमण्डलञ्च कृतमहोत्सवोऽकृत कृतार्थम्।

इत्थं कौशाम्ब्यां रुमण्वद्यौगन्धरायणाधिकृतराज्यभारः कदाचिन्मार्दङ्गिकै[2]रन्यदा झार्झरिकैः[3] कदाचिच्च माड्डुकिकैर्विनोद्यमानः, कदाचिद्वासवदत्तयाऽन्यैश्च स्वानुजीविसभ्यैः[4]सङ्गीतप्राचार्यै[5]र्वीणां वादयन् पद्मावत्या च सह कुशलकुशीलवकुलशीलितविचित्रवाद्यकलशीरवविवशीकृतमनाः, सङ्गीतकं वा सेवमानः, समयमत्यवाहयत्। कदाचित्पर्य्यध्ययनो[6] विविधविबुधैः सह शास्त्रसागरममन्थत्। सन्नद्धपलाशश्यामवारबाणो[7] गृहीतधनुर्बाणोऽतिपुष्पबाणोऽश्वोरसं[8]मारुह्य[9] निष्कौशाम्बिः[10] मृगान् मृगयमाणोऽसौ कदाचिदारण्यकान्[11] वशमानयमानो मृगयारसमास्वादयन्नतिभयानकान् चित्रकान्, वृकान् व्याघ्रकांश्च सपत्राक[12]रोत्। कदाचिद्दुपाचमल्लो भल्लूकानमल्लत्। अन्यदा चाल्पपुरुषीणो[13]ऽतिमल्लो[14] मल्लशाले मल्लितमल्लमल्लकमतल्लिको मल्लकैरमल्लत्।

एवं सुखोपभोगेषु वर्तमानं तमेकदाऽऽस्थानस्थितं समागतो मुनिर्नारदः स्वीकृतातिमङ्गलीभूतवत्ससम्पादितातिथ्यः समुवाच—'वत्सेश्वर, संक्षेपेण ते किञ्चिद्वच्मि मामवधेहि—आसीत् पुरा पाण्डुनामा त्वदीयपूर्वपितामहो महौजा राजा। तस्य कुन्ती माद्री चेति द्वे भव्ये भार्ये बभूवतुः। [15]प्रातिपौरुषिको मथितप्रमाथी स नदीनमेखलां महीमहीनो विजित्य जिर्त्वरोऽप्रमत्य

*नारदस्य नरवाहनदत्तोत्पत्त्युपक्रम*

---

१ 'सहायां ललाटकुक्कुट्यौ पश्यति'। २ 'शिल्पम्'। ३ 'मड्डुकझर्झरादणन्यतरस्याम्'। ४ 'समाया यः'। ५ 'प्रादयो गताद्यर्थे प्रथमया'। ६ परिग्लानोऽध्ययनायेति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या'। ७ सन्नद्ध पलाशश्यामवारबाणेनेति 'अवादयः क्रुष्टाद्यर्थे तृतीयया'। ८ पुष्पबाणमतिक्रान्त इति 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया'। ९ अश्वानामुर इव इति विग्रहे 'अश्मादेयायामुरसः'। १० निष्क्रान्तः कौशाम्ब्या इति 'निरादयः क्रान्ताद्यर्थे पञ्चम्या'। ११ 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्' इति वुञ्। १२ 'सपत्रनिष्पत्रादतिव्यथने'। १३ अखण्डक्षाशितङ्गवलम्–इति खः। १४ मल्लानतिक्रान्तः। १५ मनोज्ञत्वाद् वुञ्, अनुशतिकादीनाञ्चेत्युभयपदवृद्धि। १६ 'दृणनशश्रिसर्तिभ्यः क्वरप्।'

धिनम्रेषु राजसु शासनमधिरोप्य तौर्यमङ्गलतारधीररवप्रतिरवै, तन्मन्त्रिमुख्यपरितोषितलोकपालप्रतिदिशप्रदत्तसाधुवादै सह निधानाधिगत कुलोचित सिंहासनमारुरोह। वीतलोभश्च सन् वसुधाविजयार्जित च वसुवासवोपम सत्कृत्य द्विजेभ्यो वितरन्, सात्ममन्त्रिललाटिक[1]क्षितिपतिमण्डलश्च कृतमहोत्सवोऽकृत कृतार्थम्।

इत्थ कौशाम्ब्यां रुमण्वद्यौगन्धरायणाधिकृतराज्यभार कदाचिन्मार्दङ्गिकै[2]रन्यदा झार्झरिकै[3] कदाचिच्च माड्डुकिकैर्विनोद्यमान, कदाचिद्वासवदत्तयाऽन्यैश्च स्वानुजीविसभ्यै[4]सङ्गीतप्राचार्यै[5]र्वीणां वादयन् पद्मावत्या च सह कुशलकुशीलवकुलशीलितविचित्रवादित्रकलशीरवविवशीकृतमना, सङ्गीतक वा सेवमान, समयमत्यवाहयत्। कदाचित्पर्य्यध्ययनो[6] विविधविबुधै सह शास्त्रसागरममन्थत्। सन्नद्धपलाशश्यामवारबाणो[7] गृहीतधनुर्बाणोऽतिपुष्पबाणोऽश्वोरसं[8][9]मारुह्य निष्कौशाम्बिर्मृगान्[10] मृगयमाणोऽसौ कदाचिदारण्यकान्[11] वशमानयमानो मृगयारसमास्वादयन्नतिभयानकान् चित्रकान्, वृकान् व्याघ्रकांश्च सपत्राकरोत्[12]। कदाचिदुपाचमल्लो भल्लूकानमल्लत्। अन्यदा चाल्पपुरुषीणोऽतिमल्लो[13][14] मल्लशाले मल्लितमल्लमल्लकमतल्लिको मल्लकैरमल्लत्।

एव सुखोपभोगेषु वर्तमान समेकदाऽऽस्थानस्थित समागतो मुनिर्नारदः स्वीकृतासिमद्वीभूततरसम्पादितातिथ्य समुवाच—'वत्सेश्वर, संक्षेपण ते किञ्चिद्विवक्षु मामवधेहि—आसीत् पुरा पाण्डुनामा त्वदीयपूर्वं

नारदस्य नरवाहनदत्तोत्पत्त्युपक्रम

पितामहो महौजा राजा। तस्य कुन्ती माद्री चेति द्वे भव्ये भार्ये बभूवतु। [15]आतिपौरुषिको[16]मथितप्रमाथी स नदीनमेखलां महीमहीनो विजित्य शिर्श्वरोऽवमत्य

1 'सज्ञाया ललाटकुक्कुट्यौ पश्यति'। २ 'शिल्पम्'। ३ 'मड्डुकझर्झरादणन्यतरस्याम्'। ४ 'सभाया य'। ५ 'प्रादयो गताद्यर्थे प्रथमया'। ६ परिग्लानोऽध्ययनायेति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या'। ७ सन्नद्ध पलाशश्यामवारबाणेनेति 'अवादय क्रुष्टाद्यर्थे तृतीयया'। ८ पुष्पबाणमतिक्रान्त इति 'अत्यादय क्रान्ताद्यर्थे द्वितीयया'। ९ अश्वानामुर इव इति विग्रहे 'अप्राख्यायामुरस'। १० निष्क्रान्तः कौशाम्ब्या इति 'निरादय क्रान्ताद्यर्थे पञ्चम्या'। ११ 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्' इति वुञ्। १२ 'सपत्रनिष्पत्रादतिव्यथने'। १३ अखण्डक्षाशितङ्गवलम्-इति खः। १४ मल्लानतिक्रान्त। १५ मनोज्ञत्वाद् वुञ्, अनुशतिकादीनाञ्चेत्युभयपदवृद्धिः। १६ 'इण्नशजिसर्तिभ्य क्वरप्।'

समुपात्तस्वल्पवस्त्राऽह तत पलाय्य दवीयसि देशेऽयायाकाम्या मास कृच्छ्रकर्मोप जीविनीतस्ततो निवसन्ती दीना, कर्णपरम्परया वत्सेश श्रुत्वा शरण्यु शीलैक पाथेयोऽऽस्मसरणमात्रैकध्येयाऽहमिहायाता । आस्थानमण्डपगतस्य च राज्ञोऽस्यर्णं गत्वा शरण याचितस्यादेशेन त्वच्चरणान्तिकमासादितवतोऽस्येव एव मे वृत्तान्तः । आवाङ्याम्निक्रियाधूमैर्मदीये दशावीपर्यङ्गले इति पिङ्गलिकानाम्ना प्रसिद्धाऽहम् । एवमुदितवृत्तान्तां तां देवी वासवदत्ता कुलीनेयमिति मनसिकृत्य प्रीत्यैव जगाद इह स्थितो वर्तते शान्तिकराभिधोऽस्माक पुरोहितो वैदेशिक । स्यात्, स ते देवर ।

एवमुक्तयात्युत्कया शान्तिकरमानाययितु प्रार्थिता वासवदत्ता प्रतीहारद्वारा तमाकार्यानुयुक्तपरिज्ञाततदन्वयाभिजनादि' अपीय ते प्रजावती ? इत्युक्त्वा स तां ब्राह्मणीमदीदृशत् । एव तयोः परस्पर परिज्ञप्तौ सजातायां ज्ञातवन्धुविनाशः शान्तिकरो भ्रातृजायां निजनिवासमानाय पितरौ भ्रातरश्च यथोचितमनुशोच्य दारकद्वितयान्वितां तां भृशमाश्वासयामास । देवी वासवदत्ता चापि तस्या द्वावपि ज्येष्ठकनिष्ठौ पुत्रौ बहुसम्पत्तिवितरणपूर्वक क्रमश शान्तिसोम–वैश्वानर नामानौ कृत्वा भाविन स्वपुत्रस्य कुलहितौ पुरोहितौ परिकल्पितवती ।

इत्थ तत्र सर्वेषु सगतेषु लब्धविभवेषु च दिनान्यतिवाहयत्सु शान्तिकरा विष्वेकदा तत्र स्वकीयै पञ्चभि सुतै सह शरावान् समादायागतामेकां कुम्भकारीमालोक्य पार्श्ववर्तीयां पिङ्गलिकां वासवदत्तोवाच—सखि, समालोकयेमाम् । इय हि पुत्राणाम् पात्रम् इति पञ्चास्या पुत्राः । नाद्यापि ममैकोऽप्यत ईदृशी अपीय न मादृशी अननुभूतात्मीयैर्स्तनतिमुखेतीयशोभासुलोद्भूतसन्तापसन्तता वर्तते । एवमुक्ता पिङ्गलिकाऽब्रवीत्—देवि, पापभूयिष्ठा प्रेष्ठा प्रजेयम् दरिद्रेष्वेव भूयसी । युष्मादृशेषु च जनेषु कश्चिदुत्तमपुण्यात्मैव जान्मिके इति त्वरयालम् । अत्र भवत्यप्यचिरादेवाचासोचित्तसुतसुखा भविष्यतीति ।

---

१ ब्राह्मणादेराकृतगणत्वात् ष्यञि हलस्तद्धितस्येति यलोप षित्वान् ङीप् सतो नञि अयायाकाम्या ( असम्मनिन्ना ) औदासीन्येनेति भावः । २ पथ्यतिथिवस्तीतिढञ् । ३ 'अभेश्चाविदूर्ये' । ४ 'ईषदकृता' । ५ 'अनत्याधान उरसिमनसी' । ६ 'इदमो ह्,' 'इदम इश्' । ७ पुयोगलक्षणा ङीप् । ८ 'मुखपार्श्वतसोर्लोपश्च' । ९ 'त्यदादिषु दृशोऽनालोचने कञ्च,' 'टिड्ढाणञ्' 'इदकिमोरीशकी' टिड्ढेति ङीप् । १० आ सर्वनाम्नः । ११ 'वृद्धाच्छ' । १२ 'मुखपार्श्वतसोर्लोपश्च' । १३ 'तदर्हति इति ठञ्' ।

मन्यमान शबर स्वपचीं प्राप्य भूरिभारहार्यमुक्तामृगमदादियुक्तोऽस्मद्गृह मायातोऽतुलितवस्त्रिक[1] प्रभूत तत्प्राभृत मत्पित्रे न्यवेदयत्।

सोऽसौ[2]वमतीते तद्दिने रात्रौ रहसि मामवगततत्कन्यादर्शनाशेषवृत्तान्त कुर्वाणस्तत्र गन्तु भृशमुन्मनीभूत[3] मामादाय स शबरेशस्तद्दिशामुद्दिश्यापरिक्रिय निरपेक्षादिशिश्वियत्। प्रातश्च सशबरेश मा तत कापोतमश्वगत्य तत्प्रीतिप्रसीतो मत्पिताऽत्रलम्बितत्वतिस्तस्थौ। ततस्त्विं[4]मा तेन चाह शबरेण क्रमात्तुपाराद्रिं नीत इति तस्मिन् सरसि स्नानानन्तर स्वच्छतर सलिल पीत्वा पीलुकुण[5]कमनीयकानने निष्कुं[6]लाकृतस्वादिष्ठफलै[7]शितर्भवयोरावयोर्विकीर्णकुसुमास्तरण भृङ्गीसङ्गीतसुन्दर शुभगन्धवह ज्वलितौषधिदीपक तत्काननमेव निशि विश्रान्त्यै वासवेश्माभूत्।

अन्येद्यु प्रतिपद तत्तदुत्कलिकाभृता तन्मार्गानुधाविना मनसा प्रत्युद्गता इव स्फुरद्दक्षिणचक्षुषा च सूचितागमना इव, सटोल्लसिंहपृष्ठस्था शरदम्भोधरोत्सङ्गसङ्गिनी निशीथि[9]नीनाथकलाभिरैन्दवीकला इव तत्रागता सा सुभ्रूर्विलसद्विस्मयौत्सुक्यसाध्वसाभ्यां चक्षुर्भ्यां मयाऽवलोकिता। सा चापि सिंहादवतीर्या वचितपुष्पा सरसि स्नाता तत्तीरगतहरमर्चयतिस्म। समापितसपर्या च तामुपेत्य मत्स[10]खे शबर सप्रणाममात्मानमावेद्य ममानयनसूचनपुरस्सर तत्र मामुपस्थापयितु तदनुमतिमजिज्ञासत। विदिततदभिप्रायेण च शबरेण तत्र नीत मा प्रणयपरिपूर्णेन नेत्रेण तिर्यगालोकयन्ती मदनावेशवशगा शबरमभ्यधात्–'सुहृत्ते मर्त्यो नाथ ना, य [12]दर्श दर्श यदीदृशी दशा मे सजाता। नेयमाकृतिर्मर्त्यानाम्। अय तु मद्वञ्चनाय समागतः कोऽपि दिव्य इति निःसांशयिकम्[13]।' एतदाकर्ण्य

---

१ वस्त्र हरति वहत्यावहति वेति 'वस्त्रद्रव्याभ्यां ठन्कनौ'। २ डासयेन युगपदिति यौगपद्येऽव्ययीभावे–'अव्ययीभावे चाकाले'। ३ 'अदर्शनस्यक्षुश्चेतो रहोरजसा लोपश्चेति'श्विमल्लोपौ, 'अस्य च्वौ'वितीत्वम्। ४ 'अस्मायामेधास्रजो विनि'। ५ पीलूनां फलानां पाक –'तस्य पाकमूले'–इति कुणप्। ६ निर्गत कुलम न्तरवयवानां समूहो यस्मादिति बहुव्रीहौ 'निष्कुलान्निष्कोषणे' इति डाच्। ७ अतिशयेन स्वादु, 'अजादी गुणवचनादेव'वति सहकारेण 'अतिशायने तमबिष्ठनौ,' टरिति टिलोपः। ८ 'आशिते भुवः करणभावयोः' इति खच्। ९ 'आणिस्यादातोलजन्यतरस्याम्'। १० राघ्रिः। ११ 'राजाह सखिभ्यष्टच्'। १२ 'आभीक्ष्ण्ये णमुल् च', 'नित्यवीप्सयो', 'कृन्मेजन्तः' इत्यव्ययत्वम्। १३ 'संशयमापन्न' इति ठञ्न्तादहुमीहिः।

एवमुक्तो वैनतेयस्तथेत्युक्त्वा समुपात्तकीलालकलश काद्रवेयानुपेत्य[1] हरिवर प्रभावान्नीतान् तान् उवाच यदेतदमृत मयाऽऽनीतम् । तच्च ममाग्रे भुक्त्वा गृह्यताम् । भयच्छेदहमेतद्दर्भसस्तरे सस्थाप्याग्याछ्रो-मोच्य गच्छामि, यूयमितोऽमृतमेतत्स्वीकुरुत । 'तथास्तु' इति उक्तेषु नागेषु, गरुड पवित्रे कुशास्तरे कीलाल कलशमाधत्त । तेऽपि च तन्मातर मुमुचुरिति दास्यमुक्तया मात्रा सह गते गरुडे, यावदेव विगतभीता काद्रवेयास्तदमृतमाददते तावदेव स्वशक्तितो नागान् विमोह्य शक्रः कीलालकलश कुशसस्तराज्जहारेति पीयूषस्यापि[2] स्यु एत द्रिया कुशसस्तरमेव लेलिह्यमाना विषण्णा नागा पाटितजिह्वा द्विजिह्वतां ययु । समवाप्तहरिवरस्तार्क्ष्यश्चानुदिन निपत्य तान् भक्षयितु प्रारभतेति कृत्स्न नागलो कमेकदैव नष्ट मन्यमानो भुजगेश्वरो वासुकि , प्रार्थनापूर्वकमेकैक नाग तदाहारार्थं प्रेषयितु प्रतिज्ञाय, नागलोके तत्प्रवेश निषिषेध । तथेति प्रतिपन्ने वैनतेये वासुकिस्तदाहारार्थमनुदिनम् एकैक नाग प्रेषयितु प्रारभत । एतेन च क्रमेण संख्यातीता[3] फणिनो विनाशमफणन् ।

अहद्य शखचूडाख्यो नागो निजवारक्रमेण नागराजनिदेशतोऽथेमां वध्यँ शिलामायातः इति सद्यो निधन गमिष्यँतो मे शोकेनाम्बा परितपति । एतदाकर्ण्याविदु खितो जीमूतवाहनसमभाषत—'अहो अस्याने वासुकेरेष क्रमो यन्नि सखेनेव स्वहस्तेनैव स्वप्रँजा रिपोरामिषतां नीयन्ते । कश्यपापत्यस्य तार्क्ष्यँस्यापि अक्लयधर्षितदेहार्थमित्थकरण न युज्यते । तदद्य त्व तावत्प्रसीद, मा विषीद, गृहमितो गत्वा निषीद । अह त्वामद्यैक स्वशरीरप्रदानेन रक्षामि । एवमाकर्ण्य शखचूडोऽपि धैर्येणेत्थमुवाच, 'भगवन्, शान्त पापम् । मैव पुनरि त्यमभिधत्था । अह निजकुल कलङ्कपङ्किल कर्तुं नेहे; नेहैत्य काचस्येव मम शरीरस्य कृते मुक्ताकणेरिव भवादृशस्य क्षतिर्जातु युक्ता ।' इत्यमुक्त्वा स साधु

---

१ 'सज्ञायाम्' इति कद्रुशब्दादृढि 'द्व्यच ' इत्यपत्य ढकि 'ओर्गुण' ।
२ 'अपि' पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु' इत्यनेन अप्रयुज्यमानबिन्दुपदार्थद्योतकतायाम् अपेः कर्मप्रवचनीयत्वात् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति अस्तेः सत्य न षत्वम् । ३ द्वितीयाश्रितातीतेति समास । ४ 'हनो वा यद्वधश्च वक्तव्य ' । ५ तद्य परुदिति' निपातनात्साधु । ६ 'तौ सत्', 'लृट सद्वा' । ७ उपसर्गे च सज्ञायाम्' इति ड ।



१२, १३ कथा०

प्रविविक्षुर्जीमूतवाहनेनाभिहित —'पक्षीन्द्र, सत्यं चेत्त्वं पापाद्विभेषि नातः परं त्वयेमे भुजङ्गा भक्ष्याः। पूर्वं भुक्तेषु च तेषु भोगिषु अनुशयो विधेयः। एषा एवास्मात्पापात् यथार्था विशुद्धिर्नान्येति'। भूतानुकम्पिना तेनेत्थमुक्तो गरुत्मान् गुरूपदेशमिव तन्निदेशं हृद्देशे निवेश्यावशिष्टानस्थिशेषानाशीविषान्, क्षताङ्गं जीमूतवाहनञ्च प्रत्युज्जीवयितुं प्रजवी[1] नाकं ययौ।

एतदनन्तरं जीमूतवाहनभार्याभक्तिसन्तुष्टया गौर्या सुधया सिक्तो जीमूतवाहनोऽधिकतरोद्भूतकान्त्यङ्गः समपद्यत। एवं तस्मिन् स्वस्थतामासादितेऽथ राज्ञीतममृतं कृत्स्नं वेलातटेऽभिवर्ष्य विपन्नान् पन्नगान् सर्वान् प्रत्युज्जीवयामास गरुडः। ततोऽक्षयेण देहेनामरकीर्त्या च विराजितं जीमूतवाहनं बन्धुजनोऽभ्यनन्दत्। गौर्यां दृढाभक्ति[2]स्तद्भार्या चाप्यतिहृष्टाऽभूत्। शङ्खचूडोऽपि च तद्विसृष्टो रसातलं प्रविवेश। जीमूतवाहनोऽपि च मलयाचलाद्विजनिलयं तुहिनशैलतटं गत्वा मित्रावसुना मलयवत्या निजपितृभ्यां च सहितो विद्याधरचक्रवर्तिपदं बुभुजे'।

इत्थं यौगन्धरायणमुखाद् विद्याधरकथामाकर्ण्य गर्भभरोदारदोहदिनी वासवदत्ता, निरतिशयं मोदमाना, मागधी[3] भार्यस्य वत्सेशस्य समीपे वर्तमाना भाविविद्याधरेन्द्रनिजतनूजविषयकविविधाभिर्वार्ताभिस्तद्दिनमनैषीत्।

परस्मिन् दिने सचिवैर्युक्तं समीपस्थं वासराजमुवाच—'आर्यपुत्र, यतः प्रभृति गर्भोऽयमयाधृतस्तदा प्रभृत्येव तीव्रा तद्रक्षाचिन्ता मां बाधते। अद्य तच्चिन्ताक्रान्तैव सुप्ताहं निशि कयाचिद् भस्माङ्गरागसितया, पिशङ्गजटाकलापया, शूलहस्तया च मूर्त्याऽनुकम्पासम्पादनपुरस्सरमहमुक्ता, 'पुत्रि गर्भस्य कृते न त्वया चिन्ता कार्या। स मयैव दत्त इति मया तस्य रक्षा क्रियते' एवमुक्त्वाऽन्तर्हितायां तन्मूर्तावहं प्रबुद्धा, तमिस्रा चाप्यरुणकिरणैरपमार्यमाणा, रसातलशरणमशिश्रियत्।

एवमित्यादिभिरन्यैरपि भविष्यन्निजतनुजसम्बद्धैरालापैरतिवाह्यमानेषु दिवसेषु, सर्वेषां मन्त्रिणां शुभलक्षणा, भाविकल्याणसूचकाः, क्रमेण पुत्रा उदपद्यन्त। प्रथमं तावत् यौगन्धरायणस्य मरुभूतिरिति विश्रुतस्तनयो जातः। ततो रुमण्वतो हरिशिखः, वसन्तकस्य तपन्तकः, नित्योदिताख्यस्य, इत्यकापरसञ्ज्ञस्य

---

१ 'प्रजोरिनिः'। २ भक्तिशब्दस्य प्रियादिषु पाठात् स्त्रियाः पुंवदित्यस्याप्रवृत्तिः। ३ 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे'।

निशम्यातितरां तुतोष । अथ मन्त्रिवरा समागत्य शिशवे राजसून विनवेय गौरवपुषो विधृतवपुषो हृदयानन्दान् स्वसुतान् समर्पयामासु । इत्थ यौगन्ध रायणिर्मरुभूतिः रौमण्वतो हरिशिख, ऐत्यकिर्गोमुख, वासन्तकिस्तपन्तक इत्यादयस्तस्य भाविसहचारिण पिङ्गलिकाया यमजौ पुत्रौ चेत्थ महोदयहेतुभूतै षड्भिर्गुणैरिव युक्त क्रीडाकलितललिताव्यक्तनर्माभिलाप प्रीतिप्रवणमनसां नृपाणामङ्कतोऽङ्क यान्त सबहुमान विराजद्वीरलक्ष्मीविभू[1]मान स्मेराननसरसिज सप्रमोद पश्यतो द्वितीयो[2]भार्यस्य भार्याद्वितीय[3]स्य वत्सेशस्य, सान[4]न्दा दिवसा व्यतिजग्मु ।

तस्यैकदा कश्चिद्दिव्यः, किरीटी, खड्गी, स्र[5]ग्वी च पुरुषस्समागत । भूपालश्च सम्पादितसत्कृतिं, प्रणत च सकौतुक, कस्त्व, किञ्चेह ते समागमनेन प्रयोजन मित्यभ्यदधात् । सोऽब्रवीत् 'देव, अह मर्त्यो भूत्वा शक्ति

शक्तिवेगकथा  वेगाख्यो विद्याधर सम्पन्न इति प्रभूतारिरह स्वकीयभावि चक्रवर्तिन भवतस्तनय द्रष्टुमिहायात । एतदाकर्ण्यातिहृष्टो वत्सेश कथ विद्याधरत्वमवाप्यते, कीदृग्विध च तत्, कथ वा त्वया तदवाप्तम् इत्यपृच्छत् । राज्ञस्तद्वचनमाकर्ण्यातिविनयावनतो विद्याधर शक्तिवेग इत्थ प्रत्युत्तरीतुमारभत—'राजन् विद्याधरपदं शङ्कराराधनसाध्यम् । तच्चानेकविध, किन्तु मया यथा तदवाप्तं तुभ्य तदुदीर्यते ।' एवमुक्त्वा वासवदत्तायां शृण्वन्त्यां स स्वसम्बद्धां कथां वक्तुमित्युपाक्रमत—आसीत्पुरोत्तरपूर्वस्यां दिशि, भूतलललाम भूत वर्द्धमानाख्य नगरम् । तत्र बभूव परन्तप परोपकारी नाम नृपतिः । महत्त्वाभिलाषिणस्तस्य कनकप्रभाभिधा महिषी बभूव । रतिरूपोपमदनाय इव धात्रा विनिर्मितां सैकां कन्यां सुषुवे । कालेन शनै शनै वर्द्धमाना सालोकलोचन चन्द्रिका 'कनकरेखा' इत्यभिधां दधे । अतिक्रान्तशैशवामतिशयसुन्दरीं ताम वलोक्य पितुर्हृदि तदुपयुक्तवरेण सह तदुद्वाहचिन्ता समुदपद्यत । किन्तु तदर्थं परामृष्टा तत्पत्नी समबोधयत्—'कनकरेखाविवाहार्थं देव एव इत्थ चिन्तातुरो

---

१ बहुशब्दात् पृथ्वादित्वादिमनिचि 'बहोर्लोपो भू च बहो'। २ 'द्वेस्तीय', 'तस्यापूरण्योश्च' । ३ भार्यासहायस्य । ४ 'तेन सहेति तुल्ययोगे' इत्यत्र तुल्ययोगस्य प्रायिकत्वात्समासे 'वोपसर्जनस्य' इति सहस्य सादेश ।

५ 'अस्मायामेधास्रजोविनि' । ६ 'दिङ्नामान्यन्तराले' ।

चिरघर तं वणिजमपश्यद्यस्य पञ्चमब्धौ मग्नमासीत्। तमवलोक्य यावदेव स तत्समीपमुपसर्पति तावदेव स वणिगपि तं कण्ठे गृहीत्वाऽतिहृष्टः पृष्ट्वा च तस्मात् सर्ववृत्तान्तं, स्वस्य चापि प्रवहणभङ्गव्यतिकरमादितः सर्वं तमुक्त्वा, निजगृहम् नैषीत्। तत्र साधुना सोऽधुना साधुतरमनुपादितसत्कारो व्यतियापितत्रियामोऽपरेद्युस्तद्वणिग्व्यवहारिणां यानमारुह्य तैः सहोत्स्थलद्वीपमवाप्य पूर्ववदेव स्वयं धुविष्णुदत्तगृहे तिष्ठासया पाथद्विपणीमध्येन गन्तुं प्रावर्तत तावद् दाशाधिपतेः सत्यव्रतस्य सुतास्तमवलोक्यैवमब्रुवन्, 'महान् तातेन साकं कनकपुरीं मृगयमाण इतो गतो भवान् कथमेकक एवायायत। एतदाकर्ण्य शक्तिदेवस्तान् अवोचत्, 'युष्मत्पिताऽम्बुराशावम्बुभिराकृष्टवहनो दहनोदरे निपतितो वाडवस्य, पश्यतो ममस्य गतोऽनश्यत्। तद्बुद्ध्वाऽतिक्रुद्धा दाशपतिसुताः स्वसेवकानब्रुवन् 'बध्नीत दुरात्मानमेनम्; पितरमयमस्माकं हतवान्, कथमन्यथैकपोतस्थयोर्द्वयो-रेकतरस्तत्र उत्तरेदितरश्च फेनिलोदन्वद्वाडवाग्नौ निपतेत्। अतोऽस्मत्पितृवैरिण-मित्यस्युँवैरस्माभिः स पशूकृतेनानेन चण्डिकादेवीबलिरुपहर्तव्यः इति'। ततो बद्ध्वा दाशपुत्रैश्चण्डिकामन्दिरमानीतः शक्तिदेवः स्वजीविते संशयानो रात्रौ देवीं चण्डीं स्वरक्षायै हार्दिकयत्नया प्रार्थयमानः कथञ्चित्किञ्चिल्लब्धनिद्रः स्वप्ने तद्गर्भ-गृहनिर्गतां काञ्चिद् योषितमपश्यत्। सा चाकृत्या दिव्या, प्रकृत्याऽप्याजवजुष्टेन मुपच्छायामापत् 'शक्तिदेव, मा भैषीः, न तेऽनिष्टं कथमपि भविष्यति। एषां दाशपुत्राणां बिन्दुमती नामधेया स्वसाऽऽस्ते, सरसा तऽभिरूपमालोक्य त्वां निज-भर्तृत्वायमभ्यर्थयिता। तदभ्यर्थनासिद्धिरवश्याऽस्य करणीया। सा च न धीवरी[6] अपि तु शापतो मर्त्यत्वमुपेता दिव्या स्त्रीति सा त्वामस्मान्मोचयिष्यति। एतत् श्रुत्वा स प्रबुद्धः।

प्रातस्तद्दाशकन्या, देवीमन्दिरमागता सुवर्णमानसं समुपसृत्यावोचत्— 'अहमितस्त्वां मोचयिष्यामि तत्र मदभिमतं कुरु। भ्रातृसम्मता प्रयाता अपि बहवोऽपरा वरा मया प्रत्याख्याताः किन्तु त्वयि दृष्टे मदीये हृदि काऽप्यनिर्वचनीया नैसर्गिकप्रीतिरुपचेति त्वं माम् भजस्व।' एवमुक्तः शक्तिदेवः स्वस्य स्मरन्नपि

१ फेनादिलच्। २ उदन्वानुदधौ च। ३ 'कर्मणि हनः' इति णिनिः। ४ उपमा असयो मै 'प्रहरणार्थेभ्यः' परे निष्ठासप्तम्यौ। ५. स्वौच। ६ 'वनो र च' इति ङीप् रश्चान्तादेशः।

प्रहृष्टस्तस्या प्राथना स्वीकुर्वाणो बन्धना मुक्त स्वमलब्धदेव्यादेशैस्तद्भ्रातृभिर्विहितस्वितां ता सुमुखीं परिणीतवान्।

रूपान्तरोपागतया विन्ध्यया भार्ययैकदा प्रासादपृष्ठस्थ शक्तिदेव ऊढगोमां समारक मार्गागत निषादमेकमवलोक्य निजप्रियामब्रवीत्—'त्रैलोक्यधन्या या धेनवस्तासामपि पलल पापकृदयमश्नातीति कोऽन्योऽस्मात्पापकृत्तमो भवेत्' एतदाकर्ण्य विन्दुमती निजपतिमवदत्—आर्यपुत्र, अचि त्यमत्र पापम्। स्वल्पापराधैवाह गवां प्रभावेण दाशकुलेऽस्मिन्नुत्पन्नेति काऽत्र निष्कृति। एतदाकर्ण्यातिनिर्बन्धपर शक्तिदेवो निजदाशकुलोत्पत्तिकारण तामनुयुञ्जान एवमुक्त यदि त्व मम वचन कर्तु प्रतिजानीषे तदाऽतिगोप्यमप्येतत्त्वामह ब्रवीमि। तदाकर्ण्य शपथोत्तर तथा कर्तु प्रतिज्ञाते शक्तिदेवेन, साऽऽदावेव त स्वसमीहितमुक्तवती यदिहैवापरा ऽपि तेऽधुना भार्या भवित्री। सा चाचिरादापन्नसत्त्वा भविष्यतीत्यष्टमासंजातस्तस्या गर्भस्तदुदर पाटयित्वा त्वया निर्घृणमाकृष्टव्य। एवमाकर्ण्यातिविस्मित शक्तिदेव भूयो दाशपुत्री जगाद, एतावन्मात्र त्वया कस्यापि हेतोममोक्त कर्तव्यम्। अथ यथा मे दाशगृहे जन्म तद् ब्रुवन्त्या मत्त सावहिति समाकर्णय—जन्मान्तरेऽह काऽपि विद्याधरी समभवम्। तस्याश्च मे दन्तैश्छित्वा वीणासु तन्त्रीर्योजयन्त्या शुष्केण गवां स्नायुना वदन स्पृष्टमित्येषाऽधोगतिर्मयोपलब्धा। एव ब्रुवन्त्या तस्यां, ससम्भ्रममेकतमस्तद्भ्राता समागत्य शक्तिदेवमभाषत—उत्तिष्ठ महत्तरोऽय सूकर क्वाप्युत्थाय हतानेकजनः सदर्पमित एवागच्छति। तदाकर्ण्य रक्षणयत्नध्यस्त शक्तिर्हस्त शक्तिदेवोऽश्वारूढो वराह त प्रजहार किन्तु नैकनिर सूकर सूकर स तेषां पलाय्य सत्वर सुषिरमेकमविशत्। शक्तिदेवोऽपि च विल प्रविश्य तमनुसरन् एकस्मिन्नुद्यानेऽद्भुताकृति कन्यामेकामपश्यत्। ससम्भ्रम तेन 'का त्वम्' इति पृष्टा साऽभाषत—सुभग, अह दक्षिणदिङ्नाथस्य चण्डविक्रम

---

१ 'सुकर्मपापमन्त्रपुण्येषु कृञ' इति क्विप् ततस्तमप्। २ अष्टौ मासा आसन्न यस्येति विग्रहे 'काला परिमाणिना' इतिसमास। ३ 'शुपक'। ४ 'एकाच प्राचाम्'। ५ यजयाच० इत्यादिना नङ। ६ हस्ते शक्तिर्यस्येति विग्रह 'प्रहरणार्थेभ्य पर निष्ठासप्तम्यौ'। ७ 'वाऽऽहिताग्न्यादिषु'। ८ 'ऊपसुषिमुष्कमधोर'।

नरनाथस्य बिन्दुरेखाऽऽख्या कन्याऽस्मि । अकस्मात्कस्माच्चिदुपगतो ज्वलितलोचनो दैत्य उपधिना पितृगृहान्मामपहृत्येहानीतवान् । स च सुधार्त आमिषाशी, दर्पान्धो, मायावी, एतद्वराहरूपो यद्दिगतोऽद्यैव केनचिद्द्वारेण शरया विद्ध इह प्रविश्य पञ्चत्वमित इत्यदूषितकौमाराऽहं वाराह तच्छ्रुत्य पतित तत्रावलोक्य पलायमानेहायाता यातास्त दृष्टिगोचरताम् । तच्छ्रुत्वा 'मयैव निजाप्रतिहतशरया शरया वराहो, वरारोहे, व्यापादितोऽहञ्च शक्तिदेवाख्यो विप्र एव परिचायित निजाभिधानीयक 'तर्हि त्वमेव मे भर्ता निर्दिष्टः' इति तयोक्तस्तयैव सह बिल द्वारेण निर्गतो निजभवनमासाद्यालौकिकरूपवत्यै तत्सर्वं बिन्दुमत्यै हर्षियावेद्य तच्छ्रुत्वा कुमारीं तामिन्दुलेखामिव बिन्दुरेखामुदवहत् ।

तत्रैव कृतकार्यस्य द्विभार्यस्य पत्नीपरिजनादिक्रियमाणसेवस्य शक्तिदेवस्य द्वितीया पत्नी बिन्दुरेखाऽन्तर्वत्नी सञ्जातेति गर्भस्याष्टमे मास स्वैर समुपेत्य बिन्दुमती शक्तिदेव स्मारिततज्जायोदरविपाटनरूपप्रतिज्ञ कुर्वाणा निजप्रणपाल नार्थं व्यजिज्ञपत् । प्रतिज्ञापाशबद्ध शक्तिदेव स्नेहपर्य्याकुलोऽनुतापोनिगत्य बिन्दुरेखाऽन्तिकमुपगतस्तत्र विज्ञापितसमवृत्तान्तस्तयोक्तः 'बिन्दुमतीहित हित तेऽवश्य करणीयम् । माऽत्र वृथा कृथा घृणाम् । न चाप्यस्यां कृती वसते काऽपि नृशंसता । इत्येवमभिदधत्यां बिन्दुरेखायां पापशङ्किते शक्तिदेवे दिवो भारतीयमुदभूत्, 'शक्तिदेव, त्वया गर्भोऽयमवश्यमाकृष्यताम् । कण्ठे मुष्ट्या गृहीतोऽसौ ते खड्गो भविष्यति' । एवमाकर्णितदिव्यवाणि , शस्त्रपाणि , शक्ति देवस्तस्या पाटितोदर गर्भमाकृष्य करेण कण्ठतोऽग्रहीत् । गृहीतमात्रश्च स तद्व खगः खड्ग सञ्जातः । विप्रश्च विप्र विद्याधरोऽभूत् । बिन्दुरेखा च विद्युद्रेखा इव तत्क्षणमदर्शनतामिता । पुत्रसमयमवलोक्य तथाविधः स स्वद्वितीयपत्न्यै न्यवेदयदिति सा तमाह, 'नाथ वय कनकपुरीतः शापच्युतास्तिस्रः स्वसारः । तास्वेका कनकरेखा यस्याः शापान्तस्त्वया वर्धमानपुरे दृष्ट । साऽपि स्वपुरी गता। अहञ्च तासु तृतीया । ममापि शाप क्षान्त्यै इति मयाऽद्यैव निजनगरी गरीयसी

---

१ 'उपसर्ग घोः किः'। २ श्रामयत्योषम्यदाम दीपम । ३ 'प्राग्-भृथातियथोपचनोत्तराधरादिभ्योऽम्' । ४ बाह्यमित्यत्र 'दाग्नीनाम्०' इत्यादिना एन् ततः प्रदरणादित्वान्मत्वप्या पराजम् । ५ काल भ्रातोऽस्यति 'कालायत्' ।

गमेलिमा[1]। तत्रैवास्माकं विद्याधरशरीराणि, ज्यायसी भगिनी चन्द्रप्रभा च वर्तन्ते इत्येतस्य प्रभावत क्षौद्रेपकस्य प्रभावान्मया सहाशु कनकपुरीं गच्छ। तत्रावगतसर्वोदन्तेन वनस्थेन पित्रार्थिताश्चतस्रोऽप्यस्मान् भार्यात्वेनावाप्य विपुलसम्पर्यां तस्यां पुर्यामनापद्राज्यं कुरु। एवमुक्तस्तथेति स्वीकृत्य विन्दुमत्या साहाय्येन[2] गगनपथेन कनकपुरीमापन्न शक्तिदेवो मण्डपत्रयदृष्टचरकनकरेखाया स्थानमभिरनुप्रविष्टास्तिस्रोऽपि निजभिया, तज्ज्येष्ठामुपरस्थितमङ्गलामुत्सुकया दृष्ट्या तत्र वर्तमानां, चतुर्थीं चन्द्रप्रभां चावलोकितवान्। तत्र यथानियोगव्यापृतपरिजननिश्चनिताभिनन्दितागमनोऽधिवासगृह नीत स चन्द्रप्रभया निजगदे'सुभग' या त्वया वर्धमानपुरे कनकरेखा राजसुता समवलोकिता सेयं मे चन्द्ररेखाऽऽख्या भगिनी। उत्स्थलद्वीपे च या प्रथम त्वया परिणीता दाशाधिपपुत्री विन्दुमती सेयं मे शशिरेखाख्या स्वसा। तदनु या दानवानीता विन्दुरेखा राजसुता ते भार्याऽभूत्सेयं शशिप्रभाऽभिधाना ममानुजा। तदिदानीमस्माभि सहारण्यस्था स्मत्पितुरन्तिकमेहि तेन प्रत्ताश्चाखिला अस्मान् परिणयस्व।

एवं मुक्तश्शक्तिदेवोऽनुवनमचिर[3] गत्वा प्रमुदितेन विद्याधरेन्द्रेण प्रदत्तास्ता कन्या यथाविध्युपयम्य समुपलब्धकनकपुरीप्राज्यराज्यो विद्याधरेन्द्रदत्तेन शक्तिवेगाख्येन नाम्ना विद्याधरेषु प्रसिद्ध सपदि स्वा सर्वा विद्यास्तत्र वितरन् 'अतिप्रभाव भवन्तमन्यो न जेष्यति' युष्मासु वत्सेश्वराद्यश्चक्रवर्तीनरवाहनदत्त नामा समुदेष्यति। स एव ते भावी विभुरिति तस्यैव त्व नतिं विदध्याः इत्युक्तवता विद्याधरेन्द्रेण स सत्कृति तपोवनाद्विसर्जित शक्तिवेग स्ववधूभि सह कनकपुरीं प्रविश्य तिष्ठन्नितरामुपलब्धनिर्वृतिर्विद्याधरसम्पत्तिं पुत्रपौत्रीर्णतामनयत्[4]।

इत्थमात्मीयविचित्रचरित्रमुक्त्वा शक्तिवेगो भूयो वत्सेश्वरमुवाच—'हे शशाङ्ककुलभूषण, स एवाहमुत्पत्स्यमानचक्रवर्तिभावत्कसुतचरणयुगलदर्शनलालसमानसोऽनुद्वेग शक्तिवेग। इत्थं मयेह मनुजेनापि शङ्करप्रसादाद्विद्याधराधिपतिताऽऽप्ता। स चाहमधुना प्रभु दृष्ट्वा निजधाम प्रयामि। (इति शक्तिवेगकथा)

एवमुक्त्वा प्राप्ताभ्यनुज्ञे शक्तिवेगे क्षणादन्तरिक्षमुत्पतिते देवीभ्यां सहित

---

१ पेल्मिर उपसमयाम्। २ 'सह याद्वा'। ३ 'अनुर्यत्सगया'।
४ 'परोवरपरम्परपुत्रपौत्रमनुभवति।

शिशुवनयो वासेशो मन्त्रिभि सहानिर्वचनीयो सम्मदमयीं दशामनुबभूव। तथा यथासमयसम्पादिताऽन्नप्राशनमङ्गीकरणादिसंस्कारो वासेश्वरिनरवाहनद त्तोऽभिवर्द्धमानस्व मङ्गलकामनया हरिहरादिदेवपूजापरायणाभ्यां दम्पतीभ्याम्, देव्या वासवदत्तया पद्मावत्या चानिश सस्नेह पाल्यमानोऽष्टवर्षैर्जातो गुरुभि र्विनीयमान सद्वराजेन गुणैरापूर्यमाणेन धनुषा इव वपुषाऽतिशयशोभासम्पन्नो मन्त्रिपुत्रैः सह रमणीयास्मारामेषु रममाणोऽवर्तत ।

अस्मिन्नेव काले वितस्तातीरे निवसदनेकदुस्तक्षा, रत्नरचितात्रिसुदृढानेक प्राकारकक्षा, वितस्तामन्ववसितप्रासादभित्तिसम्पर्कप्रवहत्सीलकान्तप्रतिमाम्बुद जलक्रीडदनेकपर्फरायमाणतिमिङ्गिला, किलासीत्तक्षशि

कलिंगसेनाकथा मदनमञ्चुको त्पत्तिश्च

ला-भिधान दधाना नगरी। प्राज्यराज्यप्रथितनिज निष्पर्यनीय सौन्दर्यविहसिताकाय, राजकार्यविहि तास्मोवृयपरश्वैर्निस्तारादन्तात्मानि, निजौरसप्रजा इव प्रजा पालयिता, ईर्ष्यांकूरणभक्तिरूप्यपरीमि

सत्तारायनुरक्ति, आध्यात्मिकतेजोऽसिरैकृतलौकिकत्र्यचनल्गुनिरपि पार्थिवत जप्रसराहदिवोत्पादिपदुहृदार्दिकधुनिः[५], मस्कंरिणा ममस्करिणामूरैपि द्विपशिरह्कुशकरिणां मूरैः, तस्यामभूत्कलिङ्गदत्तनामा नृपति । भार्यया तया सह वर्तमानस्य सुदिनस्तस्य दाव्या सह वर्तमानस्य शचीपतेरिव दिवि भुवि दिवसा जग्मु । इतश्चदिवे त्रिदिवौकसां प्रवृत्ते ऐन्द्रेमहिके नृत्यगोतारावेका सुरभिदत्ताऽऽख्या वराऽप्सरा नारस्यतेति सप्रणिधानेन कुम्भेरिणा दृष्टा सा केन

१ 'मङ्गलपरिवापद्ये'। २ 'द्वन्द्वे घि। ३ 'धर्मादिष्वनियम' 'राजदन्तादिषु परम्'। ४ अष्टौ वत्सरा जातस्य यस्येति 'काल परिमाणिना' इत्यनेन उत्तरपदेन परिमाणिनेति महत्तत्पुरुषः, ५ गिनेऽगिलस्य। ६ माग प्रापकः उपाय, नीतिर्वा; आद्ये 'दुन्योरनुपसर्गे' इति घः, द्वितीय भावे घञ्। ७ ज्यानि, यथा (औणादिकोऽय शब्द, निनि तु यवादिशब्दस्य सम्प्रसारणाभावे)। ८ 'अजाद्यदन्तम्'। ९ अमिराः अथवा नाराश १० एवादिराजायम्। ११ 'मस्करमस्करिणौ वेणुपरिव्राजकयो'। १२ उ. रघ। १३ मूः य घक उभयोः 'ज्वरत्वर'-इत्यादिना सिद्धि। १४ इन्द्रमह प्रयोजनमस्यमि 'प्रयो जनमिति ठञ्। १५ पु धरमतीति क्षुधा पर्वता, 'मूलविभुजादिभ्यः क', सेवानिरिणा इन्द्रेणेति भावः।

चिद्विद्याधरेण सह रममाणा मन्दनवनेऽवाप्यतेऽयविपेलमन्युना शतमन्युना मदनान्धे पापे, प्राप्नुया मानुष्य जन्म, प्राप्य चायोनिजां निजां कन्या विहित दिव्यकर्त्तव्याऽऽयाहि दिवमिमामिति शप्ता । अत्रान्तरे ऋतुमती कलिंगदत्तभार्या तारादत्ता स्वप्ने निजोदर प्रविशन्तीं नभोभ्रष्टा ज्वालां ददर्शति सविस्मयोपसि स्वप्न त स्वमत्रे विनिवेदयन्ती प्रीतेन तेन निजगदे, जगदेकचेत्रेऽस्मिन् देवि, देवादिशापकलापपापिता दिव्या अपि मर्त्यजीवा उत्पद्यन्ते । तज्जाने, गर्भेऽर्भकोऽय कोऽपि देवजातीय । अथ कालेन देवी दध्रे दौहृदे दम्भोलिकरशापादिव परिच्युतामप्सरस सुरभिदत्ताम् । प्रासोष्ट च यथासमय स्वरूपोपहसितरति रूपाम्, अनन्यसदृशीमवन्यां कन्याम् । कलिंगदत्तोऽपि च जातां, जातां तां तादृशीमवलोक्य, दिव्यां तां सम्भावयन्नप्युत्कटपुत्रकाम्यया,[2] शोकक्रन्दानन्दनन्दनयोः सुता[3]सुतयोमहद्न्तरमनुभवन् तव कन्याजन्मन्युत्पन्नमन्यु केनापि वृद्धेन द्विजन्मनो चे—'राजन् शृणु ऽहम्, ऐहिकामुष्मिकशिवायोत्पन्ना कन्या राज्यादिसम्पत्ति लब्धपुत्रोत्पत्ति सर्वथाऽतिशेते । कुन्तिभोजाद्याः कुन्त्यादिकन्यागुणैरेव ख्यातिं भुवि गता । सुतादानस्यान्यद्दान नार्हति षोडशीमपि कलाम् । किञ्च, भवादृशाणा गृहे दिव्यानामेव, न तु सामान्यपुण्यानां जन्मसम्भवीति शापच्युतैवा नून काचित् कन्या दिव्या तव गृहे समुपलब्धजननिर्जननीसन्तामासन्नाव सन्तापसहारिणी, चमत्कारिणी निजकुलस्येत्येतज्जन्मना न मनागपि सन्तप्यम् । कलिंगदत्तो निजगृहवृद्धद्विजन्मनो मुखादेतदाकर्ण्य कर्णसुखदमतितुष्टस्तदानी मपगतचिन्तासन्ततिरपि दिव्यसुतासन्ततिर्नयनानन्ददायिनीं तां कलिंगसेनेति नाम्नाऽलचकार । सा च राजपुत्री विहितमन प्रसादप्रासादे, सेनाविरामनि सरत्सामन्तसकुले, उपान्तकृतमणिमन्दुरामन्दिरनिबद्धस्निग्धपोषणोत्कर्षहर्षहेषित राजवल्लभतुरगमे, प्राङ्गणोत्सगरगक्रीडाकुरगविहगमे, अभगागारविरचितकक्षा न्तरे, सूक्ष्ममुक्ताफलरचिततरगरम्यरगरेखाराजिराजिताजिरे, उत्तुङ्गशृङ्गसगत मगलध्वजे, पितृवेश्मनि वर्धमानां हेमें तशिशिरवसन्तेषु, अविरलगलन्मधु मञ्जरीपुञ्जपिञ्जरितसरसहकारवननिकुञ्जगुञ्जितपिकुलकलरवरमणीये, क्रीडो

---

१ 'ऋदोरप्' । २ 'अप्रत्ययात्' इति निष्पन्नस्य पुत्रकाम्याशब्दस्य उत्कटापुत्रकाम्या यस्येति बहुव्रीहिः । ३ 'चार्थे द्वन्द्व' । ४ ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण' ।

यानेऽनेकविधाभिः क्रीडाभिः विहरन्तीं हरन्तीं पित्रोर्मनांसि, केलिसमासक्ता, कदाचिद् व्योमचारिणी मयासुरसुता सोमप्रभाभिधाऽपि लक्ष्यीकृतवतीति किमियमैन्द्री कला, कामविरहिता रतिर्वेति सन्दिहाना साऽकारण सस्निग्धेन मनसा निर्जरमानवोत्कृष्टया तया सह जन्मान्तरप्रीतिमनुचिन्तयन्ती बालापारतस्या त्रासशङ्कयाऽलक्ष्यमुत्तीर्य मनुष्यकन्यकामतल्लिकाभावेन मुनिमानसमोहिनीम्, अनवद्यपाणिपादाद्यवयवां तामुपससर्प । कलिङ्गसेनाऽपि भूरिदिव्यभव्याभरणा चरणरमणीयरूपां सोमप्रभामवलोक्यैव सञ्जातातिप्रीतिः, प्रदर्शितादरातुरा, तां समुपवेश्याऽयनामनी मनीषिणी च तस्या अनुयुञ्जाना, विदधाना च नानाविधानन्यान् सविस्रम्भालापान्, विलम्बमपास्य पास्यत एव ते कर्णौ श्रुतिमधुरमस्मदीयोदन्तजातम्' इत्यभिहिता, हितातिप्रेयस्या वयस्यया तदानीं तदीयमखिलं परिचयमनवाप्यापि तया सत्रा तत्रालापैरेव मधुरैः परां कोटिं मुदोऽवाप । अथ प्रतीचीं ककुभमभिमुखीभूते भगवति भास्वति, सोमप्रभा कलिङ्गसेनाम्, 'सखि चिरमतिष्ठम्' अवसायप्रायो दिवसः, इत पश्योर्जन्यां मदीयं गृहम्' इत्युक्त्वा व्योमपथेन निजवसतिमुत्पपात । कलिङ्गसेना च न वेद्मि यद् सखी मदीयाऽसकौ का ! दिव्यौकाः काचिदप्सरा विद्याधरी वा । यतो हि विशदस्नेहादृता दिव्या अपि मानुषीभिः सङ्गतिं यान्ति पूर्वेत्यतर्कितोपनतामिमां प्राप्य धन्याऽहम् । प्रातरागतां तामवश्य तदन्वयनामनी प्रक्ष्याम्यहमित्यादि चिन्तयन्ती यामिनीमनैषीत् ।

प्रातश्च कलिङ्गसेनाविनोदोपपादनचिकीर्षया[6] यथोपात्तदारुमयानेकमायायन्त्रपुत्तलिकापूर्णकरण्डिका सोमप्रभा, तथैव गगनगत्या तदन्तिकमाययौ । कलिङ्गसेनाऽपि च तामालोक्य, विगलदमन्दानन्दाश्रुः समुत्थाय कण्ठे गृहीत्वा निजपार्श्वमानां च तां विधाय 'सखि, शार्वरीनामनपूर्णेन्दुदर्शनं विना तमोमयी त्रियामाऽयापि मे, दातयामेव मयाऽतिवाहितावश्यमावयोः कश्चिज्जन्मान्तरसम्बन्धेन भवितव्यम् । वेत्सि चेदनयोर्विवक्तसम्बन्धं मां कुरु ।' एवंवादिनीमिमां विनय प्रणतिभिः

---

१ अभ्यर्हितम्' इति निर्देशाच्छब्दस्य पूर्वनिपातः । २ 'इन्द्रसभागि तुल्यप्रेमनानाम्' । ३ अवपूर्वकात्स्यतेर्घञ् । ४ 'संख्यापूर्वो द्विगु,' 'तद्धितार्थोत्तरपदो द्विगु द्विगामिष्ट', 'द्विगो' । ५ 'तत्पूरुष्यप्रयामान्धे' । ६ करोतेः सन्नन्तादप्रत्ययं टाप् ।

विज्ञाना सोमप्रभा प्रणयप्रणतशिरसा रसास्वादनलोलुपया, प्रेमविस्रम्भपेशलया कलिंगसेनया पुनस्तदन्वयनाम्नी, करण्डिकोपादानहेतुम्, तत्रस्थ वस्तुजात च पृष्टाऽतिहृष्टा, 'अद्येव सुन्दरि, समुपविश्यतामिहावधीयताम्, श्रूयताञ्च, विस्रब्धम्' इत्युक्त्वा क्रमादेव वक्तुमारभत—

अस्ति त्रिलोकी[1]विख्यातो मयो नामासुरः। स चोत्कृष्टासुरस्वभावः शौरि-शरणमाश्रित्याभयत्व लेभे इति दैत्या देवपक्षीय त मत्वा तस्मै चुक्रुधुस्ततस्तद्भयं[2] भीलुकोऽसौ[3] विन्ध्याद्रौ बह्वाश्चर्यमयमसुरागम्य मायाविवरमन्दिरमेकमरचयदिति तदीयावावां द्वे दुहितरौ। ज्येष्ठा स्वयंप्रभा नाम कुमारी ब्रह्मचारिणी तद्गृह स्थिता, कनिष्ठा चाहं सोमप्रभा नाम कुबेरसूनवे नलकूबराय प्रदत्ता। पित्रा चाह मनेकधा मायायन्त्राणि निर्मातुं शिक्षितेति स्वप्रीत्या तत्पूर्णेयं करण्डिका। एवमुक्त्वा करण्डिकामुद्घाट्य सा नैकानेककौतुका मायायन्त्रपुत्तलिका कलिङ्ग-सेनामदर्शयत्। तासु च काचित् कीलिकाहतमात्रेण भूमिं विहाय, सा विहायसा गत्वा, तदाज्ञानुसारेण सुमनःस्रजमादाय द्रुतमाद्रुता। अन्या च तथैव काचित् पानीयमानीयेदानीमेतदादानीयमिति भावं प्राकटीत्। काचिन्ननर्त, चकर्त चापराऽपरस्याः शिरोऽवगुण्ठनेनेत्यादिभिर्महाश्चर्यैः काञ्चित्कालकलां तां विनोद्य, सुरक्षित स्थापितयन्त्रकरण्डिका सोमप्रभा, समुत्कां[4] कलिंगसेनामामन्त्र्य, भर्तृपराधीनाऽध्वनीना विहायसा निजभवनमभजत्।

कलिंगसेना चात्राश्चर्यदर्शनसञ्जातातिमुत्, ध्वस्तक्षुत्, अनिर्वर्तितसदाहारा तस्थौ। तां तथाऽवलोक्य रोगशङ्किनी तज्जनन्यानन्दाख्यमगदङ्कारं कलिङ्ग-सेनानाडीं निरूपयितुमाज्ञप्तवती। स च सोत्फुल्लनेत्रहसद्वक्त्रनिदानेनोक्तवान् यद्धीरुजोऽप्येतस्याः कस्याप्यपूर्वस्य हर्षस्य हेतोः सुखाशस्यै रोगस्य रुजा वर्तते। तदाकर्ण्य वास्तविककारणमनुयुक्ता कलिंगसेनाऽप्यामूलमखिलमात्महर्ष हेतुं यथावृत्तं निजजननीं जगाद। श्लाघ्यसखीसंगसहृष्टाञ्च तां तन्माताऽभिनन्द्य, यथोचितमभ्यवहारयामास।

---

१ त्रयाणां लोकानां समाहार इति तद्धितार्थे समासे, 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः', 'द्विगोः' इति ङीप्। २ 'परजिरयत्र भयादीनामुपसंख्यानम्' इति साधु। ३ 'भियः क्रुक्लुकनौ' इति लुकन्। ४ 'उत्क उन्मनाः'। ५ 'रुजार्थानां भाववचनानामज्वरे'।

अन्येद्युः पुनरायाता सोमप्रभा क्रमेणावगताखिलवृत्तान्ता, रहसि कलिङ्गसेनामुवाच—सखि, मया त्वत्सदृशं निजपतिमावेद्य विदितयथार्थसारस्मात्तत्र पार्श्वेऽप्यहमागन्तुमनुज्ञोपलब्धेति त्वमपि पितृभ्यां सर्वं निवेद्य तदनुज्ञाता भव येन मया सह विहारे तवानुकामीनत्वं न विहन्यात्। एवमुक्ता कलिङ्गसेना सोमप्रभया सह स्वपित्रोः पार्श्वं समासाद्य तावाख्याततद्वचनामधेयावकरोत्। तावपि च दुहितृस्नेहार्त्तौ मयासुरसुन्दरीं सत्कृत्य कलिङ्गसेनामाद्य तद्धस्ते समर्प्य तयोः स्वैरविहारमनुमोदयामासतुः। एवमनुज्ञाते ते, कलिङ्गसेनापितृभ्यां सह राजोद्यानविहाराय निरीयतुरानिन्यतुश्च तत्र तन्मायायन्त्रकरण्डिकामिति सोमप्रभा तत्रस्थान् साधुजनानर्चयितुं यमुपयुक्तसामग्रीमानेतुं प्रहिणोतिस्म स रभसा नभसा दूरमध्वानमतिक्रम्य मुक्तासमूहहेमाम्बुरुहादिकामावश्यकसामग्रीमादाय निववृते। एतदालोक्यातिविस्मयस्तिमितनेत्रो, महिषीद्वितीयो राजा कलिङ्गदत्तस्तद्यन्त्रचेष्टितमन्वयुङ्क्त। सोमप्रभाऽपि च प्रकृते यन्त्रव्यवसायस्य पञ्चभूतात्मकगात्रयन्त्रस्येव स्वयन्त्रवैशिष्ट्यं पार्थयन्तीत्थमभिदधौ—'महाराज पार्थिवमेतद्यन्त्रम्, द्वारादि पिधत्ते, तत्पिहितं द्वारं न केनाप्यपरेणोद्घाटयितुं शक्यते। एतद्धि आप्यं यन्त्रम्, यन्त्रोत्थं आकारः सजीव इवावलोक्यते। तैजसं हि यन्त्रं ज्वालाः परिमुञ्चति, एवं वायवीयं यन्त्रं गमनागमनादिकं घटते। नाभसञ्च स्पष्टमाचष्टे। एतानि यन्त्राणि मया निजपितुरवाप्तानि। किन्त्वमृतस्य रक्षकं यन्त्रमेव तात एव जानाति नापरः। एवमभिदधाया तस्या, विभूतिं च मध्यमनभोभागे भगवता भासुरभासा भास्वता, सर्वत आपूर्यमाणानां [illegible] ध्वनिमाकर्ण्य समुत्थिताहारविधानादिनिमित्तानन्तरं राज्ञाऽऽप्ताज्ञा सोमप्रभा, विसृष्टा च सानुगा सपाथेया, कलिङ्गसेनां यन्त्रनिर्मितविमाने संस्थाप्य, गगनेन मार्गेण मातापितृगृहे स्थिताया ज्येष्ठाया स्वसुः स्वयम्प्रभामुपगन्तुं प्रतस्थे। ददर्श च क्षणेनैव विन्ध्याद्रिवर्ति सत् पितृमन्दिरमवाप्योपायनपुरःसराम्, समुपात्ताक्षमालां, वरवर्णिनीं, वर्णिनीमुख्यमग्रीवपीनतन्त्रिकाम्, मयतोऽद्य क्रीयमाणायद्वारासुप्रभाम्, स्वयम्प्रभाम्। सा अपि पाणिधर्मा प्रागप्यनतमस्तका

---

१ 'अवारपारात्यन्तानुकामं गामी'। २ 'पिता मात्रा'। ३ बाहुलकात् तिष्ठते 'स्थः क च' इति कप्रत्यये आकारलोपः। ४ 'आतो धातोः'। ५ 'आनङ् ऋतो द्वन्द्वे'।

तां कलिङ्गसेनां पवित्रमपीलुन्यभ्यवहृत्यै ददाना, 'सखि, भुक्तैरेतैः फलैः रसासार पूर्णैः विस्रसा रूपविनाशिनी ते भविष्यतीति' कलिङ्गसेनामुवाच। साऽपि च तानि भुक्त्वा सद्यः सुधासारसिक्ताङ्गीवेतस्ततस्तत्र कौतुकाद् भ्रमन्ती विकचकाञ्चन कह्लारवापीके, सुधास्वादिष्टफललसत्सालसच्छायापरिकिरमाणविष्किरकुले, अनहिनि कुले उद्याने विहरन्ती जले स्थलधिय स्थले च जलधिय कारयन्मयमायाविनि मितमद्भुतपुरमवलोकय विस्मिता कलिङ्गसेना यन्त्रे समारोप्य स्वयंप्रभामा पृच्छय सोमप्रभा तक्षशिलास्थ स्वमन्दिरमाजगाम।

अथ तयोर्गच्छत्स्वहस्सु सोमप्रभैकदा कलिङ्गसेनामवोचत्—'स्वपरिणयात्र ध्येवावयो सख्यम्। तत पश्चात् तव गृहे मदीयागमन न सम्भवति। तदानीं हि श्वश्रूः स्नुषाम्, घूकी अविमिव पीडयति। अस्मिन् प्रसङ्गे सत्स्वपि बहुपूदाह रणेषु केवलमेकमवयुत्यानुवादरूपेण तव पुर स्थापयामि—

पाटलिपुत्राख्ये पुरे धनपालितनामा कश्चिद्धनी वणिगासीत्। अप्रतिमरूपवती तस्य कीर्तिसेनानाम्नी जाताऽजनि। तां स मगधेपु स्वसमानधनाय देवसेना भिधाय वणिजेऽददात्। आसीच्चातिसद्वृत्तस्य वाल्यविपन्नजनकस्य तस्याति दुर्जनजननी गृहस्वामिनी। सा स्वस्नुषां कीर्तिसेनां पतिमग्मतां पश्यन्ती निजपुत्रपरोक्षे नितरामभर्त्सयत्। कुटिल श्वश्रूपरायत्ता कीर्तिसेना तन्निज पतिमभिधातुमपारयन्त्यप्येकदा वाणिज्यार्थं वलभीं पुरीं गन्तु प्रवृत्ते पत्यावति प्रह्वया जिह्वया सभेव वक्तु साऽसाहसयत् 'आर्यपुत्र इयच्चिर न मया किञ्चित् श्रयमुक्तम्। एषा तवाम्बा त्वय्यत्र स्थितेऽपि तव परोक्षे मां भर्त्सयति। प्रोषिते तु त्वयि किं मे कुर्यादियद् न वेद्मि। एतदाकर्ण्य कणकटु, देवसेनस्तत्प्रेम विह्वलीकृतचेता मातरमुपगम्य सभयमाह—'मात, कीर्तिसेनाऽधुनाऽधीना ते वतते। 'कुलीना तनयाऽसावि'ति नावमाननीया यथा सम्भव लालनीया च'। इमे वर्णाः कर्णाविसयारिविन्दव इव तन्मातरमपीडयन्निति सोवाच—किं मया

१ 'अपाच्चतुष्पाच्छकुनिष्वालेखने'। २ 'विष्किर शकुनौ वा'। ३ येपा च विरोध शाश्वतिक'। ४ 'पश्चात्' इति सूत्रेणापरस्य पश्चभाव आतिम प्रत्यय। 'अधः परस्मिन् पूर्वविधौ' इति सूत्रे भाष्ये 'तत पश्चात्स्रसते' इति प्रयोगदर्शनादत्र पश्चाच्छब्दस्य समासाभावः। ५ ब्राह्मणादित्वात् ष्यञ्।

ससमाश्वास प्रदत्तकामण्डलवजला, तत्तापसप्रदर्शितपथेन प्रतस्थे । अथैवमादिव समतन्ती सच्छत्रोपानहाऽनोकहाकम्पितशाखाग्रपर्णपरिच्छन्नवन्याध्वन्यह्नोऽवसाने महतोऽरण्यवृक्षस्य मूलकोटरमेकमाससाद । निषण्णा च तत्र सा, प्रदोषे सुरापीती मिव लोहिताक्षीमुन्नसां, द्विमूर्धं त्रिमूर्धैश्च स्वचाण्डैः सहागतां, तैश्च सह किमपि म्लिष्टं सल्पन्तीं, रथाचर्दन्तीं, नक्तचरीमेकां ददर्श । तामवलोक्य क्षीणोऽस्याः पद स्पदमपानया भक्षितेति यावदेव तपति तावत्सा निशाचरी तद्वृक्षमारोह । तत्पुत्राश्चापि तामन्वसरन्नमुर्धञ्च सम्राश्य, 'देहि किञ्चिन्नो भक्ष्यमिति' । प्रार्थिता चैव सा निजपुत्रानब्रवीत्, 'अद्य महाश्मशानं गत्वाऽपि किञ्चिद् भक्ष्यं नासादितम् । निजभागं याचितोऽपि टीकिनीसघो न मे स भागमददात् इति सखेद खिन्नया मया विज्ञप्तो भैरवो मदीयो नामान्वया चतुर्युज्यैवमादिशत्—'मयं हरि, रथ नरदूषणा वयजासीति त्वमितो वसुदत्तपुरं व्रज । अपूर्वं हि तन्नगर दिवस्पृथिव्यो । उषासोषसं तत्र विधीयते धरणीर्गीर्वाणैः सन्ध्यावन्दनादिकम् । पादार्घ्याभ्यामनुदिनमनुष्ठाप्युपपाद्यतेऽग्निदेवत्यं पितृदेवत्यम् । निष्पाद्यते यथा वश्यक यथासमयञ्चाश्वमेधं म्, अनुष्ठीयते चाग्निहोत्रम्, निर्दिश्यते चाग्नावैष्णवम्, प्रसूयेते च अग्नीषोमौ चेति । अस्ति च तस्य परमधार्मिकोऽतिराजो सुराम हरिगुरुर्भीति । सुखिनस्तस्य राज्ये निवसन्ति समानतया यथावृत्ति ब्राह्मणक्षत्रि यविट्शूद्राः । स एव कृत्स्नामेतामटवीमभिरक्षति । सगृह्णाति पदक्रमैकशिष्य

---

1 'द्वन्द्वाच्चुदषहान्तात् समाहारे' । 2 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तर पदलोपः' । 3 'अस्वाङ्गपूर्वपदाद्वा' । 4 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' षिद्गौरादिभ्यश्च । 5 'उपसर्गाच्च' । 6 'द्वित्रिभ्यां ष मूर्ध्नः' । 7 अविरपदे निरपदः, सुपथस्य सुखा सुखे इत्यादिना साधु । 8 विभाषा रथवाहाश्च । 9 पत्यादिभ्य इनियान्य । 10 मेघतिमपदु कृत । 11 दिवश्च पृथिव्याम् । 12 उषासोषसः । 13 पादार्घाभ्यां च । 14 देवताद्वन्द्वे च । 15 अध्वर्युक्रतुरनपुंसकम् । 16 अग्नामरुतौ इत्यत्रेऽत्वाभिमात्रम् 'द्वन्द्वे ईर्घाकारः । 17 'विष्णौ न' इति इत्वनिषेधे आनङ् । 18 'ईदग्नेः सोमवरुणयोः', 'अग्नेः स्तुत्स्तोमसोमाः' । 19, 20 'न पूजनात्' । 21 'अनेकप्राप्ता वेकत्र नियमोऽनियमः शेषे' । 22 'वर्णानामानुपूर्व्येण' । 23 'भ्रात्रादिभ्यो ज्येष्ठ' मतः अल्पदन्ततोऽपि प्रकृष्टानाम्, ( लिङ्गशब्दो न्युट्न्तो वा स्यात्वत् )।

विद्वज्जनान्, अनुगृह्लाति शरणागतान्, निगृह्लाति तस्करान्, तथापि दयाभावे स यूकालिक्षमक्षिकमपीतरप्राणिसद्दममशिलष्यीकरोति । एव तस्य राजवर्चसेन प्रवर्धित ब्रह्मवर्चस समधिकतर दीप्रंसद्राष्ट्रस्याखिलस्याज्ञानान्धतमंसमपसारयत् पुरुर्षायुषप्रजीविनीनां तत्रत्यप्रजानां नक्तंदिव नि श्रेयस विधत्ते ।

मृगयार्थमटवीमटतस्तस्य राज्ञ आश्रममेकमाश्रित्य सुप्तस्य श्रवणे समापद्य सत्वा शतपद्येका सन्निविष्टेति कालेन सा तस्यान्त करोटि कोटिश शतपदी प्रसूतवती । राजाऽसौ तद्रुजेदानीं परिशुष्कसर्वासृक्, परिदृश्यमानसर्वनाडि-रस्थिमात्रावशिष्टो वर्तते । वैद्याश्चास्य व्याधिं न विन्दन्ति । अन्येषु चाप्यशा स्यास्वेष स्वल्पैरेव दिवसैर्यश शेषता नेष्यते । तस्य मांस त्वया भोक्तव्यम् । येन षण्मासिकी परितुष्टिस्ते यास्यतीति । एव स्थिते, पुत्रका किमह करोमि । एतदाकर्ण्य तत्पुत्रास्तामब्रुवन् 'अम्ब, किं ज्ञातापनीतरुङ्नृपतिर्जीविष्यति ? एव चेत्कस्तद्रोगोपचार ? एवमुक्ता सा तानित्थ तद्रोगप्रतीकारप्रकार व्याजहार यन्मर्दितगोधूमचूर्णविनिर्मितालवालक तच्छिर सर्पिषाऽऽपूर्य कर्णकुहरनिवेशित शीतोदकुम्भमुखस्थशरावच्छिद्रप्रविष्टनलिको राजा चिरमातपे समुपवेशित स्यादित्यातपक्लान्ता सर्वा अपि शतपद्य शीताभिलाषिण्योऽमुष्य शिरसोऽन्त रालान्निर्गत्य कर्णरंध्रद्वारा वशनलिका प्रविश्य तस्मिन्नेव घटे निपतिष्यन्तीति नृपतिस्तन्महारोगात्सद्योऽगदिष्यति । एवमुक्त्वा विरतायां तस्यां, कोटरस्थिता कीर्तिसेना तत्सर्वमाकर्ण्य हृष्टो निस्तीर्णा चेदह तत्र गत्वा राजानमहमेतया युक्त्या समुल्लाघ्य श्लाघ्यपदञ्च तस्यावाप्य तत्रैव स्थिता भर्तुरागमन प्रतीक्षिष्ये' एव विचिन्तयन्ती कृच्छ्रादपनीततमिस्रोषस्यन्स्यां वेलायामपगतेषु सर्वरक्षस्सु तत्कोटरान्निरगात् । अटवीमध्ये पुरुषवेषेण गच्छन्ती चापराह्णे गोपालसाधुमेक दृष्ट्वा 'कोऽय प्रदेश' इति तमपृच्छत् । गोपालक उदतीतरद् 'पुरोवर्त्येतद्वसु दत्तस्य भूपतेर्वसुदत्तनाम नगरम् । अस्याधीश्वरो महात्माऽऽमयेनाश्वीनमेरण ।

---

१ 'क्षुद्रजन्तव' । २ 'पल्यराजभ्यामेति वक्तव्यम्' । ३ 'ब्रह्महस्तिभ्यां वर्चस' । ४ नमिकम्प्यसेति दीप् धातो र । ५ श्रयसम-धेभ्यस्तमस । ६–८ 'अचतुरविचतुर'-इत्यादिना साधूनि । ९ नाद्यन्त-श्यो स्वाङ्गे । १० षड् मासान् भाविनी परितुष्टि 'अवयसि ठंश्चेति ठन् । ११ एकहलादौ पूरयितव्येऽन्यतर स्याम् । १२ उपस् प्रभातीभावे । १३ 'अद्यश्वीनावष्टब्धे'इत्यत्र विजायते इत्य ननुवर्तनात् आसन्नेऽर्थे ख ।

त्वया निर्देशनीया । एवं कार्येऽस्मिन् न कालक्षेपेण युक्त्या सर्वमभीष्टं निष्पद्येत । एवं प्रबोधयन् मन्त्री तदाहतस्तदावासतः सायं निजगृहं जगाम ।

एवं पृथक्[1] पृथक् निजनिजसद्मसु चिन्ताम्-तानस्-दानिशैस्तैस्तैर्व्यतियापितायां मायानियामायां, प्रातरेव समीपमुपगम्य 'कलिङ्गसेनाया देवस्य च विवाहमङ्गलाय कदा शुभावहो लग्न ? किञ्चाद्यैव मौहूर्तिका समाकार्य पृच्छ्यन्ते'? इति मन्त्रिपूर्वेन यौगन्धरायणेनोक्तो वत्सेशः पुरोवर्तिनं प्रतीहारं तत्कालमेवादिश्य मौहूर्तिकानानाययामास । किन्तु तेन पृष्टा महामन्त्रिपूर्वकृतसंविदस्ते मौहूर्तिका षण्मासान्-तरमनुकूलं लग्नमाहुः । तदाकर्ण्य प्रदर्शितालीककोपो यौगन्धरायणः 'राजन्, अज्ञा इमे, योऽस्मास्वेषु ज्योतिर्विद्यासुज्ञः सोऽद्य नागत इति स पृष्टा यथायोग्यं विधेलिमम् । एवमाकर्णितमन्त्रिवचा वत्सेशो गणकं स दोलायमानमानसः शीघ्रमाकार्य पृष्टवान् । किन्तु सोऽपि तथैव कृतसंवित् षण्मासान्ते व्यवस्थितं शुभावहं विवाहलग्नमब्रवीत् । तदाकर्ण्योद्विग्न इव यौगन्धरायणो राजानं तात्कालीनं कर्तव्यं पृच्छन्नस्मिन् विषये कलिङ्गसेना प्रष्टव्येति सुलग्नैषिणो त्केन च तेनाभिहितस्तथाऽस्थिरयुक्त्वा गणकद्वयेन सह कलिङ्गसेनाऽन्तिकमाससाद । उवाच च तत्र यत्ते विवाहलग्न निश्चेतुमहमिहायात अतो निजजन्मर्क्षमावदस्व । तच्छ्रुत्वा सपरिजनेन तज्जन्मर्क्षमुदितं किन्तु मन्त्रिकृतसंविदौ गणकौ तत्रापि मासषट्कानन्तरमेव परिणयायाभ्यधाताम् इत्यत्युद्विग्नचेतसि कलिङ्गसेनायाम् तन्महत्तरकोऽभ्यवात् विवाहलग्नानुपूर्व्यमत्यावश्यकम् । कुलग्ने हि कृत उपयम उपयमं नयति वधूवरयोरन्यतरम् इति शिवतति मतिं दधानैर्भयनिर्भर्तिमङ्गलोऽनुकूल एव लग्न प्रेक्षणीयो येन दम्पती चिरमर्जन्न च ससुखं निवसेताम् । श्रुते तन्महत्तरवचस्सु, तत्रत्येषु, सर्वेषु साधु साध्विति च ब्रुवाणेषु, आम्, कुलग्ने कृते विवाहे सम्बन्धी कलिङ्गदत्तोऽपि खिद्येत' इत्युक्तवति च यौगन्धरायणे' 'यथा भवन्तो जानन्ति, यच्च भवतामभिमतम्' इत्युक्त्वा विरतवचनायां कलिङ्गसेनायाम्, तस्यास्तदेव वचन गृहीत्वाऽऽमन्त्र्य च तां सगणको यौगन्धरायणो राजमासाद्यमाससाद । सर्वं च तद्वत्सेशमावेद्य प्रबोध्य च युक्त्या तं निजनिशान्तमायात् । तया तत्रैकान्ते स्थिरया स्वाभीष्टसिद्धये सिद्धकालातिपातो मन्त्री

1 'सर्वस्य द्वे', 'नित्यवीप्सयो' । २ सुपुत्पत्ते प्राक् सुपो नाम्ना ( प्रातिपदिकेन ) समास । ३ भवति मङ्गलं यस्मिन् लग्ने इति तिङ सुपा समास । ४ नमिकम्पीतिसूत्रे निपातनाद्धातुना सुपस्समास ।

आत्मतनूनामतनूमतनूमपातमेव दारणाश्रयणाय श्रेयस्कर, यतोऽस्य स्वर्गसंश्रय गच्छन्ति । अहो राजन्, प्रकृष्टस्य प्रेम्णो भङ्गो, विदापण मनस्विन्या वासवदत्ताया, सुदुःसह इति भवता परिणीतायामस्यां कलिङ्गसेनायां निःसंशय साऽसून् जह्यात् । देवी पद्मावत्यपि तथैव सम्भाव्यत । तयोश्च तथाभूतो गति गतयोरग्रमात्रैकजीवितस्य नरवाहनदत्तस्य को भवेदाश्रय इति कालेऽहमेनाम वत्सस्य कृते बहुहानिं प्रियाकान्तो भवान् सोढुं नशक्नुयात् । देव्योरधिगाम्भीर्ये हि तयोर्जीवितत्यागगाधाभिन्ननिस्पृहहृदयतामभिव्यनक्त्येकपद एव सम्भावितस्य सर्वविनाशस्य स्वार्थस्य रक्षा भवादृशैरसदृशैरपरत्र करणीया ।

मन्त्रिवरादेवमाकर्ण्य सम्यग्विवेकपदवीमारूढो वत्सेशः कलिङ्गसेना परिणय सञ्जातौदासीन्यो भविष्ममन्त्रिमुख्यसम्मतिमतिशयम स्तुवन् 'प्रिये, त्वय्येवैक जीवितोऽहमन्यस्या न नामापि ग्रहीतुमुत्सहे किमुत पाणिग्रहणरूपापर्यवष्टम्भनम् । किन्तु कलिङ्गसेना हठान्मदीयगृहमुपयातेत्युर्वशीवाज्यायैः कृतमारमरीचि इति विनय प्रत्याचयाणाय पुत्रानुजायानुनाय पेन्दताना न मया दद्यादिति चिन्तय सा मया इदानीमेव न सहसा निषिद्धा' एवमाश्वासयन् तां रात्रिं तत्रैवानयत् ।

अथान्तरे कलिङ्गसेनावृत्तान्तज्ञप्त्यै नियुक्तो महाराजमो योगेश्वरस्तस्यामेव निशि मन्त्रिवरमागत्याभ्यधात्—'कलिङ्गसेनासदने मया सौदश्च बहिरन्तर्वा दिव्यानां मानुषाणां वा नागममपश्यम् । प्रच्छन्नोऽहमथाकस्मादम्बरे सारम मध्यक्त शब्द श्रुत्वा विज्ञातु तमशक्नुवन् कलिङ्गसेनाया लावण्यलुब्धस्याम्बरे भ्रमतो दिव्यप्रमादस्य कस्यचिदप्येष शब्द इति निश्चित्य तत्प्रगत्यमिह वक्तुमागाम् यदतः परमहं यथाबुद्धि यथाशक्ति च कलिङ्गसेनागतिं निभालयिष्ये । एवं तदुक्त्वा योगेश्वरो ब्रह्मराक्षसो जगाम ।

---

१ यथास निमित्तमित्यर्थः 'नोऽयमोऽस्मावासेभोपदेरम्'. एवम् २ स्वागस्य निमित्त स्वयमिच्यपि बोध्यम् । ३ कान्तानाम्बरस्य प्रियाहिताय तस्मिन् प्रियाम्बरस्य पुष्पकाय । ४ 'मणो विभापति वैकल्पिकसमासान्तोऽयम् । ५ 'भञ्जत उदराम्यानम्' ( भार्याय इत्यनिचय ) । ६ 'पुनानुश्यो मनुषा इति च' । ७ अयम् पञ्चतानान्तेऽपहस्तोऽन्येन विरोधनातेऽभिप्रायितोऽत्वनेनेति माहाभारती कथा प्रायमेया । ८ 'बोधमहोऽस्मास्तमगन्धृषीय' इत्यत्र ।

तदनन्तर मदनवेगाख्यो विद्याधराधिप पूर्वं कलिङ्गसेनामालोक्य पञ्चशर-शरार्दितस्तदवाप्तये कृततपश्चर्यातशङ्करवरोऽप्यन्यासक्तामन्यदेशस्थां च ताम लभमानो रजनीषु दिवि भ्रमन् स्वावासस्योपरिपर्यटन्त वत्सेश दृष्ट्वा दृष्ट्वा तामन्तर्गा स्वहर्म्यगां कलिङ्गसेनामालोक्य तत्र अन्तर लब्धुमेकस्यां रात्रौ एतवत्सेशस्वरूपो मन्त्रिणा कालक्षेपमसहमान स इव द्वारपालाभिवन्दित कलिङ्गसेनाऽऽवास प्रविश्य विश्वास्य च तां तेनैव रूपेण गान्धर्वेण विधिना स्वभार्यां चकार। तत्कालञ्च योगादलक्षित प्रविष्टो योगेश्वर सवमेतदाकलय्यातिपरितुष्टो हृष्टो यौगन्धरायणमागत्य यथादृष्ट निवेदितवान्। तेनातिप्रीतो यौगन्धरायण प्रातर्वत्सेशमागत्यानुपक्कतोऽब्रवीत्—'देव, परमस्वच्छन्दैषा कलिङ्गसेना नार्हति भवत्पाणिस्पर्शम्। स्वेच्छयैषा प्रसेनजित द्रष्टुमायाता, जरापराहतलावण्य स वीक्ष्य ततो विरक्ता रूपलुब्धेहोपगताऽऽवासे स्वेच्छयाऽन्यपुरुषासङ्ग करोति। एतदाकर्ण्य कुलीनेय कन्या कथमेवमाचरेत्, मदीयान्त पुर प्रवेष्टु को वा शक्तो भवेदित्थ सन्दिहानो राजा 'अद्यैव देव, त्वया प्रत्यक्ष सर्वं कारयिष्यामि। मानुषाणां न तथागतिर्भवेत् किन्तु सामर्थ्याहृतगतयो गन्धर्वादयोऽपि वाञ्छन्तीत्युक्तो मन्त्रिणा, रात्रौ सुप्तेषु सर्वेषु जनेषु कलिङ्गसेनाभवनमगमत्।

तत्रादृष्टप्रवेशो त्रिदशसुन्दरीसौन्दर्यमुद्रया निद्रयाऽप्यतिशय्य शय्यागृहे कृतमन्वेशायास्तस्या समीपे सुप्त स्वस्वरूपस्थ साहसिक मदनवेग सिद्धांसति वत्सेशे, प्रबुद्धः स स्राक् खमुदपतत्। कलिङ्गसेनाऽपि च प्रबुद्धा शून्य शयनमा-लोक्य कथ पूर्वं प्रबुध्य वत्सेशो निद्रितां मामेव हित्वा जिहीते इत्युक्तवत्या स्तस्यास्तद्वचनमाकर्ण्य यौगन्धरायणो वत्सेशमाह 'त्वद्रूपधारिणाऽनेन दूषित चरित्रीकृतेति समुपलब्धयोगबलोऽह त्वयासाक्षादकारयम्[3]। किन्तु दिव्य-प्रभावोऽय हन्तुमशक्य। एवमुक्त्वा वत्सेशेन सह कलिङ्गसेनामागत्य यौगन्ध रायणेन राजकन्ये, त्वम् वत्सेशरूपधारिणा केनापि मायाविना सम्मोह्य परिणी ताऽसि नामुना मत्स्वामिनेत्युक्ताऽति सम्भ्रान्ता बाणविद्धस्वान्ता इव दुरन्तां गतिं वैधीमाकलयमानाऽश्रुपरिप्लुतनेत्रा वत्सेशमुवाच—गान्धर्वेण विधिनाऽत्र त्वया परिणीताऽह कथंकारमिह शकुन्तला दुष्यन्तेनेव विस्मये। हृदिस्पृश वाचमेता

१ शब्दधातोरनुकरणेऽनह् (प्रकृतिवदनुकरणम्)। २ 'जहातेश्च क्त्वि'। ३ 'हृक्रोरन्यतरस्याम्'। ४ 'अदसोऽसेर्दादु'० 'न मुने' इत्यादि। ५ 'अन्यथैव कथमित्थमिति' कृञो णमुल्।

वत्सेश समुत्पन्नविवेकातिरेको भर्त्रा सह निमय तत्रनियस्तु तामनुसत्य स्वप्रासा दमाजगाम। तत्सर्वमाकाशेऽवस्थितो मदनवेग समालक्ष्य परां मुदमासाद्य सद्यस्ततोऽवतीर्णे साधुवादेन स्वप्रियां सत्कृत्य च तस्यां निशायां तत्रैव न्युष्यो षसि दिवमुत्पपात।

एवमागच्छता गच्छता च गविष्ठिरेण[1] विद्याधरेण रममाणा कलिङ्गसेना मर्त्य- भावेऽपि दिविजान्[2] भोगान् भुञ्जाना, सुखान्विता, तमाशासमध्यवसत्। वासरा जोऽपि च मुक्तचिन्तो मन्त्रिवचः स्मरन् राज्यं पुत्रं च लब्धं मन्वानो नितरामानन्द।

अथ गच्छत्सु दिवसेष्वापन्नसत्त्वां कलिङ्गसेनामुपेत्यैकदा मदनवेग उवाच कलिङ्गसेने, प्राग्जन्माप्सरास्त्वं स्वाविनयेन शक्रशापतः साम्प्रतं मानुषयोनिम याता। दिव्यानामस्माकञ्चैष समयो यन्मानुषगर्भजातमिदमपत्यमिहैव त्यक्त्वा विदूरतो याम इत्यपत्यमेतत्त्वमभिरक्षेरहञ्च निजस्थानं गतोऽपि तव स्मरणक्षणे एव सन्निधास्ये, इत्यमश्रुविलोचनां तामाश्वास्यापरिमितं रत्नसञ्चयं च तस्यै दत्त्वा समयाकृष्टो विद्याधराधिपो निजवसतिमुदपतत्। कलिङ्गसेना च वत्सेश भुजच्छायायामवलम्बितपत्याशासूत्राऽमुत्राजस्रमयोगाय व्रतमिवाचरन्ती तत्रैव दिनानि व्यत्यगमयत्।

अत्रान्तरे साङ्गपत्यवाप्त्यै तप कृतवतीममर्त्यलोके निजाराधनतो जनिष्य माणामयोनिजामनङ्गभार्यां रतिमम्बिकापतिर्दग्धपूर्वण, वत्सराजगृहे काले जनैः[3] तत्पतिना सयोक्तुमादिदेश। अतो दग्धकामोऽपि निजोक्ति

मदनमञ्चुकोत्पत्ति

पूरयितुकाम सतीवाम पुत्रकार्यसिद्धये प्रजापति मुवाच यत्कलिङ्गसेना दिव्यसम्भवं तनय सोष्यते त मायया ऽपहृत्य तत्स्थले त्वक्षिप्यसतुमिमां रतिं मानुषीं कन्यां निर्माय क्षिपेतीश्व राज्ञां शिरसि निधाय निगते विधातरि यथासमयं कलिङ्गसेनाप्रसूत सुतं स्वमा ययाऽपहृत्यावस्थित सन् कन्यारूपिणीं रतिं तत्र न्यधादिति सर्वं एव जना जाता मेव जातां तामलक्षन्त। कलिङ्गसेनाऽपि जाता तामसदृशीं सुतामवलोक्य सम चाप्तपुत्रजननाधिकसन्तोषा, तोषानुरूपमुत्सवं वितन्वती मदनमञ्चुकेति नाम्ना तामाजुहाव। नृपोऽपि वाप्य वत्सेश्वर सदेवीक समन्त्रिका जातां तादृशीमनु

1 गवि पाचि स्थिर इति तयोक्तेन 'गवियुधिभ्यां स्थिर' 2 'प्रावृट्शरत्का लदिवां जे'। 3 काले जातेन; 'प्रावृट्शरत्कालदिवां जे' इति सप्तम्या अलुक्।

रूपोपहसितान्यवरयोषित तामवलोक्य नूनमिय भुवमवतीर्णा रतिरेवेति तद्विषये स्वविचिकित्सामुत्सारितवती तथा जगन्नयनोत्सव स्वकीय सुत तत्रानायितवती इति बालौ[1]अपि तौ सखीवरवर[2]जंघाकूपुपोषयिपयेवान्योन्यावलोकनेन सञ्जाता भिलाषौ दृष्टिपाशैर्बद्धावपि तत प्रभृति पृथक् स्थातु न शेकतु । एतदवबुध्य कलिङ्गसेना सानन्द नरवाहनदत्ते जामातृ प्रीति बद्ध्वा धृतिमादधौ ।

नरवाहनदत्तयौवराज्याभिषेक

एवमतिक्रामत्सु दिवसेषु वत्सेशो मारमिव निजकुमार कथंचहर[3]रूपमालोक्य सम्मन्त्र्य मन्त्रिभि स्वपुत्रार्थं स्वस्यैव पृथक् प्रासाद कारयित्वा[4] श्लाघ्यगुणाग्रहा ग्रहिलस्य तस्य यौवराज्याभिषेकोपकरणाहरणाय परिजनान् समान् समाहूय समादिदेश । अभ्यषिञ्च त यौवराज्ये सम्भृतेषु सर्वसम्भारेषु देवदुन्दुभि निर्ह्रादानन्दतूर्यनिर्घोषप्रतिशब्द, माङ्गल्यमाल्यदिव्य पुष्पवर्षणपूर्वकम्, अपरिमितमानन्दमभिव्यक्तीकुर्वत्सु च नगरे[5]वासिषु, न्ययूयु जच तद्बाल्यसखान् स्वमन्त्रिपुत्रानाहूय सत्यचित्तत्वे, तथाहि यौगन्धरायणि मरुभूतिक मन्त्रित्वे, रौमण्वतम् हरिशिख सैनापत्ये, वासन्तकिं तपन्तक क्रीडा सखत्वे, पैत्यकिं गोमुख प्रतीहारत्वे, पिङ्गलिकासुतौ वैश्वानरशक्तिसोमौ च पौरोहित्ये इत्यादि । एव भूभृताऽऽज्ञप्तेषु तत्तत्स्थानीयपुत्रसहायकाधिकारिपूद भूरपुष्पवृष्टिपुरस्सरी दिव्या वाक् 'सत्स्वप्यतेष्वस्य सर्वार्थकार्यसाधकेषु गोमुखोऽस्यात्मनो[6] द्वितीय शरीराभिन्नो भविष्यतीति' । दिव्यया वाचैवमुक्तोऽतिहृष्टो वत्सेश सर्वान् वस्त्राभरणैस्सम्मान्यानुजीविभ्यो दारिद्र्यदारि द्रविण विततार । एव तौर्यत्रिकादिपूर्वक विहिताभिषेके नरवाहनदत्ते, 'पूज्यन्ता द्विजन्मानो देवताश्च, विमुच्यन्तां बन्दिन कारागारेभ्य, मुच्यन्तां पक्षिणोऽपि पञ्जरेभ्य,' इत्यादि श्रूयमाणेषु परित परिजनालापेषु लास्योन्मादिनि, मृदुमङ्गलोद्गारमुखरे सञ्चरितपुरपथेषु पौरनारीजने, स दिवसः सम्प्राप्तस्वर्गसुखस्येवास्वादितामृत रसस्येवानुभूतपरमानन्दस्येव राज्ञोऽतिचक्राम ।

---

१ बालश्च बाला चेत्येकशेष, एव स च सा च ताविल्यत्रापि । २ 'विभा षावपथरशरशराथ' इति सप्तम्या वैभाषिको लुक् । ३ 'चयमि च' इत्यच् । ४ 'न क्त्वा सेट्' । ५ 'शयवासवासिष्वकालात्' इति सप्तम्या अलुक् । ६ 'पूरण इति वक्तव्यम्' इति सहकारेण 'आत्मनश्च' इति तृतीयाया अलुक् ।

घर्णयितुमभनगोवमारममौनमुग्रम्—'आस्ते त्रैलोक्यविख्यातहिमवद्गोद्रस्य जरा मृत्यूभयच्छित्तिसिद्धयोषधिनिधानेष्वयतमे बहुयोजनविस्तीर्णे काञ्चनशृङ्गाख्ये सानावुमापतौ दृढभक्तिर्हेमप्रभो नाम विद्याधरेश्वर । तस्यास्ति बहुपत्नीषु प्रियतमा विद्युत्तमाऽलङ्कारप्रभाख्या पत्नी । तया सह प्रातरुत्थाय यथाविधिविहितशिवा शिवसपर्यस्य, मानुपलोकमागत्यानुदिन दत्तदीनसर्वार्थीमरत्नमिश्रस्वर्णलक्षस्य, तदनु राजकृत्यावेक्षणपूर्वक विहितमुनिवद्विषयतप्रताभ्यवहारादिकस्य, तस्याति क्रान्तेषु कालेषु अरवपुत्रताहेतुरुपश्नचिन्तातन्तुसन्दानितान्त करणेऽनपत्यता विषमविषादवेदनाव्यतिकरश्चेतस्यास्पदमकरोत् । किमनेनापत्येनाभिपत्येन एव खिन्नचेतस राजानमवलोक्य तद्दौर्मनस्यकारणमनुयुक्तवत्यलङ्कारप्रभेत्य तेन निगदिता यत् समधिगताखिलविभवस्यापि मदीय स्वान्त मिता तमनपत्यता तापेन तातप्यते । न ज्ञायते समायास्यति न वा कदाचित् श्लाघ्य स काल, धन्य स वासर, सुलक्षणा सा वेला यदा भवनाङ्गणचङ्क्रमणधितितलरेणु रूषित, कनकमेखलापरिवेष्टितकटितल, हृद्य बालमङ्के समारोप्य कृतकृत्यमात्मान मस्ये । एतदाकर्ण्य तत्पत्नी तमेव सान्त्वयन्त्युवाच—'देव विश्वजनीनविभवा भवानुकम्पया यथाकाल पुण्यारममि सर्वैरवाप्यन्त इति स एव दग्धकामोऽपि ते पूरितकाम, कपर्दी अपि च तेऽनपत्यतादारिद्रयमर्दी, भविष्यतो माऽऽनय मनमि निरतिशयमौदासीन्यम् । आधेहि धर्मे धैर्ये च धियमधिकाम् । समा कर्णितदेवीमुखैतदुदारवचा लघूभूतकिञ्चिद्धृन्छोकौ हेमप्रभस्तद्वचसि श्रद्धाय, सुस्नाय, पुरोधाय च पुरोहित काञ्चनचयकोटीर्विप्रेभ्यो वितीर्य 'देह वा पातये यम्, आशुतोष वाऽऽशु तोषयेयम्, इति कृतनिश्चय, 'इहासने शुष्यतु मे शरीर त्वगस्थिमास विलय प्रयातु' एवमहार्यधैर्यो हराग्रे परित्यक्तौपवस्त्रप्राशित्र, पुत्रार्थं सुग्र तपस्तेपे । त्रिरात्रोपोषिताय तस्मै ससोम, सोमे शर्वाणीजानि साक्षादावि

---

१ 'इग्ताच लघुपूर्वात्' । २ अतिशयेन विदुषीति तमवि, 'उगितश्चेति' वैकल्पिकह्रस्वाभावपक्षे 'तसिलादिष्विति पुंवद्भाव । ३ 'हृदयस्य प्रिय' इति यत्, 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदयस्य हृदादेश । ४ आत्मन् विश्वजन०– इति खः । ५ 'वा शोकष्यञ् रोगेषु' । ६ परित्यक्तम् औपवस्त्रम् उपवासभोज्य भक्ष्यम् उपवासे यत्किञ्चित्प्राशित्रम् प्राश्यं वस्तु वा येनेत्यर्थ, 'उपसर्गादिभ्य उपसंख्यानम्' । ७ उमया सहितः ।

सायमेकं दैवकृतोपलम्भमम्भोरुहतटाकं सुधासारपूरितापम्, भूरितापो दूराध्वगमन खेदखिन्नः समवाप्य तत्रस्नातः कृतस्वादुतरारण्यार्तवफलाहारो नक्तं तत्रैव सयतं हयो मन्त्रिद्वितीयो वासार्थं महातरुमेकमारुरोह । तत्र निशीथे विशालतरुशाखा सन्निविष्टो विप्रस्तद्धयद्वेषिसमाकर्ण्य प्रबुद्धोऽधस्तादागतं सिंहमपश्यत् । अवलोक्य च तमस्युद्यतो[1] जिघांसयाऽवतितीर्षुरपि गोमुखेन 'युवराज, अलं नखदंष्ट्रायुधेन तिरश्चा सह युयुत्सया । शरीररक्षार्थमेवावामिह वृक्षमारूढाविस्येव गोमुखवाक्ये नरवाहनदत्ते सिंहस्तद्धयमाशु विनाश्य द्वितीयमप्याजघान । एतद्विरीक्ष्य वत्सेश्वर सुतो हर्यक्षमभिलक्ष्य वृक्षादेव क्षिप्तेन कौक्षेयकेणाभ्यर्चयत्येव[2] गोमुखेन द्वेधा[3] चकार । अवतीर्य च तत उपात्तखड्गस्तमेव वृक्षमारुह्य क्षपितक्षपः प्रातस्तरोरवतीर्णो गोमुखानुकाशी कर्पूरिकाभिलाषी पत्कषी[4] प्रत्ययासीत् कर्पूरसम्भवम् । तत्र मार्गे राजकुमारीप्राप्त्याशाकशया कश्यमानोऽपि गोमुखोक्तमनोरञ्जककथाभिर्विनोद्य मानोऽविज्ञाताध्वापि मध्येमध्ये समायान्तीर्विकटा अटवीः, त्वरितधाराधुनीः, शतशः शैलश्रेणीश्च पारयमाणः, कृच्छ्रादादिवस यौजनिकः[5] सायमतिसरसरसा लादिनानानोकहनिवहप्रतिबिम्बरम्यरोधः सान्द्रसरससरोजराजिराजितसरः, एक मासाद्य तत्र विहितस्नानादिक्रियः, सुरभिमधुरास्वाद्यद्यवन्यफलनिर्वर्तिताहार-विधिः, सविधि सख्या सार्द्धं मृदुकिसलयास्तीर्णशय्यो रजनीं निनीषुरशेत ।

प्रभातायाश्च शर्वर्यामुत्थाय सम्पादिताह्निककृत्यः, सगोमुखः प्रस्थितो मार्गे मन्त्रिणमेवमभाषत 'वयस्य, स्वप्ने काचिद् धवलाम्बरा दिव्यरूपा कुमारी मामेत्यैवमभ्यधात् 'वत्स' मा कृथा वृथा चिन्ताम् । इत परं त्वमाशु समवाप्स्यसि पयोनिधितीरे वनान्तरस्थमाश्चर्यपूर्णं पुरम् । तत्र विश्रान्तोऽक्लेशेनैव कर्पूरसम्भवं पुरं प्राप्य कर्पूरिकां राजकन्यकामवाप्स्यसीति । एवमभिधाय सा तिरोभूतायां तस्यामहं प्रबुद्धः ।

एवमुक्तवन्तं गोमुख उवाच–देव! न किञ्चित्ते वर्तते दुष्करम् । अचिरेणैव त्वं भविष्यसि सिद्धाभीप्सित । इत्येवमाद्युक्तो गोमुखेन गच्छन् क्रमाज्जलधेरुपकण्ठ

१ 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति निष्ठायाः परनिपातः । २ अर्चिय इत्यभ्यर्चम्, अभ्यर्चं करोति अभ्यर्चयति ततः शत्रन्तात्सप्तमी । ३ 'संख्याया विधार्थे धा', 'एधाच्', ततः 'तसिलादयः प्राक्पाशपः' इत्यव्ययत्वेन 'अव्ययस्य च्वावीत्वं नेति वाच्यम्' । ४ 'हिमकापिहतिषु च' । ५ 'योजनं गच्छति' इति ठञ् । ६ 'सद्यःपरुदि'ति सूत्रे, समानेऽहनीति विग्रहः, 'समानस्य सभावो द्यश्चाहनि' ।

सुख निदद्रौ । प्रातश्च कृताहार' क्षण यावत्तिष्ठति तावद् गोमुखो राज्यभरमुवाच, 'सखे, मत्प्रभो कृते यन्त्रविमानमेक कुरु येन तदारुह्य कर्पूरसम्भवपुरमवाप्य समवाप्यतां निजप्रियाऽनेनेति'। तथाकर्ण्य तत्तासाखुपानीय रचितवरमपर्यपति स्मैक वातयन्त्रविमानकम् । मनोवेगगामि–खगामि च यदारुह्य सगोमुखो नरवाहनदत्तो मह्च्चूर्द्धधिसकल्लोलिनीयत्नमस्तदपरतीरवर्तिकर्पूरसम्भव पुरमवाप्य नभसोऽवतीर्य विमानादवरुह्य सकौतुक पुरान्त' परिभ्रमंस्तद्देवामीप्सित कर्पूर सम्भव पुरमिति लोकतो ज्ञात्वाऽतिहृष्टो वर्षीयस्या स्त्रियैकयाऽधिष्ठित रुचिर वेश्मैक तदनुमतो निवासाय विवेश । तत्रानुपङ्क्तिकगत्या जिज्ञासमान , 'आर्ये किमभि धानोऽत्र राजा, किञ्च तदपत्यम्, कथञ्चतद्रूपमिति' वैदेशिकाभ्यामावाभ्यां शासेत्येवमनुबद्धा वृद्धाऽद्धाऽरब्धवती तमेवमुत्तरीतुम्—

महाभाग, निखिलदिव्यवैभवसम्भवे, कपूरसम्भवेऽस्मिन् कर्पूरको नाम राजा । स चानपत्यताधिपीडितः सदारः सदारचितशङ्करार्चननमस्योऽप्यधिकतपस्याभि काङ्क्षयाऽनन्यदाशोऽनन्यदास्थितो वरदस्य, वलीवर्दवाहनस्य, सन्तोषाय निराहार स्तपस्ततुमारभत । पञ्चरात्रोपोषिताय च तस्मै स्वप्ने भगवान् भूतभावन समा दिदेश, 'पुत्र समुत्तिष्ठ, समवाप्स्यसि त्व पुत्राभ्यधिकां कन्याम् । लभास्यति च यस्या पतिर्विद्याधराधिपत्यम्' । एवमादिष्ट प्रबुद्धो भूपतिः प्रात सर्वं तन्निज पत्न्यै निगद्य प्रहृष्ट सपत्नीको व्रतपारणामकरोत् । अचिरादापन्नसत्त्वा सम्राज्ञी यथासमयमसूत सुपर्णिघबन्धसङ्घटितकोमलमांसलशरीराम्, सुताम् , इति सुत निर्विशेषसम्पादितमहोत्सवः कर्पूरक कर्पूरिकेति तस्या नाम चक्रे। लोकलोचन चन्द्रिका सा राजसुता सुताधिकस्नेहलालिता लताभिनवेव लावण्याधिक्यमा दधती दधती चापि पदमभिनवयौवने तद्विवाहमभिकाङ्क्षत्यपि भूपतौ, पुरुषद्वे षिणी, मनस्विनी, न पुरुषाङ्गुलिपातमपीच्छति। किं कन्याजन्मफलम्? कुतस्त्व न विवाहमिच्छसीति सरसया मत्सुतयाऽनुयुक्तोक्तवती, 'सखि, मम विवाहा निच्छाया प्राग्जन्मजातिस्मरो मूलम् । तथाभियहृदयायै तुभ्यमभिदधतीं मामव धारय 'महाम्भोधेस्तीरेऽस्त्येको महान् चन्दनवृक्ष' । निकषा च त, वर्तमाने विनिद्र सान्द्रसरसरोजराजितसरसि, प्राग्जन्मनि अहमभव हंसी । साऽहमन्वितटस्थ चन्दनपादपे स्वेन भर्त्रा हंसेन सह निर्मितनीडा, क्रीडानुरक्ता यापकालमविधि ।

१ 'सुपामादिषु च' । २ 'समासेऽङ्गुले' सङ्ग' ।

सतीर्थ्यसमानोदर्यान्यतमसदृक्षेण[1] केनचित्पुरुषेण, मद्धितैकपरेणाहमभिहितः, 'भद्र, न गन्तव्यमितस्त्वयेहैव वस्तव्यम्, आहारकाले च मध्यमपुरे समारुह्य स्थातव्यम्। एवमुक्त्वाऽन्तर्हिते तस्मिन् प्रबुद्धोऽहं निरधिनव यत्कुमारनिर्मितमेतद्दिव्यस्थानमितीहैं निवसन्नहं नूनं पदात्पदं श्रेयः समुपेष्यामीति यद्वात्थोत्थितो निर्वर्तिताह्निकक्रियो यावदाहारकाले मध्यमपुरमारुह्य स्थितः तावदुपनतेषु हिरण्मयेषु पात्रेषु स्वादिष्टसर्पि शालिभिस्सा–धाणा–शष्कुली–समाव–शूकशाकादिभोजनं यथाचिन्तितमन्यथोपनतं सद्य एव मत्पुरः[5] स्थापितमभूत्। यथाभ्यवहरयापहृतक्षुत्तृष्णोऽहमवाप्तातीवनिर्वृत्तिः संवृत्तः। ततः[6] प्रभृति प्रतिवासरमथाप्रययाचिन्तितराजभोगोऽहमिहैव वसतिमकरवम्। इह हि मच्चिन्तितं परिच्छदो भार्या वा नास्तीति सर्वं पुर एव भनो मया दारुमयो विहितः। इत्थं[7] प्रामंतसोऽप्यहं राज्यधराभिधो विधेर्वशाद्[8] आयमाणो देवनिर्मितेऽस्मिन् पुरे एकं[12] कोऽत्र निवसामीति सौम्य, यथाशक्त्यातिथ्यपरिचर्यापरस्य मम सत्कृतिस्वीकृतिपूर्वकं क्षणं विश्रम्य गम्यताम्।

एवमुक्त्वा राज्यधरेण तत्पुरोद्यानवापीं नीतः सगोमुखो नरवाहनदत्तस्तत्र स्नातो, विकचवारिजाञ्चितपद्ममुखो, मध्यमपुराहारभूमिं प्रापितो व्यालोपस्थापितान् सुस्वादुविविधाहारान् भुक्त्वा, दुग्धादिमधुमधुरपेयानि च पीत्वा, नितरां सन्तुष्टिमवाप। ततस्तत्र भोजनभाजनमार्जनकरादीनामभावेऽप्यदृष्टेन प्रमृष्टाहारभूमिको भुक्तताम्बूलैर्लाब्धवक्त्रो नक्तं शयनोत्तममेजे। तत्र च चिन्तामणिनिमितरपुरमाहात्म्यविस्मयस्तिमिततारको वत्सेशसूनुः, कर्पूरिकाऽनवाप्तिनयौरसुक्येन भाविसपत्नीष्ययेव निद्रयाऽनाश्लिष्टो, विनिद्रान्, पार्श्वस्थीयेन शयनमध्यमध्यासीनेन राज्यधरेण, कस्यां[13] चिन्, चिन्तयाऽलम्, उदारसत्वं श्रीरिवाङ्गना भजते इति त्वमपीप्सितां प्रियामवश्यं प्राप्स्यसी'त्युक्तोऽथासधैर्यो गोमुखेन सह

---

१ 'समानतीर्थेवासी,' तीर्थे ये'। २ 'समानोदरे शयित ०' 'विभाषोदरे'। ३ 'दृक्षे चेति वक्तव्यम्'। ४ 'इदमो हः' 'इदम इश्'। ५ 'दाक्षिनायनहास्तिनायनेति' साधु। ६ 'पूर्वाधरावराणाम् असिपुरधवश्चैषाम्'। ७ 'पञ्चम्यास्तसिल्,' 'त्यदादीनामः'। ८ 'मयड्वैतयोर्भाषायाम्०'। ९ 'इदमस्थमु'। 'एतेतौ रथो,' १० 'ग्रामकौटाभ्याञ्च तक्ष्णः' ११ राजेवाचरतीति 'कर्तुः क्यङ् सलोपश्च' 'अकृत्सार्वधातुकयोर्दीर्घः' ततः शानच्। १२ 'एकादाकिनिच्चासहाये' इति चाकिकः कन्। १३ 'अत इन ठनौ'।

सुख निदद्रौ। प्रातश्च कृताहार' क्षण यावत्तिष्ठति तावद् गोमुखो राज्यधरमुवाच, 'सखे, मत्प्रमो कृते य न्त्रविमानमेक कुरु येन तदारुह्य कर्पूरसम्भवपुरमवाप्य समवाप्यतां निजप्रियाऽनेनेति। तदाकर्ण्य तदासावुपानीय रचितचरमपंक्ति स्मैक वातयन्त्रविमानकम्। मनोवेगगामि—खगामि च यदारुह्य सगोमुखो नरवाहनदत्तो महत्तुङ्गवितकल्लोलिनीवल्लभस्तदपरतीरवर्तिकर्पूरसम्भव पुरमवाप्य नभसोऽवतीर्यं विमानादवरुह्य सकौतुक पुरान्त: परिभ्रमंस्तदेवाभीप्सित कर्पूर-सम्भव पुरमिति लोकतो ज्ञात्वाऽतिहृष्टो वर्षीयस्या स्त्रियैकयाऽधिष्ठित रुचिर वेश्मैक तदनुमतो निवासाय विवेश। तत्रानुपङ्क्तिकगत्या जिज्ञासमान, 'आर्ये किमभि धानोऽत्र राजा, किञ्च तदपत्यम्, कथञ्चतद्रूपमिति' वैदग्धिकाभ्यामावाभ्यां शसेत्येवमनुयक्ता वृद्धाऽद्धाऽरन्धवती तमेवमुत्तरीतुम्—

महाभाग, निखिलविश्ववैभवसम्भवे, कर्पूरसम्भवेऽस्मिन् कर्पूरको नाम राजा। स चानपत्यताधिपीडितः सदारः सदारचितशङ्करार्चननमस्योऽप्यधिकतपस्याभि काङ्क्षयाऽनन्यदाशोऽनन्यदास्थितो वरदस्य, वलीवर्दवाहनस्य, सन्तोषाय निराहार स्तपस्सवुमारभत। पञ्चरात्रोपोषिताय च तस्मै स्वप्ने भगवान् भूतभावन समा दिदेश, 'पुत्र समुत्तिष्ठ, समवाप्स्यसि त्व पुत्राभ्यधिकां कन्याम्। अवाप्स्यति च यस्या पतिर्विद्याधराधिपत्यम्'। एवमादिष्ट प्रबुद्धो भूपति प्रात सर्वं तद्विज पत्न्यै निगद्य प्रहृष्ट सपत्नीको व्रतपारणामकरोत्। अचिरादापन्नसत्त्वा सम्राज्ञी यथासमयमसूत सुपर्वन्धिव घसङ्घटितकोमलमांसलशरीराम्, सुताम्, इति सुत निर्विशेषसम्पादितमहोत्सव कर्पूरक कर्पूरिकेति तस्या नाम चक्रे। लोकलोचन चन्द्रिका सा राजसुता सुताधिकस्नेहलालिता लताभिनवेव लावण्याधिक्यमा दधती दधती चापि पदमभिनवयौवने तद्विवाहमभिकाङ्क्षत्यपि भूपतौ, पुरुषद्वे-षिणी, मनस्विनी, न पुरुषांगुलिपन्नमपीच्छति। किं कन्याजन्मफलम्? कुतस्त्व न विवाहमिच्छसीति सरसया मत्सुतयाऽनुयुक्तोक्तवती, 'सखि, मम विवाहा निच्छाया प्राग जन्मजातिस्मरो मूलम्। तदाभिघद्दयायै तुभ्यमभिदधतीं मामव धारय 'महाम्भोधेस्तीरेऽस्त्येको महान् चन्दनवृक्ष। निकषा च त, वर्तमाने विनिद्र-सान्द्रमरससरोजराजितसरसि, प्राग्जन्मनि अहमभव हसी। साऽहमथितदस्य चन्दनपादपे स्वेन भर्त्रा हसेन सह निर्मितनीडा, क्रीडानुरक्ता कायकालमविदि।

१ 'सुधामादिषु च'। २ 'समासेऽङ्गुले सग'।

किन्तु यत्पदमिस्त्विमिमाक्षी, स्थालीकाष्ठकारखुङ्कारेणार्या तर्जयन्निवाकस्मात्तस्मादस्मत्सुतामपाहरदित्यपत्यस्नेहसुलभवैधुर्या धुर्यागत्याभिमतस्थशिवलिङ्गस्य निपतन्ती, विलपन्ती, च 'निरपराधोपपीडक, दण्डधारिन्, त्रिशूलिन्,' इत्याद्यनेकोपयुक्तनामोच्चारम्, अपरिमयविषादा निषादाहतपोतकसञ्जातशोकसन्तापविधुरीकृतकुररीवामन्दं क्रन्दन्ती, विपतपक्षतिरिव क्षितौ विलुठन्ती, क्षुधा दिवसमहमासमनशनेति राजहंसेन मदीयेन पार्श्वोपेत्याहमुक्ता—'प्रिये, समुत्तिष्ठ, त्वरी तापस्यानुशोकेन अलम्। जीवन्ति सर्वमवाप्स्यस इति भविष्यति नावन्याऽपस्यानीति'। एवं कद्वदस्य तस्य हृदयशोकोत्कारिणीं वाणीमाकर्ण्य रात्रिं क्लेदनिष्कृपतोत्पन्नविस्मयविस्मृतचिन्ता धिगहो पुरुषान्, कापुरुषान्, पापान्, ये भक्तिमतीष्वपि पत्नीषु कामवासनाशमनमात्रैकोद्देश्या वेश्याभिगमनमिवाभिगमनमाकलयन्तो बालापत्येषु चैव निष्करुणीभवन्ति। तत् किममुना मदीयपतिना दुःखिना वा देहेन गेहेन वाऽपत्यशून्येने'त्यालोच्य हृदि दृढया भक्त्या भव पुरतः पत्युस्तस्य पश्यत एव जन्मान्तरे जातिस्मरा राजपुत्री भूयासमिति सङ्कल्प्य पयोनिधौ तच्छरीरं क्षिप्रं क्षिप्तवतीति पूर्वजातौ भर्तुस्तस्य नृशंसतां स्मरन्त्या हृदि विषविषमविषयवैरस्यव्रततिमावर्द्धयन्त्या मे नान्यत्र कस्मिंश्चिदपि वरे मनोऽनुरक्तमिति विवाहमधुना नेच्छाम्यतः परं सर्वं दैवायत्तम्। एवं राजसुतोद्घाटिताखिलरहस्या साऽऽगत्य मामुपवर्णितवती। अतः पृच्छते ते सर्वं मयाभिहितम्।

सा चैषा नृपात्मजा विद्याधराणां भविष्यच्चक्रवर्तिनस्तव भार्या भाविनी। पूर्वं देवेन शम्भुनाऽप्येतदादिष्टमिति तल्लक्षणोपेतं त्वामिह लोकेऽहमालोकये। एवमुक्तो धूर्तोपहृताहारो नरवाहनदत्तो गोमुखान्वितो निशां तां तत्र नीत्वा, प्रातः सम्मन्त्र्य सह मन्त्रिणा गोमुखेन कृतमहाव्रतिकवेशो गोमुखसहायः, 'हा हंसि! हा हंसि!!' इति धावमानो राजकीयद्वारमासाद्य जनतावृतो बभ्राम। समालोकितैदमीयैतद्वृत्तयश्चेटिका सविस्मया राजसुतां कर्पूरिकामूचुः—'देवि, सिंहद्वारेऽस्माभिरेको महाव्रती दृष्टः। सद्वितीयोऽपि च सौन्दर्येणाद्वितीयः, 'हा हंसि! हा हंसि!!' इति दिवानिशमुच्चारयति। पूर्वं हंसी सा, चेटीमुखादेवम

१ निराहारा दिवसमतिष्ठम्। २ 'रथवदयोश्च' इति को कदादेशः। ३ 'विभाषा पुरुषे'। ४ 'राज्ञः क च'। ५ 'त्यदादीनि चे'ति इदं शब्दस्य वृद्धसंज्ञायाम् 'वृद्धाच्छः'।

यथार्थं धार्यमाणसकौतुकहृदयासङ्गा, स, काल एव तस्मिन्द्विजान्तिकमानाय्य, शङ्कराराधनोपात्तमत, सततुमिवातनुम्, विस्मयोत्फुल्लया दृशा पश्यन्ती किमेत दिति त्वया हा ! हसि ! हा ! हसि !! इत्युच्चायत इति तमनुयुयुजे। किन्त्वय मनुयुञ्जानामपि तां हा ! हसि ! इत्येवमुत्तरयति तस्मिन् गोमुखस्तामुवाच, 'देवि, विषयेऽस्मिन् सविस्त्या वदन्त मामवधेहि—'कर्मयोगतोऽय पूर्वजन्मनि हस आसीत्। जलनिधिसमीपे महत सरसस्तटे वरटया सह चन्दनपादपे निवसतोऽस्यापत्येषु जलनिधिनाऽपनीतेषु, योषिदस्य विपत्त्वाऽपत्यशोकदहन दह्यमानमात्मानमब्धौ, त्वब्धौपयिकशान्तिरभवदिति तद्वियोगार्तं पक्षिजातौ विरक्तस्यक्षुकामस्तनुमन्यजन्मनि जातिस्मरोऽह राजपुत्रो भूयासमेषा च मे जातिस्मरा भार्या भूयादिति सकल्पयन् विरहवह्निविधुर शकर सस्मृत्य निपत्य पत्यौ सरितामभ्यस्याश्चवसितासुरभवत्। अधुना चाय शुभे, कौशाम्ब्यां वत्स राजस्य जातिस्मरो नरवाहनदत्तस्तनय सञ्जातः। जातश्चायमुद्भूतया दिव्यया वाचा विद्याधरेन्द्राणां चक्रवर्ती भवितु समादिष्ट। क्रमेण च यौवराज्येऽभिषिक्त पित्रा, दिव्यया मदनमञ्जुकया च परिणायितो, विद्याधरपतेर्हेमप्रभाख्यस्य सुतया रत्नप्रभया स्वयमागत्य वृतोऽपि निर्वृतिं नाप्नोति तां नक्तदिव स्मरन् हसीमिति बाल्यमृत्योऽहमेतेन निगदित। मृगयार्थमायातोऽय मद्द्वितीयो दैवात् कया चित्तापस्याऽवलोकित कथाप्रसगेन सानुग्रहमेवमुक्तो यद् 'पुत्र, पुरा कमयोगाद्ध सत्वमापन्नस्य कामस्य दिव्यस्त्रीशापतश्च्युता हसी भार्याऽभवद्। वेलाजलाप हृतापत्यशोकस तप्तायाश्चोद् यथामात्मान पातितवत्यां तस्यां, तद्वियोगासह स हसोऽप्यात्मानं तत्रैवाक्षिपदिति शम्भो प्रसादात्त्व जातिस्मरो वत्सेश्वरात्मजो जात। सा हसी च पारेसमुद्र कर्पूरसम्भवे पुरे कर्पूरिकानामाधुना राजसुता जाता। तत्त्व पुत्र, अद्य तत्र सगच्छस्व स्वप्रियाञ्चोपयच्छस्व। एवमुक्त्वा दिवमु-त्पतितायां तस्यां तापस्यामसावस्मत्स्वामी[1] तत समुपलब्धप्रवृत्तिस्तत्क्षणमेवे तोऽभिमुख मद्द्वितीयो गन्तु प्रवृत्तस्तत्स्नेहात्पणीकृतनिजजीवितो विविधश्वापद सकीर्णकठिनकान्तारप्रा सरदातगिरिणदीक्लेशमपरिगणयन्नत्युषितदस्युहेमपुरीयस चगा राज्यधराभिधेयेन प्रत्त यन्त्रविमानकमारुह्य पयसामास्पदमपि गोष्पदमिवा

---

१ पोऽन्तकर्मणि इति धातोः क्तः। २ 'स्वामिन्नैश्वर्ये'। ३ 'शुनो दन्तदंष्ट्रा कर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः'। ४ 'गिरिनद्यादीनां वा'। ५ 'आस्पद प्रतिष्ठायाम्'। ६ गोष्पद सेवितासेवितप्रमाणेषु'।

कल्पयन्मासद्वयेऽस्य पुरमेवद्वयाप्येह मार्ग्यस्तयान्तिकमुपेयिवान्¹। किमत्र परं निखिलाधारप्रतिष्ठानिष्ठस्य परमेष्ठिनोऽमीष्टमिति तु नावावधि स्पष्टम्।

गोमुखमुखतीयमेतन्निशम्य समुपजातसवादप्रत्यया कर्पूरिका मत्यार्यपुत्रस्यास्यैतावान्² स्नेहो मुधैव मे विरक्तिरिति प्रेमाश्रुकोष्णका³ जलक्लिन्नानना विमृशन्ती 'सत्यमेवाह सा हसी, धन्यो च, यत्कृते जन्मद्वयेऽनुभूतवानार्यपुत्र एव क्लेश प्रतिदेशम्। तदद्यगधुना प्रेमक्रीता ते दासी मोघासीनतातो मत्सत्कृति स्वीकृतौ प्रदर्शनीयेति' वादिनी नरवाहनदत्त सगोमुख स्नानाय सम्मान्य परीवारमुखेन सवमेतत् स्वजनकमबोधयत्। सोऽपि चायमुद्दलकल्पवृत्तान्तस्तदन्तिकमासाद्याधासविवाहेच्छुसुतानुकूल विद्याधरमहाचक्रवर्तिलक्षणलाञ्छितवरश्चाव लोक्य कृतकृत्यमिवात्मान मन्यमानः सविधि सादर स्वसुता वत्सेशसुताय ददौ।

एव कर्पूरिकया सह कृतोद्वाहो नरवाहनदत्तो मूर्तिमत्या कीर्त्यैव तया कतिचिद्दिनानि तत्र निवसन्नेकदा कौशाम्बीं गन्तु कर्पूरिकामाह। सापि च नरवाहनदत्तीयमन्त्रविमान चतुरस्थितिपर्याप्तमनाकलय्य देशा तरादागत्य तत्र निवसन्त प्राणधरनामान यन्त्रविमानविरचनचतुरमाकार्य तत्क्षण व्योमगामि महदेक यन्त्रविमान रचयितुमादिशन्ती चेटीमुखेन पित्रे प्रस्थानेच्छां न्यवेदयत्।

अत्रान्तर एव चित्र सर्गे⁴ समागते रात्रि, समायातस्तदा प्राणधरोऽपि व्यजिज्ञपत्—'देव, सुमहद्विमानमेकं मे कृतमेव वसते यन्मानुषसहस्र लीलयैव वोढु शक्नोति'। एवमाचक्षाण त तदाण साधुवादैर्नरवाहनदत्तोऽभिपूज्य 'कच्चित्व पुत्रानुजस्य राजधरस्य नामायन्त्रनिर्माणकुशल प्राणधराभिधो भ्राता?' एव मभिदधान समतिप्रणतिप्रह्वः 'स एवाह देव, कथ नौ देवो वेत्ति' इति जिज्ञासापरवशस्य तस्य राजधरेणोक्त सर्वं सप्रसगमभिधाय तद्विचिकित्सामुत्सारयामास।

अथ मुदा तेन प्राणधरेण समुपाहृते महायन्त्रविमानके, अमूरचितमङ्गला लङ्कृतां नववधू कर्पूरिकां नरवाहनदत्त मदनदासीकर्पूरकाञ्चनस्तसमारोप्य, सगोमुखो राजविसृष्टेन प्राणधरेण प्रधानप्रतीहारेण च सहित, समारूढतद्विमानो, व्योम्नोत्पतन्नब्धिदक्षिणतारस्य राज्यधरावसथमासाद्यावततार। तत्र भ्रातृदर्शना

---

१ 'उपेयिवाननाश्वाननूचानश्च'। २ 'यत्तदेतेभ्य' परिमाणे वतुप्'।
३ 'कव चोष्णे'। ४ 'ईषदर्थे'। ५ 'धनगण लब्धा'। ६ 'सतम्याञ्जलु'।
७ दिक्शब्देभ्यस्तीरशब्दस्य तारभावो वा वाच्य'।

रत्नहृष्ट प्रद्वेषोद्वाप्य कथमप्युज्झितप्रज राज्यधरमापृच्छ्य तेनैव विमानेन सदैव कौशाम्बीमवाप्याकाशारसानुचरनववधूको नरवाहनदत्तो विस्मितनेत्रया जनत याऽवलोक्यमानोऽवततार। पिता चास्यागमन बुद्ध्वा देवीसचिवस्नुषादिभि सहाभ्युद्गताभिनववधूसहित चरणायनत त समभ्यनन्दत्। माता वासवदत्ता चापि पद्मावत्या सम समन्सरान दाश्रुमवाहन्नुदितत द्विरश्लेषद्दु खवन्धमाशिश्लेष। प्रेमहतेर्ष्ये रत्नप्रभामदनमञ्चुके चापि तच्चरणौ हृदयञ्च तुल्यमेव जगृहतु। ततो वत्सेश ससचिवो यथोचितावनतां नववधू कर्पूरिकां तत्पैतृक प्रधानप्रतीहारञ्च पूजयित्वा नरवाहनदत्तोक्तमामूल कर्पूरिकाप्राप्तिवृत्त यथावृत्त समाकर्णयन्नितरां तोषमवाप। ततो भोजनाद्युत्तरं स्थित्वा यौगन्धरायणादिभि सह प्रेमालाप कुर्वन्त वत्सेश प्रणत प्राणधरो व्यजिज्ञपत्—'देव, कर्पूरकभूभृता समादिष्टावावां यन्मम सुतायां सकुशल भर्तृभवनमासायां त्वरितमिहागन्तव्य येनाह तां सकुशल सप्राप्ता जानीयाम्' इति। तद् देव, कर्पूरिकास्वहस्तलिखितलेख दापयित्वा मया सहित कर्पूरसम्भवपुर गन्तु प्रधानमिममनुजानीहि। अहञ्च सुधासरस श्रीमच्चरण तामरस त्यक्तु न शक्नोमि इति निजकुटुम्बमादाय सत इह प्रयागमिष्यामीति'।

एवमुक्त्वा समुपात्तसद्वर्त्तसदनसकुशलावासिकर्पूरिकाकराङ्कितपत्रौ कर्पूरसम्भवेशप्रधानामात्यप्राणधरौ वत्सेशादिभिर्विसृष्टौ समारूढविमानौ गगनगती तीर्णजलधी कर्पूरसम्भव नगरमवाप्य समर्पितलेखौ सन्नीशृद्भूभृतमान दयाञ्च क्रतु। अन्येद्युश्च सकुटुम्ब प्राणधरो राजानमनुज्ञाप्य सम्भावितराज्यधरो नरवाहनदत्तपार्श्वमगात्। युवराजोऽपि च तस्मै तत्रागताय निजमन्दिरसमीप एव वसतिं जीविकाञ्च दत्त्वा तन्निर्मितैर्विमानकै रत्नप्रभामदनमञ्चुकाकर्पूरिकाभिश्च सह विहरन्नम्यस्यन्निव माविविद्याधरचक्रवर्तिगगनगतिं, सुखेन दिनानि निनाय।

एव कौशाम्ब्यां निजोद्भवमवनमधिवसन्नरवाहनदत्त कदाचिन्मृगयार्थ मप्रेर्वणमनुगत सैन्यपरित्यक्तो गोमुखद्वितीय स्पुरद्दक्षिणाक्षिसूचितशुभागम मोऽरण्यानीमेकामविशत्। अशृणोच्च दिव्यवीणारणनोन्मिश्रमधुरसङ्गीतम्। तदनुसृत्य गच्छन्नातिदवीयस्यध्वनि शैवायतनमेकमवलोक्य तन्निकटवर्तिन्येकस्मिं

१ 'पितुर्यच्चे'ति चाड्ङ्। २ द्योत्यार्थप्रकर्ष द्योतकात्तरप, 'तरप्तमपौ घ', 'किमेत्तिङव्ययेति' आमु। ३ 'नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ'। ४ वनस्याग्रे अग्रेवणम् राजदन्तादित्वादग्रेशब्दस्य पूर्वनिपात सप्तम्याश्चालुक्, ततः 'वनपुरगामिश्रकेति'णत्वम्।

भवनं प्रविष्टा शापादस्माद्विमुक्तिमवाप्स्यसीति शप्ता । सैषाऽशोकमाला विद्याधरी चरी तेनैवाभिधानेनेह मानुषी जाताऽधुना शापान्तमवाप्य वैद्याधरीं निजतनुं प्रविशन्ती विद्याधरमभिलषिताश्च महीभुजं पतित्वेनावाप्य रंस्यते'। एवमुक्त्वा विरतायां दिव्यवाचि, तत्क्षणमशोकमाला सहसा परीतप्राणा पृथिव्यामपतत्। तद्यालोक्य बाष्पायितेक्षणा तत्क्षणमलङ्कारवती सनरवाहनदत्ता तत्पार्श्वमगमत्। हठशर्मा चाकस्मादागाम्धो विलपन् इपसमुत्फुल्लानन, किमेतदिति पृष्ट सर्वैस्त त्कारणं पूर्वजन्मस्मृत सद्यमित्थं सर्वेभ्योऽवर्णयत्--'अस्ति हिमगिरिणदीतीरस्थमदन पुरे विद्याधरेश्वरः प्रलम्बभुजो नाम। प्राक्पुण्यपरिपक्वानि फलानि भुञ्जानस्य तस्य स्थूलभुजाख्यस्तनयस्समुदपद्यत । स च भव्यो राजपुत्रः क्रमाद् यौवनमापन्नो विविधगुणगणयुक्तो निजवयोगुणानुरूपमाख्यातिमभजत् इति सुरभिवत्साख्यो विद्याधरपति सदारिको दिव्याऽभ्यागारिक[4] प्रलम्बभुजमागत्य सुरभिदत्ताख्यायाः निजसुतायाः मरकामणया गुणवते तत्सूनवे स्वसुतां पाणिपीडनविधिना दातुं प्रास्तावीत्। प्रतिपन्नतद्वचनेन च प्रलम्बभुजेन स्थूलभुजस्समथमभ्युपपत्तुमभिहि तोऽपि कन्दर्पकल्परूपदर्पितः रूपेणावरैषा नाहमेनां परिणेष्ये इति पितृवचनं स्पष्टं प्रत्याचष्ट । किन्तु 'पुत्र, जगतीह किं क्षणभङ्गुरेण रूपेण ? महान्वयसम्भूता पित्रा दत्ता सुरभिदत्ता त्वत्कृते मयाऽऽेति मान्यथा कृथा मद्वचनम्'। इत्यमनुनी यमानोऽपि निषेधैकनिर्बन्धो न यदा तद्वचनमन्वसरत्तदा मन्युरुद्भूततच्छ्वा जुम्भाप्यमानकोपः पिता तमित्थं शशाप यदनेन रूपाहङ्कारगौरवाणेनाम्नस्तस्य विकृतविकटाननो मनुष्यो भव। अशोकमालया मायया चानिच्छन्त्याऽप्युद्धिष्ट सोन्यप्रसक्तायास्तस्याः कृते विरहकृशीकृतमनोनीतविग्रहोऽचिरागान्धोऽभिदा हाद्विमहापातकं करिष्यसीति। एतदाकर्ण्य साध्वी सुरभिदत्ता प्रलम्बभुजपाद लग्नोवाच च मदीयभर्तुरेकाकिनो मदपराधतः क्लेशो मा भूदिति मह्यमपि शापं देहि येनावयोः समा गतिर्भवेत्।

एवमुक्तवतीं साध्वीं प्रति परितुष्टः प्रलम्बभुजोऽशोकमालाशापमोक्षावधिं तच्छाप। तदैवाचिरादुभयविवाहयोगश्चोक्तवान्। स चाह स्थूलभुजं शापादिह

१ भूतपूर्वा विद्याधरी, 'तसिलादिष्वाकृत्वसुचः'। २ 'गिरिनद्यादीनां वा'। ३ 'कुमति चेति' प्राप्तं णत्वं 'युवादेर्न' इत्यनेन वार्यते। ४ अभ्यागारे तत्सम्बन्धि कर्मणि नियुक्त, 'अगारान्ताट्ठन्'। ५ 'कुमति च'। ६ पान पीतिः 'ल्युट् चेति' भावे नपुंसके ल्युट् 'वा भावकरणयोः' इति पाननकारस्य वैभाषिको णः।

परिच्युत स्वाहकारदोषानुभूतैतावन्महादुःखोऽद्य विमुक्तशाप सजात'। एव मुक्त्वा परित्यक्ततत्तनुर्हंठशर्मा, समवाप्तविद्याधरकुमारकत्व, स्वविद्याप्रभावतोऽशोकमालादेहमदश्यमेव गगायां क्षिप्त्वा, समानीतैश्च तत्तोयैरभितोऽलङ्कारवती वासगृह क्षणात्क्षालयित्वा कृतस्वकीयभाविनरवाहनदत्तनमस्कृति, स्वकाय सिद्धय विहायसा समुदपतत्। तत्र तथा समवलोक्य विस्मितेष्वथ सर्वेष्वनुपन्नसमुपनतां गोमुखोऽनगरतेरिमां कथामवणयत्।

अस्ति पृथिव्यां शूरपुर नाम यथार्थं नगरमेकम्। तत्राभवद् महावराहनामाऽतिदुर्मदो राजा। गौर्याराधनतत्परस्य निरसन्ततेस्तस्य स्वमहिष्यां पद्मरता वनङ्गरतिर्नाम सुतोत्पन्ना। यौवनापन्ना सा कालेन स्वरूपयौवनाभिमानिनी माननीयेष्वपि याचमानेषु राजकुमारेषु न कतममप्यपतीयत्। अपितु य शूरो रूपवान् शोभन विज्ञानमेक वेत्ति तस्मै मयाऽऽत्मा दातव्य इति कृतनिश्चया तस्थौ। व्यतीतेष्वथाहस्सु श्रुततद्गुणनिश्चयोद्'तास्तदिच्छुवश्चत्वारो वीरा दक्षिणापथादपरंस्पराश्चलन्तः समागता अनङ्गरतिमन्निधौ नृपतिना महावराहेणैकैक नामजातिविज्ञानमनुयुक्ता एकतमस्तेष्वेव व्यजिज्ञपत्–'शूद्रोऽह पञ्चपट्टिकनामा, प्रत्यहमह पञ्च पट्टिकायुगलानि वयामि। तेभ्यश्चैक ब्राह्मणाय ददामि, द्वितीय च परमेशाय। तृतीयं स्वय वसे। चतुर्थं चाह या मदीया भार्या भवेत्तस्यै दास्यामि; विक्रयेण च पञ्चमस्य शरीरयात्रा सम्पद्येतैतन्मयि विज्ञानम्'। द्वितीयश्च तेष्वा चख्यौ–'भाषाज्ञसज्ञकोऽह वैश्यः। सर्वेषां मृगपक्षिणां रुत विजानामि'। ततस्तृतीयोऽवदत्–'खड्गधराभिध क्षत्रियोऽह, नान्येनापितु खड्गयुद्धेन जय्यः'। चतुर्थं स्तेष्वब्रवीत्–'द्विजोऽह जीवदत्ताख्यो गौरीप्रसादविद्याभ्यां मृतां स्त्रिय जीवयामि'।

एव पार्थक्येनात्मविज्ञाननैपुण्यमुक्तवत्सु तेषु क्षत्रियविट्शूद्रेषु तथा, रूपवज बलवीर्यं च स्व शसति ब्राह्मणे, महावराहेण, सर्वे ते निजसूतगृहे विश्रामार्थं विसृष्टाः। आत्मजाऽनङ्गरतिश्च 'चतुर्षु तेषु वीरेषु कतमोऽभिमत' इत्यनुयुक्ता नैकतममपि पतित्वेन कामयमानाऽब्रोचत्–'शूद्रस्य वायकस्य ज्ञातपक्षयादिरुतस्य वैश्यस्य च वयनपक्ष्यादिरुतज्ञानयोरनुपयोगित्वात्तन्निर्याह ताभ्यां कथमात्मानमर्पयेयम्। तृतीयस्य तुल्यकुलरूपवयस्कस्यापि सेवोप

---

१ 'नगपांशुपाण्डुभ्यरचे'ति र। २ 'वि-दुरिच्छु'। ३ 'व्यपरस्परा' क्रियासातत्ये'।

स्याश्च स्वलोक यातेति यात्वा विन्ध्यवासिनीमेवाराधय येन विद्याधरीमपि तां त्वमवाप्नुयाः। एषा च दिव्यभोगस्था, हे राजन्, त्वयाप्यशोच्या। एवं मुदीय विरतायां विन्ध्यगिरिं, तनूजां निजामन्वेष्टुं सत्कृत्य परिहितशुक्, भूसुक्, त्रयोऽन्ये वीराश्च यथागत ययुः। जीवदत्तस्तु जातास्थो विन्ध्यवासिनी माराधयँस्तुष्टया तयेत्थमादिष्ट —'अस्ति तुहिनाचले वीरपुर नाम नगरम्। तत्रत्यविद्याधराधिराजस्य समराभिधस्यानङ्गवतीदेव्यामुत्पन्नाऽनङ्गप्रभा सुता सत्स्वपि सद्योग्यवरेषु रूपयौवनोत्सिक्तया कञ्चिदपि स्वपतिमनिच्छन्ती दुर्ग्राह्याभिमुद्धाभ्यां स्वपितृभ्यां मानुषीं तनुं, मुनिकन्याभिलापेण शापादवाप्तमर्त्यत्वस्य विरूपस्य खड्गसिद्धाभिधस्य पत्नीत्वञ्चावाप्तुं तत्रापि च पतिसुखमनवाप्य षोडशाब्दे तत्तनुपरित्यागानन्तरं पुनस्तन्नगरं निवतयितुमभिशप्ता। अनिच्छन्त्या अपि खड्गसिद्धेन मर्त्यलोकं नीतायास्तस्या अन्यापहृतिहेतुका परया वियुक्तिः। यतो हि पूर्वजन्मनि तेन अष्टौ परयोषितोऽपहृताः अतोऽष्टजन्मभोगार्हं दुःख मनुभवता स्वपापभागदेन तेन पापिष्टेन सगतैकस्मिन्नेव जन्मन्यष्टानां जन्मनामिव दुःखमनुभवन्ती नष्टस्मृतिबहून् मानुषपतान् च गच्छन्ती मनुजीभूतेन मदनप्रभेण खचरेणान्त्येन पत्या याच्यमाना शापनिर्मुक्ता समवाप्तनिजलोका खचरीभूतेन तेनैव मदनप्रभेण समुचितेन पत्यावाप्तसङ्गतिर्भविष्यतीत्युक्ता। एवं पितृशप्ता सा चिताग्नवाप्तविग्रहाऽनङ्गप्रभा पुनरनङ्गरतिरूपेणोत्पन्ना स्वपित्रोर्निकटे वीरपुरे वर्तते। त्वं तत्र गत्वा विजितेन समरे समरेण तत्पित्रा दत्तां तां परिणयस्व। खड्गं चेमं गृहाण। हस्तगतेनानेन त्वमाकाशगतिरजय्यश्च भविष्यसि। एवमर्पितखड्गायां देव्यां तिरोहितायां, प्रबुद्धो जीवदत्तो हस्ते दिव्यखड्गमालुलोके। प्रहृष्टमना स चायोत्थाय विहिताभिषकानतिरतप्रसत्तिसुधाप्यायितशरीरशान्ताशेषतप क्लेश, करधृतखड्गोऽवलम्बितवैहायसगतिः, क्षणेनैव तुहिनाचलस्थितवीरपुरस्थ निजकृतिविस्मापितामर समर समवाप्य जन्यजितेन च तेन प्रदत्तां तामनङ्गप्रभां परिणीयावाप्तपरिमितसम्भोगसम्पन्नातिचिरं तत्रोवास। कृतावस्थानानन्तरञ्च समरसमरशम्पुपर्मरासिरवाप्तश्वशुरसमरसम्मतिस्ततो मर्त्यलोकमागमनिच्छन्त्याप्यनङ्गप्रभया सह परां प्रियां निजजन्मभूमिं मर्त्यलोक नभसा सरभसं समवातरन्, मध्येमार्गमर्त्यलोकितैकरम्यपर्वतया श्रान्तया तयाऽनङ्गप्रभया स्तोकं तत्र विश्रमितुमभ्यर्थितस्तत्रायतीर्य, तत्तद्दिव्यप्रभा

---

१ 'पप ठत्व दत्तृदशधासूत्तरपदादे ष्टुत्वं च घासु वेति वाच्यम्'।

घत कृताहारपानादिरनङ्गप्रभाकृतधूजटिस्तुतिगीतिमधुरमधु कर्णचषकेणापिय सपद्वतमुग्धचित्तो निदद्रौ। एतस्मिन्नन्तरे मृगयाखेटकातिश्रान्तो निर्झरजलाभिला षुको हरिवरो राजा तेनैव पथा गच्छन्नाकर्णितगीतध्वनिरुन्मुक्तरथ केवलस्तत्रागात्। परस्परावलोकनेन पञ्चशरशरशरव्यतां गतयोरनुयुक्तोक्तान्यो न्यकौतस्कुतवयोश्च तयोस्तदवस्थपरित्यक्तसुप्तस्वपत्नी[1] अनङ्गप्रभा अङ्कोपासमूपतिरूपस्य त्वरया स्व यावद्देवावगाढुमैच्छत्तावदेव भर्तृदोषेण परिभ्रष्टविद्या विद्याधरी निष्फलाप्य यसाया सञ्जातेति स्मृतपितृशापाऽपारयन्ती सोढु स्वाभिलाषानैष्फल्यजन्यां शुच, भृश सान्त्विता नृपतिनाऽङ्के गृहीत्वा स्वरथमारोहिता मनोजवेन चतुरप स्करेण रथेन हरिवरनगरमवाप्य शापविमोहिता तन्नृपत्यनुरक्ता च तत्रैव दिव्यसुखमनुभवितुमारेभे।

इतो विगतनिद्रेणाद्रौ प्रबुद्धेन जीवदत्तेनानङ्गप्रभां स्वासिन्नानवलोकयता हतासिरनङ्गप्रभैव कुत्रचिद्गता, अन्यो वा कश्चित्तद्द्वयमपाहरदिति विविध तर्कवितर्ककर्तितविचारतन्तुनोद्भ्रान्तेन मदनदहनदह्यमानमानसेन, कूट कारस्करधूजद्विकिरवचसा तत्रानगप्रभावस्थितिं निषेधन्तमपि गिरिं सर्वं दिवसत्रय, तथा दश दिवसानखिलानि तदीयरम्यकाननानि च विचिन्वाने नापि न तत्पादचिह्नमपि क्वापि समवापि। अतस्तद्वियोगविक्लव आक्रन्दन्गिर स्तत्तटसितस्ततो निर्ध्रृतिष्कशो द्विजगृहमेकमास्यमाविशत्। तत्र च सुभगा सुवस्त्रा, प्रियदत्ताख्या तद्गेहिनी आसनोपवेशितजीवदत्तस्य पादप्रक्षा- लनार्थं निजदासीरादिशन्ती 'त्रयोदशमद्य दिवसमस्याशनविरहितस्य' इत्य भाषत। तद्वाकर्ण्य तदातिविस्मितो जीवदत्तोऽनङ्गप्रभा वियोगिनीह प्राप्ता, योगि नीयमथवेत्य तर्किमृशन् धौतपादोऽशितवपत्ताशनोऽतिप्रणत, प्रियदत्तां तामस्यार्थां स्ववृत्तान्तावगतिहेतु, निजप्रियाखड्गगतिश्चैत्येवद्द्वयमपृच्छत्। समाकर्णिततद्वचना, वचनरचनाचातुरीचुञ्चुरश्लनीयचरणपतिव्रता सा, चित्ते मे स्वप्नेऽपि परपुरुष्य पद न विधत्ते, धत्ते चान्यो ना मे पुत्रभ्रातृसमान ताम्, नवा मामवलोक्याचनार्थमतिथिर्न कदाचिदपि विमुखो गृहान्तरमभि

---

१ तदवस्थ परित्यक्त सुप्तः स्वपतिर्ययेति 'विभाषा सपूर्वस्ये'ति पतिशब्दे वैभाषिकमत्वे, ङीप्। २ 'अपस्करो रथाङ्गम्'। ३ 'कारस्करो वृक्ष'। ४ 'विकिर शकुनी वा'। ५ 'किमोऽत्', 'क्वाति'। ६ 'प्रविष्कशाश्च कशोः'।

# अथ तद्धितद्विरुक्तनिर्देशात्मकः पञ्चमः कल्लोलः

इतोऽनङ्गप्रभायां च हरिवरपुरस्थस्य राज्ञो हरिवरस्यान्तःपुरे मुख्यतां प्राप्तायां, तदेकाग्रमनसि सुमन्त्राख्यामात्यन्यस्तसमस्तराज्यभरे च तिष्ठति भूभृत्येकदा मध्यदेशतः समागतो लब्धवरो नाम नाट्याचार्यः सन्नाणन्[1]कञ्च मानत्। वादननाट्यदृष्टकौशलाकृष्टेन च राज्ञा निजावरोधनाट्याचार्यो विहित इति सोऽनङ्गप्रभां नृत्ये एवमुत्कृष्टां व्यधात् यत्तस्यै सपत्न्योऽप्यस्पृहयन्[2]। कालेन नृत्यशिक्षाभ्याससहवासविवृद्धातिपरिचयपरस्पराकृष्टयोश्च तयोरेकदा स्मरशरासारशीर्यमाणशरीरा, रहसि रतलालसया परित्यक्तस्वधर्मा[3]पत्रभावाऽनङ्गप्रभा नाट्याचार्यमुपागम्य तेन सह रममाणा सुरतसुखात्यन्ततुष्टा जगाद, 'नाहं त्वया विना क्षणमप्यवस्थातुं शक्नोमि किन्त्ववगतैतत्तत्त्वो हरिवरो नैव नाविहैव स्थातुं दास्यति इतीतोऽन्यत्र कुत्रचिदज्ञातस्थानं त्वरितमाश्रयितुं श्रेयः। त्वन्नाट्यतुष्टराजप्रदत्तसौ[4]वर्णकमश्रीयश्च तव, मम च हिरण्मयालङ्कारा सन्तीत्यन्यत्रगमने स्थितौ वा न काप्यसौविधीमहमनुमिनोमि।' एतदाकर्णितेन नाट्याचार्येणाप्यनुमोदितेऽस्मिन् प्रस्तावे परिवर्तितवेषाऽनङ्गप्रभा विश्वस्तयैकया चेट्या सह नाट्याचार्यगृहमागत्योष्ट्रपृष्ठार्पिततदनल्पचारणर्द्धिरिव धीरितविद्याधरर्द्धिं नागप[5]त्यस्य हयं समारूढा रूढानुरागनाट्योपदर्शिना सह ततः प्रयान्ती वियोगपुरसञ्ज्ञकं सुदूरं नगरमवाप्य ससुखं तस्थौ। राजा हरिवरश्च अनङ्गप्रभा नाट्याचार्येण सह गतेति सन्दिग्धनिदाघदत्तद्वियोगद्युग्धुतभुग्दह्यमानमेदोमज्जो निमज्जन्नपि दृश्यमानभवस्थित्यनित्यसत्त्वगम्भीरविचारविधौ, धैर्यनीरनिधौ, न कथमपि शान्तिं लभमानो देहत्यागोन्मुखो बभूव। किन्तु मन्त्रिणा क्षणानुरागिणीर्विलासिनीरेव जानानोऽपि भवान् कथमेव स्त्रीवद्विह्वलीभवत्येव सम्यगवबोधितः, परित्यक्तशोकः, स्वदारेष्वेव समसुष्यत्। वियोगपुरे च तत्राऽनङ्गप्रभया सह कञ्चित्कालं स्थितस्य नाट्याचार्यस्य

---

१ 'न पदान्ताट्टोरनाम्'—इति ष्टुत्वनिषेधः। २ 'नित्यं सपत्न्यादिषु'। ३ अश्वपत्यादिभ्यश्चेत्यण्। ४ 'गोश्रोत्रोष्ट्रोरश्रेत्यादिना बुम्'। ५ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः। ६ 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनाद्'सत्र वाक्यार्थे न प्रवर्तते।

कौलेयकेलिकलितस्य[1] सुदर्शनाख्येनैकेन द्यूतकरेण सङ्गति सञ्जातेऽचिरेणैव द्यूतापहारितसर्वस्वं तं त्यक्त्वाऽनङ्गप्रभा सुदर्शनमेव स्वपतित्वेनाशिश्रियत्। नष्टदारधनो नाट्याचार्यश्च निराश्रितो वैराग्यात्प्रवृद्धजटस्तटं तटिन्या गङ्गायास्तपसे समाश्रयत्। नवनवप्रियप्रियाऽनङ्गप्रभा च तत्रैव सुदर्शनेन सह तस्थौ।

एकदैकागारिकैराधृतो[2] मध्यरात्रे[3] सुदर्शनो मुषिताशेषसर्वस्वीकृत इति द्रव्याभावात्स स्वमित्राद् हिरण्यगुप्ताद् वणिज किञ्चिद्धनमृणरूपेणादातुमनङ्गप्रभया सह परामृशत्। तया स्वीकृतवार्त्ता च तया सहैव निजमित्रगृहं गत्वा धनमयाचत। तत्र वणिगनङ्गप्रभोभयोरन्योन्यालोकने सञ्जाते तावन्योन्याभिलाषौ सञ्जाताविति कुशलो वणिक् सुदर्शनमपरस्मिन् दिने धनं दातुमुक्त्वा तस्मिन् दिने स्वगृहे भोक्तुमुक्तवान्। किन्तु सुदर्शनेन प्रत्याख्याते भोजने 'अस्तु, तव वनिता प्रथममेवास्माकं गृहमायातेतीयमेव भुङ्क्ताम्' इति तन्निमन्त्रणाग्रहं कृतोऽसत्तूष्णीभूते सुदर्शने कितवो वणिगनङ्गप्रभायुक्तोऽभ्यन्तरं प्राविशत्। अतर्कितोपनतया च तया सह यथेच्छं पानाहारविहारादि कुर्वाणस्तत्रैव व्यलम्बत। सुदर्शनश्च बाह्यकप्रकोष्ठे सन्निर्गमं प्रतीक्षमाणो वणिक्प्रेरितसेवकैरुक्तो यत्त्वदीया भार्या भुक्त्वा भवनं गतेति तवात्र स्थितिरनर्थिका। साध्यावधि न निर्यातेत्युक्त्वा च ते निषेधपरं तं सपादप्रहारं बहिर्निरकासयन् इति निरतिशयं दुःखितस्तेन सुदर्शनो निजमित्रेणापहृतां स्ववनितामनुचिन्त्य 'यन्मयाऽन्यस्य कृतं तन्ममान्येन कृतमिति कोपाहं स्वकर्मैवात्र हेतु। अतस्तस्मै क्रोधो व्यर्थ' इति विचार्य भवच्छेदि तपस्तप्तुं बदरिकाश्रममगमत्। अनङ्गप्रभा च रूपाधिकं वणिक्पतिमवाप्य पुष्पात्पुष्पं गता भृङ्गीव तत्रानङ्गरसास्वादनं कुर्वाणा, विपुलश्रियस्तस्य प्राणधना, प्राणेषु, धनेष्वपि च स्वामिनी सञ्जाता। किन्तु बन्धक्यधिष्ठिते गृहे कुलस्त्रीव श्रीर्ग्लायतीति कतिपयैरेव दिनैरल्पीभूतधने हिरण्यगुप्ते, लुप्ते चाखिलबाह्याडम्बरे सम्भृतभाण्डकोऽसाववशिष्टधनमादायानङ्गप्रभया सह वाणिज्यार्थं सुवर्णभूम्याख्यद्वीपे[6] सागरपुरनामकं नगरमवाप। तत्राब्धिजीविना सागरवीराख्येन निषादाधिपेन चामिलत्।

---

१ असिकलिभ्यां ढक् वक्तव्य। २ 'एकागारिकट् चौरे' ३ 'सङ्ख्याविसाय'— इति ज्ञापकस्य सामान्यत्वात् 'सर्वोऽप्येकदेशः कालेन समस्यते' इति समासानन्तरम् 'अहः सर्वैकदेश०' इत्यच्। ४ 'ईकक् च' इति ईककि चाट्टिलोपः। ५ 'स्थागापापचो भावे', 'द्यतिस्यतिमास्थामित्तिकिति'। ६ 'द्व्यन्तरुपसर्गेभ्योऽप ईत्'।

देशोद्भवमहाहस्तिहास्तिनायनादिभिः[1] पुत्रपराक्रमातितुष्टयोः पित्रोश्चरणान् पूजयामास । तदाज्ञापितश्च ब्राह्मणेभ्यो हस्त्यश्वहेमरत्नादीनि दत्त्वाऽर्थिभ्यो दरिद्रेभ्यश्चापि तथैव पुष्कलं धनं वितीर्य दरिद्रशब्दमेवार्थदरिद्रं स्वराष्ट्रे निःशेषितवान् ।

तस्मिंश्चैव पित्रा सहावलम्ब्यमाने राज्यधुरे विषप्रयोगः[2] माण्डूकेयेषु[3], कापेयता[4] कापेयेषु[5], नकुलीनत्वं[6] कौलटिनेयेषु[7], नीडनिवासः[8] चाटकैरेषु[9], द्विजिह्वता[10] गौधेरेषु[11], जडता जाडारेषु[12], क्षुद्रतोत्पत्तिः[13] काणेरेषु[14], [15]गुणविच्छेदः तान्तुवायेषु[16] [17]कुटिलिकासङ्ग्रहः कार्मार्यायणिषु[18], अजत्वं छाग्यायनिषु[19], तीक्ष्णता तक्ष्णेषु[20] नान्येषु दृश्यतेस्म ।

पुत्रस्यैव माहात्म्यमवलोक्य सानन्दमना सागरवर्मा भुक्ताखिलराज्यसुखोऽननुभूतपरपराभवः सर्वं राज्यभारं योग्यतमे स्वपुत्रे संस्थाप्य विनश्वरेणापि शरीरेणानश्वरस्य तपसः पुण्यस्यार्जिजयिषयाऽनिच्छत्यपि पुत्रे प्रयागं ययौ । समुद्रवर्मा चापि कतिचित्प्रयाणकं पितरमनुव्रज्य निजनगरं परावर्तितो यथोक्तविधि स्वराज्यं शशास ।

---

१ 'दाण्डिनायनहास्तिनायन०' । २ विषम् जलम्, तस्य प्रकृष्टेन योगः संयोगः प्रयोगो वा । ३ 'ढक् च मण्डूकात्' । ४ ईषदपेयता ( 'ईषदर्थे' इति अजादौ कोः कादेशः ) कापेयेषु—कुत्सितपेयपदार्थेषु । ५ कपेरपत्यमिति ( 'इतश्चानिञः' ) ढकि कापेयेषु कप्यपत्येषु । ६ न कुलमस्येति 'नभ्राण्नपात्'—इति प्रकृतिभावे नकुलः तस्य स्त्री नकुली तस्या इनत्वम् स्वामित्वम् कुलीनत्वाभावश्च । ७ 'कुलटाया वा' । ८ निगता ईडा ईशस्तुतिः यस्मात् स चासौ निवासः, कुलायनिवासश्च । ९ 'चटकाया ऐरक्' । १० विद्यमानता द्विजिह्वता च । ११ 'गोधाया ढ्रक्' । १२ 'आरगुदीचाम्' । १३ क्षुद्राया भावः क्षुद्रता, 'त्वतलोर्गुणवचनस्ये'ति पुंस्त्वम्, तस्या उत्पत्तिः । १४ 'क्षुद्राभ्यो वा' इति ढ्रक् । १५ सूत्रविच्छेदः । १६ 'सेनान्तलक्षणकारिभ्यश्चे'ति ण्य । १७ कुटिलिका अयस्कारोपकरणं लोहम् तत्सङ्ग्रहः, कौटिल्ये आग्रहो वा । १८ कर्मारस्य अयस्कारस्यापत्यमिति विग्रहे 'कौशल्यकार्मार्याभ्यां च' इति विहितस्य फिञः आयनादेशे तस्य 'दगुकोसलकर्मारच्छागवृषाणां युट् चादिष्टस्य' इति युडागमः । १९ 'छागवृषयोरपि' इति फिञ् तत आयनादेशे 'दगुकोसलकर्मारच्छाग०' इति युडागमः । २० 'तक्ष्णोऽण् उपसङ्ख्यानम्' इत्यणि 'वपूर्वहन्धृतराज्ञामणि' इत्यल्लोपः ।

सागरवर्मा च दैवयज्ञे[1] सात्युमुग्रैर्महात्मभिः सत्सङ्गप्रसङ्गेन सगतो गृहीतकार्पायोऽपि[2] विगतकर्षायः प्रयागे तपसा वृषध्वज सन्तोषयन्नेकदा निशावसाने त्रिपुरारिणोक्त 'स्वम्, एषा अनङ्गप्रभा चोभौ विद्याधरौ प्रातर्निजशापक्षयान्निजलोक प्राप्स्यथ ।' एवमुक्तः प्रबुद्धो राजा यावदनङ्गप्रभां सर्वं वर्णयति तावद्दिवोऽवतीर्णो निजजातिस्मराया। तस्या पिता समर समायात । सागरवर्मणश्च तस्य मदनप्रभसञ्ज्ञकभूतपूर्वविद्याधरत्वमात्मनश्च समरनामकानङ्गप्रभाभूतपूर्वपितृत्वञ्चावेद्य रूपगर्वितया तयाऽन्यपतिपरित्यागात् गुण्यगुणमङ्गीकर्त्तुमत्युत्क तत्तत्पतिपरित्यागेन जातरोपेणात्मना प्रदत्त मानुषीभवनरूप शाप तदवधिञ्चोपवर्णितवान् ।

तद्वर्णितमखिलमाकर्ण्य सञ्जातजातिस्मृती जम्पती विद्याधरत्वमवाप्यान्योन्यदिव्यवपुर्विलोकनविलसद्गाढानुरागौ बभूवतुरिति विद्याधरीरूपामनङ्गप्रभामात्मभूतपूर्वकन्यां विद्याधररूपिणे भूमृते ददौ । सोऽपि च चपितशापया तया ससुख स्वपुर ययौ ।

इत्थ स्वकीयदुर्नयविपाकवशेन दिव्या अपि शापच्युता मनुष्यलोके आयान्ति। समुचितफलभोगानन्तरमुषिताश्च निजगतिं पूर्वार्जितसुकृत्यनुकूल परावर्तन्ते ।'

निजमन्त्रिणो गोमुखमुखादेवभूता कथामाकर्ण्यातिसन्तुष्ट सालङ्कारवतीको नरवाहनदत्तो दिनकृत्य तदानीतन विमर्जिताखिललोको निष्पादितवान् ।

एकदा स कार्तिकिके[5] मासि, पौपेऽहनि[6], रथमारुह्य गोमुखादिभि सह मृगयार्थं गतोऽन्तुगै सह मृगयां चिक्रीड । स्यन्दने स्थित एव च बहून् सिंहवृक विचित्रकादीन् सायकैरवधीत् । नभोमध्यमध्यारोहति च हरितहये परिश्रान्त ससारथिगोमुखस्तृपाक्रान्तः सलिलान्वेषणक्रमान्महावनमन्यदेक विवेश । ददर्श च तत्र प्रफुल्लहिरण्याब्ज, वीचिसम्पकणार्कबिम्बेन भुवनतल

१ दैवयज्ञिशौचि—इति ष्यङ् देवाः यज्ञा यष्टव्या यस्य तस्यापत्यमिती ञन्तात् ष्यङ् । २ उग्र सत्य यस्येति निपातनात् विशेष्यस्य पूर्वनिपातो मुमागमश्चेतोञन्तात्सात्यमुग्रिशब्दात् दैवयज्ञीत्यादिना वैभाषिक ष्यङ् । ३ 'तेन रक्त रागात्' । ४ रागादिवासनया अखण्डवसवनवलम्बनम् ।

५ कृत्तिकानक्षत्रेण युक्ता पौर्णमासी कार्तिकी 'नक्षत्रेण युक्त काल ' इत्यण् , ङीप् तत 'विभाषाफाल्गुनीश्रवणाकार्तिकीचैत्रीभ्य ' इति वैभाषिक ठक् । ६ 'नक्षत्रेण युक्त काल ' ।

इत्यनुपात्मजो जिज्ञासिततत्परिचयः उक्तः, 'देव, हिमालये काञ्चनश्रृङ्गाख्य हैम पुरमस्ति। तत्र कृपणानाथशरणागतकरुणावरुणालय स्फटिकयशोनामा विद्याधरो निवसति। तस्य हेमप्रभादेव्यां जाता गौरीवरोद्भवा शक्तियशोनाम्नी तनया। पितुः प्राणप्रियाऽहमात्मने। पञ्चौ कनीयसी। तदादिष्टा व्रतैः स्तोत्रैश्च पार्वतीमतोषयमिति सन्तुष्टा साऽऽविर्भूय सकला विद्या दत्वा पितुरपेक्षया दशगुण मे बलं नरवाहनदत्त भर्त्तारञ्च शुचारिणो भाविचक्रवर्तिन निर्दिश्य तिरोदधे। तत्प्रसादादुपलब्धविद्याबलाऽहं क्रमात्प्राप्तयौवनिका जवनिका इव मायायाः यूनामक्ष्णां, त्रपायां दत्तदर्शनया देव्योक्ता यत्प्रातस्त्वया निजो भर्ता द्रष्टव्य। तव पिता चेह मासे[3] त्वां समायातो वामुद्वाह विधास्यति। एवमभिधाय तिरोभूतायां तस्यां व्यतियापितत्रियामा रामाह त्वामालोकयितुमिहायातेति साह भवन्तमवलोक्य मसखीजनाद्य प्रजामि। एवमुक्त्वा खमुत्पतिताया शक्तियशसि सद्विवाहोत्सुको नरवाहनदत्तो मास युगोपममनुमपशभ्यन्तर प्रविवेश। सद्य तथाभूतमतिविमनायमानमालोक्य गोमुखस्त-न्मनो रञ्जयितु पुनः कथामेकामेयमवर्णयत्—

आसीत्पुरैका निरीतिकृषीवलखल्यां, वन्यां गोचरभूमिसुरचिततृण्यां, इचिरसत्पुरच्यमाणगार्हपत्या, अ यत्र वाजपेयिकीध्यज्यमानबार्हस्पत्या, दीयमानकाया[11], पठ्यमानश्रायां[12], अभिषिच्यमानशतरुद्रीया[13], जोहूयमानमाहेन्द्र[14] सौम्यो[15] पस्य[16] शुनासीरीया[17], सत्क्रियमाणाष्टाकपाल[18] पुरोडाशा, सन्त्वोध्यमाण

---

१ आत्मनश्च', 'पूरण इति वक्तव्यम्'। २ 'द्वन्द्वमनोज्ञादिभ्यश्चे'ति मनोज्ञादित्वाद् वुञ्। ३ सप्तमीपञ्चम्यौ कारकमध्ये इति कर्तृकर्मशक्त्योमध्ये काले सप्तमी। ४ 'रजःकृष्यासुतिपरिषदो वलच्', 'वले'। ५ खलानां धान्योत्पवनस्थानानां समूहः 'खलगोरथात्'। ६ ७ वनानां तृणानाञ्च समूह, 'पाशादिभ्यो य'। ८ 'गृहपतिना सयुक्ते ञ्य'। ९ 'क्रत्वथादिसूत्रान्ताट्ठक्'। १० 'सास्य देवता'। ११ 'कस्येत्' (को देवताऽस्येति काय हविः)। १२ श्री देवताऽस्येति श्रायो मन्त्र। १३ शत रुद्रा (शतशब्दोऽनन्तवचनः) देवता अस्येत्यर्थे 'शतरुद्राद्घश्चे'ति छ। १४ 'महेन्द्राद्घाणौ च'। १५ 'सोमाट्ट्यण्'। १६ 'वाय्वृतुपित्रुषसो यत्'। १७ शुनो वायु, सीर आदित्यस्त योर्द्वन्द्वे देवता द्वन्द्वे चेत्यामङ्, शुनासीरशब्द इन्द्रवाचको यति 'द्यावापृथिवीशुनासीर०' इत्यादिना छः। १८ 'सस्कृत भक्षा', 'द्विगोर्लुगनपत्ये', 'अष्टनः कपाले हविषि' इत्यात्वम्।

कर्म[1]काथर्वणि[2]कवाडव्या[3], कव्यापसारणसमुच्चयमाननिष्पादितपित्र्या[4] धरिण्या शिरोमणिरूपा, अहरहर्निष्पादिताह्वीना[5] हीनाब्जकर्माणिप्राचीन[6]श्रोत्रिय[7]याजिता गणितभूपा, समुच्छ्रायितबहुयूपा, अर्घ्यै[8] पात्रियै[9] दक्षिणीयैश्च[10] धरणीगीर्वाणै, यज्ञि[11]यैरार्त्विजी[12]नैश्चाधिष्ठिता काञ्चनपुरी नाम नगरी। बभूव च तत्र पराजिताखिलनिजाराति सुमनोनाममहीपति। स्वीयाश्वी यगजतौट्रकैर्पा[13] श्वपकाण्डकाण्डार[14] कावचिक[15]सैनिक[16] यल्लाका तदुगका तारभूभागस्य च यस्य पादावनतौदु[17]म्बरशैष[18]वैदि[19] शादिराज[20]न्यकमौलिकिरीटखचितलौहि[21]-तीकवैदू[22]र्यादिमणिप्रभोशुद्धिगुणितनखद्युतयोऽहर्निश द्योतन्ते स्म। तमेकदाऽऽस्थानगतमवलम्बितवामपार्श्वकौक्षेयकं[23] प्रतीहारो व्यजिज्ञपत्—देव, स्वकीयश्राग्रानुगता दूरेत्या[24], दाक्षिणात्या[25], लोहितवृहतिकाऽऽवृतापरकाया[26] दुष्कु[27]लीनापि परिहितासिताप्रपदीना[28], समुपनद्धसर्वच र्मीणानुपदीना[29] व्यासीना बहिर्द्वार निषादाधिपकन्यकैका मुक्तालतानामधेया पञ्जरस्थित शुकमेकमादाय देव

---

१ 'कमादिभ्यो वुन्'। २ अथर्वाणमधीते इति विग्रहे 'वसन्तादिभ्यष्ठक्'। ३ वाडवा विद्वांसस्तेषां .... 'ब्राह्मणमाणववाडवाद्यत्'। ४ 'वाय्वृतुपित्रुषसो यत्', 'रीङृतः', 'यस्येति च'। ५ 'अह्नः ख क्रतौ'। ६ 'विभाषा वेरदिक्स्त्रियाम्'। ७ 'श्रोत्रियँश्छन्दोऽधीते'। ८ 'दण्डादिभ्यो यत्'। ९ 'पात्राद् घश्च'। १० 'कडङ्करदक्षिणाच्छ च'। ११, १२ 'यज्ञर्त्विग्भ्यां-घखञौ'। १३ 'गोत्रोक्षोष्ट्रेति'समूहे वुञ्। १४ 'पर्श्वा णस्', 'सिति' च। १५ 'काण्डाण्डादीरन्नीरचौ'। १६ 'ठञ्कवचिनश्च'त्यनेन कवचिनां समूह इत्यर्थे ठञ्। १७ 'सेनाया वेति'पाक्षिकण्ठक्। १८ 'तदस्मिन्नस्तीति देशे तन्नाम्नि'। १९ 'तस्य निवासः'। २० 'अदूरभवश्च'। २१. गोत्रोक्षोष्ट्रेति वुञ्। २२ 'कर्कलोहितादीकक्'। २३ 'विदूराञ्ञ्यः'। २४ 'कुलकुक्षिग्रीवाभ्य'-इति ढक्। २५ दूरादेत्यः'। २६ 'दक्षिणापश्चात्पुरसस्त्यक्'। २७ 'बृहत्याच्छादने'। २८ 'दुष्कुलाड्ढगिति' ढगभावे 'कुलात्खः'। २९ 'आप्रपदं प्राप्नोति'। ३० 'सर्वचर्मण कृतः खखञौ'। ३१ 'अनुपदसर्वान्नायानयं'मिति खे, अनुपदं बद्धा अनुपदीना उपानत्।

दिदृक्षते । एतच्छ्रुत्वा भावावबुभुत्सया स्वकीय[1]-पार्श्वतीय[2]-जनकीय[3]-राजकीय[4]-मुखतीय[5]-मुदा समालोकयमानेन राज्ञा 'को दोषः प्रवेश्यताम्' इत्यादिष्टेन प्रतीहारेण नृपास्थानमण्डपं प्रवेशिताऽद्भुतरूपभिक्षुक एकः राजानं प्रणम्यैवमब्रवीत्-

राजन्, वैयासकि[6]रिवाद्वितीयो भागवतशास्त्रग्राह्योऽयं शुकः, परिशीलितकुमुदिक[7]-काशिल[8] कौमुदिक[9] कुमुद्वद्देश[10], सुपरिचितनाडायन[11]नड्वल[12]नडकीय[13] शिखावल[14] बैल्वकेश[15], अपूर्वोऽष्टको[16] वैयाकरण[17], व्युत्पन्नो नैयासिक[18] नैयायिक[19], अवगतसाङ्ग्रहसूत्रिक[20], अद्वितीयोऽस्वलाक्षणिक[21], विशिष्टत्रैविद्य[22], विख्यातैतिहासिक पौराणिक[23] सर्ववेद[24], कृत्स्नकलाविचक्षण, समालोडितौपनिषद[25]शास्त्र, ज्यौतिषशास्त्रपारावारीण[26], [27]अग्राम्यपरिहासपेशल, नागरेयक[28]शिष्टाचारदक्षइतिपथिरतस्यास्य सर्वथा[29] देवोपयोगित्वान्मयाऽत्र[30] देवकीयपादमूलमानीतः । एवमुक्त्वा

---

१–५ 'गहादिभ्यश्च' इति छे 'स्वस्य च', 'मुखपार्श्वतसोर्लोपश्च', 'कुग्जनस्य परस्य च', 'राज्ञः क च'। ६ वेदान् व्यस्यतीति वेदव्यासः (अस-गतिदीप्त्यादानेषु इत्यस्मात्कर्मण्यण्) नामैकदेशग्रहणे नाममात्रस्य ग्रहणम्, भीमो भीमसेनवत् 'तस्यापत्यम्' 'व्यासवरुडनिषादे'त्यादिना इञ्, अकङ्, 'नय्वाभ्यामि'त्यैच्। ७–९ 'वुञ्छण्कठ०'। १० 'कुमुदनडवेतसेभ्यो ड्मतुप्'। ११ नडादिभ्यः फक्'। १२ 'कुमुदनडवेतसे'त्यादि०। १३ 'नडादीनां कुक् च। १४ 'शिखाया वलच्'। १५ नडादित्वाच्छस्तस्य भवार्थकेऽणि 'बिल्वकादिभ्यश्छस्य लुक्' इति लुक्। १६ 'तदस्य परिमाणमि'त्यधिकारे अष्टौ अध्यायाः परिमाणमस्येति 'संख्यायाः संज्ञासंघसूत्राध्ययनेषु' इति कनि अष्टकं पाणिनीयं सूत्रं, तदधीते वेत्ति वा इति, 'तदधीते तद्वेद' इत्यण् तस्य 'सूत्राच्च कोपधात्' इति लुक्। १७ 'तदधीते तद्वेद', 'न य्वाभ्यां पदान्ताभ्याम्०' इत्यैच्। १८ २० 'क्रतूक्थादिसूत्रान्ताट्ठक्'। २१ 'विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्'। २२ 'अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्' इत्यनेन विद्यान्तलक्षणठको निषेधः, 'तदधीते तद्वेदे'त्यण् (अत्र तिस्रो विद्या अधीते इति विग्रहे तद्धितार्थे द्विगुर्न, द्विगोर्लुगनपत्ये इति लुकि त्रिविद्य इत्यापद्येत । अतः त्रिविधा विद्यास्त्रिविद्यास्ता अधीते,वेद वेत्येव विग्रहः)। २३ इतिहासं पुराणं वा अधीते वेद वा इत्यर्थे 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेति' ठक्। २४ सर्ववेदानधीते इति 'सर्वादेः सादेश्च लुग्वक्तव्य'। २५ 'शेषे' इति शैषिकोऽण्। २६ राष्ट्रावारपाराद्घखौ। २७ 'ग्रामाद्यखञौ' २८, 'कत्र्यादिभ्यो ढकञ्'। १९ 'प्रकारवचने थाल्'। ३० देवस्येदमितिविग्रहे गहादित्वाच्छे देवस्य चेति कुक्।

प्रतीहारेण राज्ञः समीपे स्थापित शुक स्पष्टस्वरवर्णं मानववदिवोवाच—राजन्, युक्तमेव यद्भवद्द्विपद्विपुत्कटकुटुम्बिनीनि[1] श्वासवातोद्धूमसन्धिचितो भावत्को[2] माहेय[3] प्रतापानल प्रतिदिश प्रज्वलति तथापि त्वन्निशितघनपरिभवोत्पन्नसपत्ननारीबाष्पाम्बुपूरप्लवै सोऽप्यहमधिक वर्द्धते इत्याश्चर्यम्। एवमुक्त्वा शुक देव, न कोऽपि विपश्चिन्मयाऽनाश्रयेय इति किं प्रमेय केन शास्त्रेण प्रमाणीकृत्य ब्रवीम्येतदाज्ञाप्यताम्। एतदाकर्ण्य तदीयविषयेऽतिसातिशयकविस्मयस्तिमित सामात्य[4] सम्राट् शापात् शुकयोनौ समुत्पन्न त कमप्यपूर्वं जातिस्मरमृषिमाकलयन् 'क, कुत, कस्यो भवान् कथ च शुकयोनावुत्पन्नस्यापि तवेदृशी तात्कालिक[5]व्युत्पत्तिरित्यादि वक्तु समाज्ञपयान्' यदाकर्ण्य शुको बाष्पमुत्सृजन् 'देव, भवाद्यमपीदं कौतुकाकृष्टभवदाज्ञप्तो ब्रवीमि, श्रूयताम्' एवमुक्त्वा स्वसम्बन्धिनीं कथामेव वक्तुमारभत—अस्ति हिमवच्छिकूटपर्वतीय[6]प्रदेशेऽतिविशालो[7] मायूर[8]शौका[9]द्यधिष्ठितो महाँस्तरुरेकः। तस्मिन्निजजायया सह निवसत पश्चार्द्धे[10] वयसि वर्तमानात् शुकादेकोऽहमेव सुत उदपादि। जातमात्र[11]स्यैव च मम माता, [12]मामकीनोत्पत्तिहेतुकप्रसववेदनया, स्वरारोहत्। वर्षीयाँश्चापि मदीय पिता, सहायान्तराभावाद् येन केन प्रकारेण मास स्वर्धन एव मामवहितो नैकटिक[13]कोटरस्थशुकानीतभुक्तशेषशालिनीवारफलादि मामाशयन् मदुपभुक्तशेष सायंप्रातिक[14] चाशनजात स्वयमश्नन्नयवाहयद्दिवसान्।

एकदाऽऽखेटकाय तत्रायाता भयकरी, निःशौव[15]स्तिकविभवा, श्वा[16]गणिक-कौ[17]टिलिकमार्गिक[18]-मायूरिक[19]-मैनिक[20]-सैनिक[21]-भिल्लसेना, मृगयावनभूमिसीमसु,

---

१ 'खलादिभ्य इनिर्वाच्य'। २ 'मयतष्ठकृच्छसौ', 'इसुसुक्तान्तात्क'। ३ 'नद्यादिभ्यो ढक्'। ४ 'अव्ययात्त्यप्', 'अमेहक्वतसित्रेभ्य एव'। ५ 'काश्यादिभ्य ठञ् ञिठौ' इत्यत्र 'आपदादिपूर्वपदात् कालान्तात्'। ६ 'तप्पर्वमरुद्भ्याम्' इति पर्वशब्दात्तपि 'पर्वताच्चे'ति छ। ७ 'वे शालच्छकटचौ'। ८ 'अनुदात्तादेरञ्'। ९ 'प्राणिरजतादिभ्योऽञ्'। १० 'अपरस्यार्द्धे पश्चभावो वक्तव्य'। ११ मात्रशब्दस्यात्रावधारणमर्थ 'मात्रं कार्त्स्न्येऽवधारणे' तस्य च जातस्यैवेत्येवकारेणास्व पदविग्रहे मयूरव्यंसकादित्वात्समास। १२ 'युष्मदस्मदोरन्यतरस्यां खञ् च', 'तवकममकावेकवचने'। १३ 'निकटे वसति'। १४ 'कालाट्ठञ्' १५ 'श्वसस्तुट् च', 'द्वारादीनाञ्च'। १६ 'गणादठ्य'। १७ 'अण् कुटिलिकायाः'। १८-२० 'पक्षिमत्स्यमृगान् हन्ति'। २१ 'सेनाया वा' इति ण्याभावपक्षे ठक्।

सीमसु[1] पुष्कलकान्, चर्मसु[2] द्वीपिन, दन्तेषु[3] कुञ्जरान् केशेषु[4] च चमरीर्मता, विविधप्राणिघाताय निग्रहाय च धावता पुलिन्दवृन्देन साधिवेल[5] कृता-न्तर्मीढि समाखेटक कृत्वा, समुपात्तसीमचर्मदन्तकेशपिशितभारा, क्षणमेकत्र विश्रम्य, तेनै पारण्यकेनैपथा[6] निरयात्। शबरेषु तेषु, एकोवृद्धोऽनासादितामिष क्षुधितस्त तरु मालोक्य तत्तले व्यलम्बतेति निर्मक्षिकी[7] भूते तस्मिन् प्रदेशे, स शबरयष्टिस्त तरु मारुह्य कालपरिघाकाराभ्यां निजभुजाभ्यां तत्रस्थान् मद्वर्गीणान्[8] अन्यांश्चाण्डजान् सत्कोटरेभ्यः समाकृष्य समाकृष्य,नीचैभ्यो भुवि न्यपातयत्। शमनसमामोदर्यसन्निभ समायान्त तमहमालोक्य, जन्मसहभुवा भयेनाविमीलो निजनीडे यावदेव पितुः पक्षान्तरे निलीये तावदेव स क्रुद्धायमस्माकमवाप्य, चिरमपि मामक पीडितग्रीव कृत्वा तरुतले चितावक्षिपत्। अहश्च तत्पक्षतौ[9] निलीनो निरसुना तेन मह पतितः प्राणपरित्यागयोग्येऽपि तस्मिन् व्यतिकरे सद्यो विस्मृतचिरन्त[10] पितृस्नेहरसदवस्थ पितर परित्यज्य निजप्राणपरिरक्षणायान्तर्जीर्ण[11] शीण[12] प्रीर्ण[13] प[14] र्ण-तृण्य[15] प्रावि शम्। शबरश्चासावचतीय तस्मात्तरोभ्रष्टेषु तेषु कतिपयान् पार्णाञ्‌ शूलाकृत्य[16] स्वदष्ट्रातिथीन् विधायावशिष्टांश्च मततिबद्धानादाय पाप पल्लीं निजामाजत्। अहञ्च, नयननिमीलनशिल्पकविपतवहुसाहा[17] य्यकमुदया, निद्रया क्षीयदुःखदोषदोषोपातन समयमतिवाह्य प्रातरम्पिपतिजगच्चक्षुषि भास्वति, तस्थान विहायाप्रिमप्रसरणमेवा न्तिर्म सुपाय स्वरक्षाया मन्वान, पक्षपालीपरिस्द्रवसुधो मुहुर्मुहु प्रस्खलद्भुज्या परवशोऽनतिदूरवर्ति पद्मसरस्तीर प्रापम्। तत्र तदवस्थ मा, कृतपूर्वाह्णितन[19]-कृत्यः, मरीचिनामा मुनिर्दृष्ट्वा समुपजातदयोदय, कृपाकराग्रेण मामुत्थाप्य, मन्मुखनिक्षिप्तकतिपयोदविन्दु[20] पत्रपुटे निधाय, तत्सरोऽपा[21] च्यदिश्य[22] निजाश्रम

1-4 'निमित्तात्कर्मसंयोगे' इति सप्तमी। ५ 'सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्'। ६ 'पथ्यध्यायन्यायेति घुम्'। ७ मक्षिकाणामभावो निर्मक्षिकम् इत्यभावार्थकाव्य-योभावे च्विः। ८ 'अशब्दे यत्खावन्यतरस्याम्'। ९ 'समासोदर०'।१०'पक्षात्ति'। ११ 'चिरपरुत्परारिभ्यस्त्नो वाच्य'। १२-१६ जृ शॄ धात्वोर्निष्ठान्तरूपे। १४ 'नश्च पुराणे प्रात्'। १५ 'तस्य समूह'। १६ 'पाशादिभ्यो य'। १७ 'शूलात्पाके' 'ऊर्यादिच्विडाचश्च', 'कुगतिप्रादय'। १८ 'सहायाद्वा'। १९ 'अग्रादिपश्चाड्डिमच्'। २०. 'मन्साच'। २१ 'विभाषापूर्वाह्णापराह्णाभ्याम्'। २२ 'मन्थौदनयिन्दु०' इति उदकस्योदादेशः। २३ 'द्युप्रागपागुदक्प्रतीचो यत्'। २४ दिगादिभ्यो यत्'।

पन्थको[1] भवन्ननुसरस्तटं[2] किञ्चिद्दूरं सपथेनापथम्[3] सपद्येनं[4] पथा सपद्येनमनुसरता, गुरुनिदेशवंश्येनापीन्द्रियावश्येन वयस्येन[6] सह प्रतस्थे। तथोसो गत्वा चाह किञ्चिद्दूरं, परित्यक्तानुग्रामिकसहवासम्, अनुभूयमानदार्घसंन्नथायसम्[5], घुष्यमाणसौप[11]तैक[12]कार्त[13]पाल्य[14]णत्विकामि[15]छौमिक[16]वाशिष्ठिक[17]पौरोडाशिके[18]च्छान्दसा[19]चिकपौर[20]श्चरणिकार्गयनम् सलक्षयमाणभ्रातृकपित्र्य[21]पैतामहक[22][23] मौति[24]कानैश्वर्यम्[25] उख्य[26] मुख्यभोज्यसम्मान्यमानतैर्थम्[27], प्रशस्यमानसोदर्य[28]सन्द्वावसतीर्थ्यम्[29], अभ्यस्यमानशा[30]रीरकीयविरुद्धभोजनीयम्[31], शिक्ष्यमाणताक्षशिलं[32]

---

१ 'पथ पन्थ च'। २ सरस्तटसमीपे सरस्तटेन सम्बद्धं वा। ३ 'पदमस्मिन् दृश्यम्'। [ सकर्दमेनेतिभावः ] ४ पादौ विध्यन्तीति पथा शर्करारताभिसहितेन ( 'विध्यत्यधनुषा' )। ५ सपदि शीघ्रम् पनमनुसरतेतिच्छेदः। ६ 'वशं गत' इति यत्। ७ 'नौवयोधर्म०'। ८ 'ग्रामारप्रत्यनुपूर्वात्' ( ठञ् )। ९-१० 'तत्र भव', 'देविकाशिंशपा'। ११-१३ 'तस्य व्याख्यान इति च व्याख्यातव्यनाम्न'। १४ 'बह्वचोऽन्तोदात्तट्ठञ्'। १५ 'क्रतुयज्ञेभ्यश्च'। १६ 'अध्यायेष्वेवर्षे'। १७ 'पौरोडाशपुरोडाशात् ष्ठन्' (पुरो दाश्यते इतीहैव निपातनाद्दस्य डेपुरोडाशः)। १८ 'छन्दसो यदणौ'। १९-२० 'द्व्यजद्ब्राह्मणर्क्०' इति ठक्। २१ 'अणृगयनादिभ्य'। २२ 'ऋतष्ठञ्'। २३ 'पितुर्यच्च'। २४ 'विद्यायोनिसम्बन्धेभ्यो वुञ्'। २५ अनीश्वरादागतस्तत्र भवो वेत्यणि, 'नञ शुचीश्वर'ति वृद्धिः। २६ 'शूलोखाद्यत्' उखायां संस्कृतमित्यर्थे यत्, 'शाखादिभ्यो य'—मुखमिव मुख्य। २७ शुण्डिकादिभ्योऽण् ( तीर्थादागतस्तैर्थं )। २८ 'विभाषोदरे', 'सोदराद्यः', २९ समाने तीर्थे वसतीति 'समान तीर्थे वासीति' यति 'तीर्थे ये' इति समानस्य सभाव। ३० 'अधिकृत्य कृते ग्रन्थे' ( कुत्सित शरीर शरीरक तत्सम्बन्धी शारीरको जीवात्मा, तमधिकृत्य प्रस्तुत्य कृतो ग्रन्थः शारीरकीयः, चतुर्लक्षणीसूत्रसन्दर्भः, अणि, वृद्धाच्छ )। ३१ द्वन्द्वजनमादित्वात् 'शिशुक्रन्देति छ'। ३२ तक्षशिला नगरी अभिजनोऽस्येति 'सिन्धुतक्षशिलादिभ्योऽणञौ'।

शिवपम् , अध्याप्यमानपाणिनीय[1] तैत्तिरीय[2] शौनकि[3] कठ[4] कालाप[5] छागलेयि[6] पाराशरि[7] ब्रह्मचारिवर्गम्, लिख्यमानपाणिनीय[8] वाररुच[9] वाररुचकम्[10], परिरक्ष्यमाण माक्षिक[11] क्षौद्रम्[12], निर्माप्यमाणाग्नीध्रम्[13], प्रदीप्यमानाग्नीध्रीयम्[14], उच्चार्यमाणसामि धेन्यम्[15], धार्यमाणच्छन्दस्या[16] थर्वणम्[17], सोष्ट्रूयमानशाकलशैवम्[18], भ्रपिप्रभावा भिव्यक्तनिर्गोव्याग्रैष्मकम्[19], कश्चिच्चिकित्स्यमानशारदिकम्[20], इतरत्र सस्थाप्यमान बीजवापीय हैम[21] न्ताश्वयुजक[22]-ग्रैष्मक[23] प्रावृषिक[24] शारदकम्[25], पङ्क्तसूपसेविष्वादेकदैवो पलभ्यमानप्रावृषेण्य[26] शारद[27] हैमन[28] शैशिर[29] वास[30] त ग्रैष्म[31] फलकम्, [32]गोमयो पलिप्यमानकुटीरो[33] टजाजिरम्, क्षौम[34] कौपवर्यमाणकच्छु[35] रैवो[36] यत्वक्सयम्[37],

---

१ तेन प्रोक्तम्। २ तित्तिरिवरत-तु०'। ३ 'शौनकादिभ्यश्छन्दसि'। ४ कठेन प्रोक्तमधीयते इति विग्रहे कठशब्दस्य वैशम्पायनान्तेवासित्वाण्णिनिस्तस्य कठचरकाल्लुक्। ५ 'कलापिनोऽण्' इत्यणि 'इनण्यनपत्ये' इति प्रकृतिभावे प्राप्ते, नान्तस्य टिलोपे, 'सब्रह्मचारि'—इत्यादिना टिलोप। ६ 'छगलिनो ढिनुक्'। ७ 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयो'। ८ 'उपज्ञाते'। ९ 'कृते ग्रन्थे'। १० 'कुलालादिभ्यो वुञ्'। ११ 'संज्ञायाम्'। १२ 'क्षुद्राभ्रमरवटरपादपादञ्'। १३ 'अग्नीधः शरणे रण भ च'। १४ 'वृद्धाच्छ' (अभिः)। १५ 'समिधामाधाने षेण्यन्'। १६ 'छन्दोगौक्थिकयाज्ञिकेतिञ्य'। १७, अथर्वण प्रोक्तो वेदोऽप्यथर्वा—अभेदोपचारात, तमधीते इति 'वसन्तादिभ्यष्ठक्' दाण्डिनायनहास्तिनायनेत्यादिना निपातनाट्टिलोपाभावे आथर्वणिकस्याय धर्म आम्नायो वा—'आथर्वणिकस्येकलोपश्चेत्यण्'। १८, 'भक्ति'। १९ 'द्वन्द्वाद् वुन् वैरमैथुनिकयो' (वुञ तद्विषयाम्)। २० 'विभाषा रोगातपयो' इति ठञ्। २१ 'ठञ् च'। २२ 'आश्वयुज्या वुञ्'। २३ 'ग्रीष्मवसन्तादन्यतरस्याम्'। २४ 'प्रावृषष्ठप्'। (प्रावृषि जातपुण्यापचादष्ठप्)। २५ 'संज्ञायां शरदो वुञ्' (शारदका मुद्गविशेषा)। २६ 'प्रावृषएण्य'। २७ 'कालात्साधुपुष्प्यत्पच्यमानेषु' (शरदि पच्यमान फलादिकम्) २८ 'सर्वत्राण् च तलोपश्च'। २९ 'कालात्साधु०'। ३०–३१ 'ग्रीष्मवसन्तादन्यतरस्याम्'। ३२ 'गोश्च पुरीषे'। ३३ 'कुटीशमीशुण्डाभ्यो र', उटैः पर्णैः जायते इत्युटजः। ३४ 'उमोर्णयोर्वा'। ३५ 'कच्छ्वा ह्रस्वत्वञ्च'। ३६ 'एण्या ढञ्'। ३७ एकाचो नित्यम्'।

क्वचिद्दुर्[1]यमीयमानव्रीहि[2]मयव्रव्यम्, इतरत्रामै[3]राधीयमाननिरषद्रव्यम्[4], आलोक्यमानकौ[5]लशेयगव्यर्घ[6]निध्यम्, उखासुपाय्यमानधेनूधन्यम्[7], भिक्षुजनसरक्ष्यमाणभैक्षम्[8], सङ्गीयमानानुष्ठितपरिक्रमहैमनफलम्, वैवधिक[9] वादरिक[10]-समानीयमानबवरम्, [11]ऐकान्यिकीमिमुनिकन्याच्छा[12]त्रोभिरभ्यस्यमानशुद्धस्वर-वर्णोच्चारणम्, निन्द्यमाननास्तिक गौरुतल्पिक[13]-चातुर्दशिकम्[14], क्वचित्सस्था-पिताङ्गारीय[15]वच्छादिधे[16]र्युग्मम, इतरत्र प्रस्तुतीक्रियमाणौपानह्य[17]मुग्मम्, आश्रममपश्यम्। यत्र च विकार [18]आश्मपै[19]प्पलैं[20]गलाश[21] त्रापुंपादिप्रकृतिषु, न मानुषादिप्रकृतिषु प्रत्ययलोप [22]आमलकमल्लिका[23]जातीविदारीषु[24], चैत्रफल-परिपाकशुष्कसा व्रीहिमुद्गमाषेषु[25], वचनविशेषनिम्नता हरीतक्यादिषु,[26] कणीय[27]-विकार कास्ये[28] न मनुष्यास्ये, दृश्यमानमासीत्।

आगत्य च तत्रैकत्र रक्ताशोकतरोरध स्थितमहमद्राक्ष प्रारब्धबहुजल्पम[29]

---

१ 'माने वय'। २ 'व्रीहे पुरोडाशे'। ३ अमत्र, पात्रम्। ४ 'द्रोश्च'। ५ 'दृतिकुक्षिकलशि॰' इति ढञ्। ६ 'गोपयसोर्यत्'। ७ ऊधसि भवम् (उगवादिभ्यो यदित्यत्र 'ऊधसोऽनङ् च')। ८ भिक्षादिभ्योऽण। ९ विभाषा विवधात्। १० 'उञ्छति'। ११ 'कर्माध्ययने वृत्तम्' (ठकि ङीप्)। १२ 'शीलम्' 'छत्रादिभ्यो ण, 'ताच्छीलके णोऽपि'। १३ 'गच्छतौ परदारादिभ्य'। १४ अध्यायिन्यदेशकालात्। १५ 'तदर्थं विकृते प्रकृतौ'। १६ 'छदिरुपधिवलेर्ढञ्'। १७ 'ऋषभोपानहोर्ञ्य'। १८ 'तस्य विकार' 'अश्मनो विकारटिलोपो वक्तव्य'। १९ 'अवयवे च प्राण्योषधिवृक्षेभ्य'। २० 'पलाशादिभ्यो वा'। २१ त्रपुजतुनो षुक्। २२ आमलक्या फलमिति विग्रहे 'नित्य वृद्धशरादिभ्य' इति विहितस्य मयट 'फले लुक्' इति लुकि। 'लुक्तद्धितलुकि' इति ङीपो लुक् २३,२४ जातीमल्लिकयोर्विहितस्य पुष्पार्थकस्य विदार्याश्च मूलार्थकस्य 'अनुदात्तादेश्च' त्यञ 'पुष्पमूलेषु बहुलमि'ति लुप्। २५ 'फलपाकशुषामुपसंख्यानम्'। २६ 'हरीतक्यादिभ्यश्च'। २७ 'कमाय हितमिति तस्मै हितमि'ति छ, पक्षे कसस्य औग्रसेनेर्नामधेयत्वात् वृद्धाच्छ'। २८ कसीयपरशव्ययोर्यञो लुक् च। २९ जनानां जल्पो जन्य 'मतजनहलात्करणजल्पकर्षेषु' प्रारब्धो बहुभि सह जन्यो वार्तालापःयेन तथाभूतमपि जन्य युद्धम् अथवा जनी वधूस्तां प्रापयतीतिजन्या (सहाया जन्या) तद्धितम्।

प्यजन्यम्, समुपात्तवाङ्मयप्रागल्भ्यप्रसङ्गविषयप्रासङ्ग्यसहितवाङ्माधुर्यधुर्यम्[1], सम्पाद्यमानाहीन[2]समीनसर्वधुरीणमपि सर्वजनीनसयतजीवनैकधुरीणम्, निषिद्धसमां[3]समीनमपि भुक्तसमांसमीनम्, मौक्ति[4]कार्थनगण्यमपि समुपलब्धाध्यात्मिकतयाग्रगण्यम्, भगवन्तं पुलस्त्यम्। स च कुलपतिर्हस्तामलकीकृताखिलैहलौकिकपारलौकिकसार्वलौकिकाध्यात्मि[6]कतत्त्व, पारिमुख्यतश्च विशेषानुभावितपोगाम्भीर्यप्रभावो भगवान् पुलस्त्यो मामवलोक्य हमन्यैर्मुनिभिः पृष्टो दिष्टदृष्टिरवोचत्- 'पापशुकमेनमवलोक्य दुःखेनाहमहसम्। सम्पादितापराह्णिककृत्यश्चाहमेतत्सम्बद्धां कथां कथयिष्यामि यच्छ्रुत्वा स्मृतस्वपूर्वजातिकृत्योऽयं भविष्यती'त्युक्त्वा स निजाह्निककृत्यकरणायोदतिष्ठत्। परिसमापितसर्वदैनिकविधिश्च मुनिभिरसकृदभ्यर्थितो मत्सम्बद्धां कथां वक्तुमेवमारभत—

आसीत्पुरा शालातुराश्रितिनदीयो निधीयमानशौल्कशालिकशुल्कः, ग्वे। सहारिकजनाद्दीयमानमासि[11]कावरसमक[12]साम्वत्सरका[13]पमित्यकम्[14][15] दीयमानयाचितक[16]-

---

१ समुपात्तवाङ्मयस्य प्रकर्षेण आसङ्क्तु योग्यः प्रसङ्गो विषयप्रसङ्गो यैरेव, भूता अपिवत्सा अपियालभ्या प्रासङ्ग्या इव तैः सहितमपि वाचि माधुर्यं यषां ते वाङ्माधुर्यास्तेषां धुर्यम् धुरीणम् ( तद्वहतिरथयुगप्रासङ्गम्', 'धुरो यड्ढकौ', 'न मक्छुरम्' )। २ सम्पाद्यमानस्य अहीनस्य ( अह्न ख' क्रतौ ) समीनस्य ( समाया ख' ) ख-समामधीष्टो भृतो भूतो भावी वा-तस्य च सर्वधुरीणम्- ( ख सर्वधुरात् ) पृथग्भूतमपि सर्वजनीनम् सर्वजनेभ्यो हित, यतयतजीवन, तस्यैकधुरीणम् 'सर्वजनाट्ठञ् खञ्', 'एकधुराल्लुक् च'। ३ निषिद्धाः मांसेन सहिता मीनायन तथाभूतमपि भुक्ता भोजनादिना परिपालिता समांसमीना प्रतिवर्षं प्रसविनी गौर्येन ( समांसमां विजायते )। ४ मौक्तिकार्थं नगण्या यस्मै सम्। ५ ६ 'अध्यात्मादिभ्यश्चेष्यते', 'लोकसर्वलोकाट्ठञ्' 'अनुशतिकादीनाञ्च'। ७ 'अव्ययीभावाच्च', 'परिमुखादिभ्य एवेष्यते' इति ञ्यः। ८ 'पूर्वाह्णापराह्णार्द्रा मूलप्रदोषावस्कराद्वुन्'। ९ 'ठगायस्थानेभ्यः'। १० 'चरति,' 'स्थागतादीनाञ्च'। ११ 'देयमृणे'। १२ अवरस्यां समायां देयम् इति 'ग्रीष्मावरसमाद्वुञ्'। १३ 'सम्वत्सराग्रहायणीभ्यां ठञ् च'। १४ १५. 'अपमित्ययाचिताभ्यां कक्कनौ'।

साम्वहिंश्रम्[1], सन्निहितपर्याङ्गुलादि[2]बहुसैरिक[3]सन्नाहमपि आश्रय शाकट[4]-सङ्कीर्ण शालम्, क्वचिदवघट्यमानशारदम्, इतरत्रसस्थाप्यमानहैमन्तम्, नियुज्यमानवैत[5]निकाकरिक[6]आगारिकम्[7] आज्ञाप्यमानावसथिक[8] कार्म[9] पारिपा[10]र्श्विक पारिमुखिकम्[11], आदिश्यमानपथिक[12]कार्यिक[13] दाण्डमा[14]थिकपारिप[15]न्थिकनि शस्त्रवैशस्त्र[16]म्, अपरिदश्यमानाक्र[17]न्दिकम्, निर्धार्यमाणापूपिक[18]-लावणिक[19]-किसरिक[20] शला[21]लुकक्रयवि[22]क्रयिकापणिकम्[23] आलप्यमानसाम[24]ाजिक धा[25]र्मिक पारिषद्य[26]-सामवा[27]यिकम्, वितीयमाण[28]पर्पिकमा[29]र्पिष्कम् द्वैगुणिक[30] वार्धुषिक[31] दशैकादशिक[32] धनाढ्याध्युषितैकदेशम्, आत्र[33]-घ–य[34] घ–यतरापरभाग रत्नाकर नाम नगरम् ।

अभवच्च तत्र ज्योतिष्प्रभो नाम परमशिवभक्त सा[35]र्वभौम पार्थिवः । समूर्जितशासनो [36]धर्म्यं न्या[37]य्यौरस[38]प्रजातुल्यं प्रजाव्यवहारो यश्चारत्नाकरमुर्वीमधिचक्रे ।

---

१ 'बहेस्तुरणिट् च' । २ 'अङ्गुलेर्दारुणि' ( पद् ) । ३ हलसीराट्ठक् । ४ अश्वस्याय वहनीय इत्याश्च 'पात्राद्वाञ्', 'पत्राध्वर्युपरिषदश्च' इत्यञ् स चासौ रथस्तया 'शकटादण्' । ५ वेतनादिभ्यो जीवति । ६ आकुर्वन्त्यस्मिन्नित्याकर ( पुंसि सञ्ज्ञायां घ प्रायेणेति घ ) तत 'तत्र नियुक्त' । ७ 'अगारान्ताट्ठन्' । ८ 'आवसथात्ष्ठल्' । ९ 'कार्मस्ताच्छील्ये' । १० परिमुखञ्चेत्यत्र चकाराट्ठक् । ११ पारिमुखिक इत्यत्र तु परिमुखञ्चेत्यनेनैव, तत पारिपार्श्विकश्चासौ पारिमुखिको यत्र । १२ 'पथ ष्कन्' । १३ 'प्रतिकण्ठार्थललाम च' । १४ 'माथोत्तरपद॰' । १५ 'परिपन्थञ्च तिष्ठति' । १६ 'विशसितुरिड्लोपश्चाश्च वक्तव्य' । १७ 'आक्रन्दाट्ठञ् च' । १८ 'तदस्य पण्यम्' । १९ 'लवणाट्ठञ्' । २० 'किसरादिभ्यष्ठन्' । २१ 'शलालुनोऽन्यतरस्याम्' । २२ 'वस्न क्रयविक्रयाट्ठन्' । २३ 'अवक्रय' ( आपणस्य अवक्रय , राजग्राह्य द्रव्यम्, इत्यर्थे ) ठन् । २४ 'रक्षति' । २५ धर्मं चरति' । २६ 'परिषदो ण्य' । २७ 'समवायान् समवैति' । २८ 'पर्पादिभ्यष्ठन्, पर्पेण पङ्गुपीठेन चरन्तीति पर्पिका स्तेभ्यः । २९ संस्कृतम्' ३० 'प्रयच्छति गर्ह्यम्' ठक् । ३१ वृद्धेर्वृधुषिभावो वक्तव्य' । ३२ 'कुसीददशैकादशात् ष्ठन्ष्ठचौ । ३३ अत्राण्ण' (अन्न लब्धा) । ३४ 'धनगण लब्धा [ यत् ] । ३५ सर्वभूमिपृथिवीभ्यामणञौ', तत्र विदित 'इति च । ३६ 'नौवयोधर्म'त्यादिना यत् । ३७ धर्मपथ्यर्थन्यायादनपेते' । ३८ उरसा निर्मिता औरसा 'उरसोऽण् च' ३९ नौवयोधर्म॰ ।

अभूच्चाथ तस्यान्तःपुरप्रधानीभूता ज्योतिष्मती प्रियामेवात्यभिरामा हर्षवती नाम वामा वामाङ्गी ।

न्यामात्यविनिवेशितराज्यभरस्य लौकिकैश्वर्यसुखमनुभवतस्तस्य राज्ञो भूयान् कालो व्यत्यगात् । किन्त्वन्त गतेष्वपि प्रायोऽखिलजीवलोकसुखेषु सुतमुखदर्शनसुखं स नोपलब्धवानिति शरवण[1]स्येव निष्फलपुष्पदर्शनान्तःपुरस्य, निष्फलमनोरथस्य च तस्यानपत्यताजन्यसन्तापोऽधिकाधिकमेधाञ्चक्रे । येन स सुतेतरबहुपारिचारिकव्यक्तिपरिवृतमपि निःसहायम्, चारचारुचक्षुष्मन्तमपि प्रज्ञाचक्षुषमिव, भूतलावलम्बनमपि निरवलम्बनमिव, अविकलसकलेन्द्रि[2]यचक्रमपि भग्नमनोरथचक्रमिवात्मानममन्यत ।

एकदा स हर्षवतीनिवासगृहं गतश्चिन्ताशोकग्र[3]स्तपरिजनपरिवृताम्, समीपवर्तिवृद्धान्तःपुरवर्षीयसीभिराश्वास्यमानाम्, दिवोऽवतीर्णं कमलकिसलयाकलिताश्रयकलानिधिकलामिव वामकरतलावलम्बितमुखकमलाम्, अविरलाश्रुपातो[4]च्छूननयनाम्, परिलक्षितौदासीन्यशयनाम्, रुदतीं तां ददर्श । दृष्ट्वा च तत्कारणं पृच्छंस्तत्प्रत्यासन्नकरङ्कवाहिन्याः निजापुत्रतां तत्सान्तापि[5]कहेतुमबोधि । तदाकर्ण्यातिखिन्नो राजा मुहूर्तमिव स्थित्वा दीर्घमुष्णञ्च निःश्वस्योवाच—देवि यथाविधिसन्तोष्यमाणगार्हप[6]त्य गार्हप[7]त्य एव गार्हपत्य-योगक्षेमौ, सर्वमिह सर्वथा स्वच्छन्दनियतिच्छ[8]न्दस्य न किमपि स्वहस्त्य[9]मिति निःसांशयिकोऽलमतिरुदितेन । पुत्रपरिष्वङ्गलीलालौकिकसुखानुभवस्य नूनमनास्पदमस्माकं हृदयम् । नहि दैवमे[11]न्यथयितुं बलवतापि केनापि शक्यते । अतो याव[12]न्मानवशक्यमखिलमुपपाद्य

१ 'प्रनिरन्तःशरेक्षु०' इति णत्वम् । २ इन्द्र आत्मा, तस्य लिङ्गमिति, 'इन्द्रियमिन्द्रलिङ्ग'मित्यनेन इन्द्रशब्दाद् घच् । ३ ग्रसु अदने इत्यस्योदित्वात् क्त्वायां वेट्कत्वेन 'यस्य विभाषे'त्यनेन निष्ठायां नेट् । ४ 'श्वीदितो निष्ठाया'मि'तीडभावे सम्प्रसारणादि । ५ 'तस्मै प्रभवति सन्तापादिभ्य' । ६-८ 'गृहपतिना संयुक्ते ञ्यः', गार्हपत्येनाग्निना विहितं यद् गृहपतेः कर्म ( पत्यन्तपुरोहितादिभ्यो यक् ) तस्मिन्नेव गृहपतेरिमौ ( दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ) गार्हपत्यौ योगक्षेमौ । ९ छन्दसा, इच्छया, कृतमित्यर्थे 'छन्दसो निर्मिते' इति यत् । १० 'तेन यथाकथाच हस्ताभ्यां णयतौ' ( हस्तेन देयं कार्यं वा ) । ११ अन्यथाकर्तुम् ['तत्करोति तदाचष्टे'] इति णिचि टिलोपः । १२ 'यावदवधारणे' ।

ताम् । भवाधिकतर दीनहीनशरण्यां, नमस्व स्वसम्पत्ति स्वव्ययबहुविघ्न सार्वजनी नताम् । वितरानुदिन भक्तेभ्यो मार्चान्, स्थालीविलीयँशालीन् । अवधारय हरि कौयिकान् । आज्ञापय ममधिकमातिथेयँम्, दापयानुदिन नि स्विकँपथिकीर्भ्य पाथे यम् । एवकृतेनातिसन्तुष्टा देवा नून यथाभिमतफलानि ददति । यद्वो हि राजानो देवमुनिसेवया सुतसम्प्राप्त्या सुतङ्गमसुखिन सञ्जाता । एवप्रायाभिरतिमधुरा भिरधरीकृतसुधाभि शोकापनुदाभिर्वाग्भिर्हर्षवतीमाश्वास्य राजा स्वभवनमाजगाम।

निगते च तस्मिन्, सा लकळ सदादेशानुसारमाचरन्ती, गते च नातिबहु तिथे काले, क्षीणप्रायायां क्षपायामेकस्यां, स्वप्ने स्वमुखे प्रविशन्त सोममद्राक्षीत् । प्रबुद्धा च हर्षातिरेकविकसितनेत्रा येन्नासने नेदीयस्येव शयान राजान प्रबोध्य, निवेदितनिजस्वप्ना किमेतदिति कौतूहलिनी राज्ञोक्ता, 'दवि सुरयोऽय स्वप्न, पूर्णा अस्माक मनोरथा । प्रसन्नस्ते भगवानुमापतिरित्यचिरेणैवाह सुतसुशो भितोत्सङ्गां भवतीं द्रक्ष्यामि ।

अतिक्रान्तेषु कतिपयेष्वहस्सु सामयिकार्तव स्नानान्तर भर्तृधर्मपरायणा गर्भं दधे राज्ञी । असूत च वैजनने मासि निजवपुष्कान्तितिरस्कृतमार कुमा रम् । तस्मिन्नुत्पन्नेऽतिहर्षितप्रजापरिजनस्येतस्ततो धावतोऽतिकोलाहलेन सक्षोभित सागर तदानीमजनि। पार्थिवोऽपि च तनयाननदर्शनातिहर्षितो निजौ दार्येण दीनानपि विसीणसर्वावश्यकवस्तुभि प्राभृतिकान् पार्यातिकाँथ विदध स्माज्याज्याभिसिक्तकुन्दकलिकाकल्पशाल्योदनेन, धूपामोदमनोहरशिखरिणीस्वादु शाकेन चातुर्जातकसस्कृतेक्षुरसेन, स्निग्धस्वच्छदधिद्रवशर्करास्वादिष्ठभिस्सेन, आस्वाद्यकषायलेह्यपेयबहुलेन, शृङ्गारसिन्धुप्लवमानघटिकाभिरिव पृथुवर्तुलकुच

---

१ 'तत्र साधु' इति यत्, शाखादिभ्यो य' इति चा य । २ 'प्रतिजनादिभ्य खञ्' । ३ 'मकाण्ण' । ४ 'स्थालीबिलात्' । ५ 'कथादिभ्यष्ठक्' । ६ 'पथ्य-तिथिवसति०' । ७ 'भक्तैपाजाणा०' । ८ 'पय स्कन्', पिरवान् ङीप् । ९ 'पथ्य तिथि०' । १० 'गमे सुपि वाच्य' इत्यसज्ञायां खच् । ११ 'नुदशोकयो परि मृजापनुदो:' इति क । १२ 'तस्य निमित्त सयोगोत्पातौ' । १३ 'समयस्तद-स्य प्राप्तम्' । १४ 'ऋतोरण्' । १५-१६ 'आहौ प्रभृतादिभ्य' । १७ गुडत्वगे लानागकेसर चातुर्जातकमुच्यते । १८ 'नौ द्व्यचष्ठन्' ( घटाभ्यातरन्तीभि )

एवं समारूढयौवनरससमस्तनेयपारावारीणः[1] स्ववशपरपरीणप्रयामर्दकर्मीणोऽभ्यमित्रीणः[4] सोमप्रभोऽन्येद्युः पित्रानुज्ञातस्तं प्रणम्य सवल, सर्वचर्मीणचार्मान्तर्निगूढनिस्त्रिंशकृपाणः, सर्वाङ्गीणसुलक्षणमध्वनीनाश्वसमारूढः शुभयावहनि पूर्वं पूर्वदिक्सम्मुखीनो दिग्विजयाय प्रतस्थे। तदश्वरत्नसाहाय्येन जित्वा च सर्वदिशां विशाम्पतीन्, तेभ्यो रत्नान्याहरन् विद्विषश्च शिरसा सममेव तद्दर्पं निकृन्तन् कृतकार्यो हिमाद्रिनिकटे, पथि सन्निवेशितसैन्यो, वनाद्वनान्तरे शौवापदं मृगयां कुर्वाणः किन्नरयुग्ममवलोक्य तज्जिघृक्षयैन्द्राश्वाधिरूढस्तद् वधावत्। तच्च किञ्चिद् दूरं गत्वा गिरिगुहामेकां प्रविश्य चक्षुरगोचरतां गतम्। मनोजवेन च तेनाश्वेनातिदूरं नीतः सोमप्रभोऽत्र श्वीनेऽध्वनि सुदूरपरित्यक्तपलः, सन्ध्यासमयेऽणवेकस्य महासरः एकं दृष्ट्वा तत्तीरे तां निशां निनीपुरवततार। अश्वस्य पुरो घासञ्च विकीर्य स्वयं गृहीतफलोदकोऽकस्मादेकतो गीतनिःस्वनमशृणोत्। कौतुकाकृष्टस्तच्छिस्वनानुसारेणच किञ्चिद् दूरं गत्वा शिवलिङ्गाग्रे गायन्तीं हैयङ्गवीनम्रदिमशरीरावयवाम् असाधारणीं दिव्यकन्यकामेकां ददर्श। सा च, केयमद्भुतमौन्दर्या सोदर्या रतेरिव स्यादिति, विस्मयस्तिमितलोचनमनिमेषेण चक्षुषाऽखिलप्रयीकुर्वन्तमुदाराकृतिं कृतातिथ्य[14] सत्कारा समुवाच—'को भवान्' कथञ्च दुर्गमामिमां भूमिमेकाकी[15] प्राप्तवान्? एतच्छ्रुत्योपवर्णितनिजवृत्तान्तेन, सोमप्रभेणात्मवृत्तान्तमनुवर्णयितु मियद्दा चद्दादरेण सा, पञ्चमतटरुहविटपिसमुत्पाटनपटुभिरश्रुपूरैराप्याचिसमुनेत्रा[16] निजोदन्तमेव वक्तुं प्रारभत। अस्ति हिमाद्रिकटके काञ्चनाभाख्यं पुरम्। आस्ते च तत्र पद्मकूटाभिधानो विद्याधरेश्वर, तस्य हेमप्रभाख्यायां पत्न्यां जाता पुत्रादप्यधिकप्रिया मनोरथप्रभाऽहं कन्या। विद्याप्रभावेणाहं सखीभिः सम

---

१ 'अवारपारात्यन्तानुकाम गामी'। २ 'परोवरपरम्पर०'। ३ 'तत्सर्वादेः पथ्यङ्गकर्म०'। ४ 'अभ्यमित्राच्छ च'। ५ 'सर्वचर्मण कृत खखञौ', तथा चर्मणोविकारेऽणि 'चर्मण कोशे' इत्युपसङ्ख्यानाट्टिलोपे चार्म (कोश) ६ 'तत्सर्वादे०। ७ 'अध्वनो यत्खौ'। ८ 'यथामुखसम्मुखस्य दर्शन ख'। ९ 'शुनो दन्तदंष्ट्रा०', 'तस्येदम्, 'पदान्तस्यान्यतरस्याम्', इत्यैच्, ङीप्युग्व ञाव। १० 'अश्वस्यैकाहगम'। ११ 'अर्णसो लोपश्च'। १२ 'पृथ्वादिभ्य इमनिज्वा'। १३ 'आग्नीध्रसाधारणादञ्'। १४ 'अतिथेर्ञ्य'। १५ 'एकादाकिनिच्चासहाये'। १६ सयोगोपधत्वात् 'स्वाङ्गाच्चोपसर्जनादिति' ङीषभावः।

प्रत्यहमाश्रमेषु, कुलशैलेषु, *निविरीसोपशैलप्रदेशेषु, पीलुकुणचणपरिक्यक वनोपवनेषु च क्रीडित्वाऽऽहारसमये पित्रोरन्तिकं भजन्ती शैशवं व्यत्यया वयम्। समुपारूढयौवना चैकदैतत्सरस्तटे विहरन्ती ह्यनाथमागतम्, सवयस्य, सैस्यकमपर्यक्रमेकं मुनिकुमारकम्। तद्रूपशोभया दूरया इवाकृष्टाहं तमभ्युपगतेति समुपविष्टायां मयि तत्र सादृतया दृष्टया कृतमत्स्वागतं परिज्ञातोभयाशयया मत्सख्या कोऽयं महाभाग इति तद्वयस्योऽप्रच्छि। तदाकर्ण्य सोऽब्रवीत्– यन्नातिदवीयसीतो निवसति स्वाश्रमे दीधितिमाद्यामा मुनिः। सत्कर्मठो वर्णी स सरसि स्नातुमत्र कदाचिदायातस्तत्कालागतया श्रिया दृष्टः। तत्र शरीरेणाप्राप्य, प्रशान्त, मनसैव सदैनूकं तर्मनुक्ता साचीकमत मांचीकृतचारुचक्षुपाऽवलोकयन्ती सकामया भावनयेति तावदर्शनरसेनैव कृतकृत्यावाप्तैतत्पुत्रा, त्वद्दर्शनान्मयि समुत्पन्नोऽयं पुत्र, त्वया चैव परिगृह्यताम्' इत्युक्त्वा दीधितिमन्तं तं पुत्रं समर्प्य श्रीरन्तर्दधे। मुनिरविचानायासलब्धं तं पुत्रं हृष्टः सन् स्वीकुर्वन् यथाकालमुपनीयाध्यापितसर्वविद्यीकृतः। स एवायं रश्मिमाद्यामा मया साकमिहायातः श्रियः सुतो मुनिकुमारकः। एवमुक्त्वा तद्वयस्येन पृष्टा मत्सखी मद्विषयकसर्वमपेधि समन्वयनामादिकं तस्मायवोचत्। अन्योन्यानयज्ञानसञ्जातानुरागावावां यावत्तत्र स्थितौ तावदेव द्वितीया सखी गृहादागत्याहारभूमौ मां प्रतीक्षमाणं पितरमवोचत्, येनाहमाशु समागमिष्यामीति मुनिपुत्रमुक्त्वा भीत्या पितुरन्तिकमुपगम्य कृतकिञ्चिदशना रसनाऽनाघ्येयं तत्सम्पर्कसुखस्वादीयोरसमनुभवितुं यावद्विनिर्गता तावदात्रा मदीया सखी समागता स्वैरमैरयत् सखि, मुनिपुत्रस्य तस्य सखा समागतो द्वारि स्थितो मामवदत् यन्मनोरथप्रभाव्दानेन कुसुमशरशराज्ज्वरशरव्यतां गच्छन् मम सखा कामप्यनिर्वचनीयां दारुणां दशां प्राप्तः प्राणेश्वरीं तां विना प्राणान् धारयितुमसमर्थ इति प्रयुक्तपैतृकृत्योमगमनविघ्नोऽहं मनोरथप्रभापार्श्वं प्रेषित इह समायातः। एतदाकर्ण्य तदुदन्ततृंशालुस्ततो निर्ग-

---

* 'नैर्विडज्विरीसचौ'। १ 'तस्य पाकमूले पाल्वादिभ्यः कुणब्जाहचौ', 'तेन वित्तश्चुञ्चुप्चणपौ'। २ 'उपाधिम्यां त्यकन्नासन्नारूढयोः', 'त्यकनश्च निषेधः', 'तत्र भवः'। ३. 'सस्येन परिजातः'। ४ 'तिकन्नेत्यकच्'। ५ 'कर्मणि घटोऽठच्'। ६ 'वर्णाद् ब्रह्मचारिणि'। ७ सन्, उत्तमः अनूको यस्तो श्रुति स्वभावो वा यस्य सम्। ८ 'अनुकाभिकामीकः कमिता'। ९ 'शीतोष्णतृप्रेभ्यस्तदसहने'।

स्याग्रे गामिना पथि[1]केन तेन, दयालुहृद[2]यालुमुनिपुत्रकमित्रेण, समखीहाहमौहाय[3], मया विना चन्द्रोदयेन सहैवोद्गतप्राण तमद्राक्षम्। तद्वियोगार्णवनिमग्ना चाहमात्मानं निन्दन्ती गृहीतशस्त्रकलेवरा, मरणार्थि[4]नी यावद्देवानलं प्राविविक्षं तावदेव तेजःपुञ्जाकृतिरुज्ज्वलो[5] पुमानेको दिवोऽवतीर्य समुपात्ततच्छरीरः खमुत्पपात पश्यमयमान एव चक्षुषामगोचरतां गतः। स तथाभू[6]यगते, भूते च तदनु[7]पदिनि, तत्सुहृदि, केवलायामेव मय्यनलं प्रविविक्षौ, गगनगवी मामेवमभाषत—'मनोरथप्रभे, मनोरथः पूर्णस्ते भविष्यति मुनिकुमारकसमागमात्मक इति साहसेनानेनालम्'। एतदाकर्ण्य तत्समागमनिबद्धा शापाशामन्दायितप्राणा विरतमरणधारणा, धारणाध्यानादिना तद्दिनाद्दिनाथ भगवन्तं शङ्करमर्चन्तीह स्थिता। एतद्वादिनी, तत्सखीविषये पृष्टा, सैवमवादीत्—यस्या सिंहविक्रमनाम्नो विद्याधरेश्वरस्य मकरन्दिका नाम्नी कन्या मदीया सखी मद्दुःखदुःखिनी मद्वार्तां विज्ञातुं स्वसखीं प्रेषितवती आसीत्। तया साकं ममापि स्वसखी प्रेषिता इत्यद्याहमिहैकाकिनी तिष्ठामि। एवमुक्तवती सा, सदैव दिवोऽवतीर्णामुक्तसखीवार्तां तां स्वसखीं सोमप्रभाय दर्शयित्वा कारिततदर्थपर्णशय्याऽश्राय वासस्थानदापयत्।

तत कृतनैशिकविश्रामा व्यतियापितत्रियामाश्च सर्वे ते प्रातरुत्थिता व्योम्नोऽवतीर्णं देवजयनामानं विद्याधरमपश्यन्। पश्चागत कृतानतिरुपविश्य मनोरथप्रभामेवमवादीत्—मनोरथप्रभे, राजा सिंहविक्रमो मन्मुखे नैव त्वां वक्ति यत्वद्यपरिणीतायां स्वस्नेहादाबकीना सखीव मदीया सुता मकरन्दिकाऽपि न विवाहमिच्छतीतीहागत्यैनां बोधय येनेष विवाहोन्मुखी स्यात्। एतदाकर्ण्य स्वसखीं प्रबोधयितुं देवजयेन सह गन्तुकामया तया सह वैद्याधरं लोकमवालुलोकयिषू राजा सोमप्रभोऽपि प्रदत्तवासमश्च तत्रैव स्थापयित्वा सद्यो व्योम्ना सिंहविक्रमालयं प्रापत्। तत्र प्रदर्शितचैतुतिया तिथ्यो[11]-तिथेयी[12] मकरन्दिका सोमप्रभं दृष्ट्वा कोऽयमिति जिज्ञासिता[13] मनोरथप्रभोक्तवद्

१ 'तत्र कुशल पथ' (युन्)। २ 'हृदयाचालुरन्यतरस्याम्'। ३ ओहा कृतौ (आगत्येति भाव)। ४ 'अर्थार्थामभिहिते' 'तदन्ताच्च' 'ऋन्नेभ्यो ङीप्'। ५ 'बाहुरुपूर्वपदाद् बलात्' इतीनिः। ६ 'सुपो भावे'। ७ 'अनुपयन्वेष्टा'। ८ 'सुखादिभ्यश्च' इतीनिः। ९ 'निशाप्रदोषाभ्यां च'। १० 'बहुगणयतुसङ्ख्या', 'तस्य पूरणे डट्' 'बहुपूगगणसङ्घस्य तिथुक्'। ११ अतिथेर्ञ्यः। १२ पथ्यतिथिवसतिस्वपतेर्ढञ्, टिड्ढाणञ्० इति ङीप्। १३ 'तदस्य संजातं तारकादिभ्य इतच्'।

दृष्ट्वा समुद्यद्रागा सोमप्रभेण सोमप्रभेण च सद्योऽपहृतमानसा न साऽस्मान तत्परिवश वशीकर्तुमपारयत् । सोमप्रभश्चापि सुपक्ष्मलाक्षीं[1] केशवां[2] लक्ष्मणां[3], ललाटूलाम्[4], सर्वथानुकूलाम्, लक्ष्मीतमा[5] प्रियतमाङ्गनां[6] तां मनसा प्राप्य, गण्य गुण्यां[7]ग्रगण्यः कश्चित्सुकृति[8]कप्रकृतिक एव तद्वरो भवेदित्यचिन्तयत् ।

अथ सायं सम्पादिताशनीतपिबतेषु सर्वेषु, सुखोपविष्टेषु, प्रवृत्ते च स्वैर समालापे, वाग्मिनी[9], षोडशिनी[10], मनोरथप्रभा मकरन्दिकां तदुद्वाहानिच्छाहेतुम पृच्छत् । सा त्वाह शरीरादप्यधिकया प्रसख्या त्वयाऽस्वीकृते वरे कथमहं ते सुख दुःखस[11]धर्मिणी पाणिपीडनमिच्छेयम् । इत्थमुक्ता मनोरथप्रभा स्वधृत वर, तत्सङ्गम प्रतीक्षाश्लाघक्षणा प्राणिग्रहाभिलाषिण्या मकरन्दिकया सह सोमप्रभ पर्यचीचयत्। तामपि च तद्रूपयौवनलावण्यातिशयाकृष्टामालोक्य सिंहविक्रम क्रमात्तत्प्रोतिमुप क्रम्य मनोरथप्रभा तदुभयविवाहकृतनिश्चयाऽभूत् । ततोऽतितोषोत्कर्षोच्छ्वल त्स्वान्तसिन्धुमनोरथप्रभाश्रमनिवर्तनावसरविन्दुः[12] सोमप्रभो लब्धधृतिस्तां जगाद– अहमधुना क्षिप्रमेव त्वदाश्रमगमनोत्कः[13] । मन्त्र्यधिष्ठित तत्रागत ममानुपदि सैन्य मह्यां[14]तमनवेत्य मामकीनाऽहिताशङ्कि परावर्तेत चेत्सद्रसलयो[15] पुत्रवत्सलयोर्मम[16] पित्रो महादुःखकर उदन्त एव स्यादित्यवगतसैन्यवृत्तान्तो नितान्तनिश्चिन्तस्वान्त, परावृत्य मकरन्दिकां परिणेष्यामीति श्रुत्वा देवजयोत्सङ्गारोपित त यावदेव स्वाश्रममानयति मनोरथप्रभा, तावदेव सोमप्रभस्य प्रियङ्करनामा मन्त्री तत्पदवीं विचिन्वान ससैनिकस्तत्रागात् । मिलिताय च मन्त्रिणेऽतिहृष्ट सोमप्रभो यावदेव

---

१ पक्ष्मशब्दात् 'प्राणिस्थादातो लजन्यतरस्याम्' इति लचि सुपक्ष्मले अक्षिणी यस्यास्ताम् । २ प्रशस्ता केशा सन्ति यस्या इतिविग्रहे 'केशाद्वोऽन्यतरस्याम्' । ३ 'लक्ष्म्या अच्च ( पात् न प्रत्ययः ) । ४ प्रशस्तललाटयुक्ताम् 'वातदन्तबल ललाटानामूङ् च'। ५ 'कृत्यल्युटो बहुल न'। ६ 'अङ्गात्कल्याणे'। ७ 'अन्येभ्योऽपि दृश्यते' इति यप् । ८ 'अत इनि ठनौ' (सुकृत पुण्य वर्तते अस्येति विग्रह ) । ९ 'वाचो ग्मिनि । १० षोडश सम्वत्सरोऽस्या इति विग्रहे ययमि पूरणात्' इतीनि ततो ङीप् । ११ 'समानस्य च्छन्दसीनि' सूत्रे समानस्येति योगविभागात्सहशब्दवचनेन, सहशब्देनास्यपदविग्रहयहुव्रीहिणा वा समानस्य सहशब्दस्य वा समासे 'धर्म शीलवर्णान्ताच्च' इतीबन्तान् ङीप् । १२ 'विन्दुरिच्छु' । १३ 'उत्क उन्मना'। १४ वृत्तञ्च' ( विच्छिन्नस्य प्रतिविधान वृत्ति , सा अस्त्यस्मिन्निति पातम् ) । १५ 'वत्सांसाभ्यां कामबले' । १६ 'अन्येभ्योऽपि दृश्यते ( वलच् ) ।

णकीनैः[1], क्वचिद् द्विती[2]याक्रियमाणैरितरत्र शम्बा[3]क्रियमाणैरन्यत्र च बीजाकृतैः[4] क्षेत्रैरिक्षुशाक[5]टोपयुज्यमानशाकटैः, अनुग्र[6]जमार्गोपरुद्धाजथ्या[7]विथ्ये, आशित[8]ङ्गवीनगोष्ठीने[9] विकटाविक[10]टोरणयुद्धे, अविपटा[11]विपोढाश्यपयःपिपासाऽविक[12]पोतकपेपीयमानावि[13]सोढे, सञ्ज्ञाप्यमानगोगोयु[14]गोढशक[15]ट्युपस्थोपवेशित-कृषीवलव्रा[16]तीनैः, अनुग[17]वीनसरचयमाणाय[18]श्वीन-समांसमीनैः, गोगोष्ठ[19]तिष्ठद्गु-ग[20]वीनैः स्थले, सद्बृह[21]तिकैरप्यसद्बृहतिकैः परिहितपरिहितकौ[22]पीनैरप्यतिशालीनैर्जनैश्च राज[23]न्वद्भारतभूमिमनुकुर्वत कुरुवर्षस्य धारेश्वराभिधेय ग्रामे सिद्धसेनेन्यवसत्कोऽपि बहुभिर्वैनयिकै[24]स्ता[25]पसोपसेदिवद्भिरुपास्यमानो मुनिश्रेष्ठ[26]। एकदा स स्वप्रेष्ठा[27]न् शिष्यान् आहूय 'युष्मासु केनचिदपि किमप्यपूर्वं श्रुतं दृष्टं वा स्याच्चेदुपवर्ण्यताम्' इत्याज्ञापयत्। गुरुणा एवमुक्तानां तेषामेक[28]तमोऽगादीदानु

---

१ धान्यानाम्०। २ ३ ४ 'कृञो द्वितीयतृतीयशम्बबीजात्कृषौ'। ५ 'भवने क्षेत्रे शाकटशाकिनौ', 'शकटादण्'। ६ 'अनुगवंसमया' तद्गच्छतिपथि दूतयो'। ७ 'अजाविभ्यां थ्यन्'। ८ 'अषडक्षाशितङ्ग्वलम्०'। ९ गवां स्थानमिति सुपीतियोगविभागात्तिष्ठतेः कः, अम्बाम्बगोभूमीति सस्य षत्वे दुरवमः एव निष्पन्नाद् गोष्ठशब्दात् 'गोष्ठात्खञ् भूतपूर्वे'। १० 'सम्प्रोदश्च कटच्' इत्यत्र चाद्विकटम्, तथा अविशब्दात् 'सघाते कटच्' तत्र ये उरणाः मेषा (कारनाम्नीतिसूत्रे हलादावेवेतिनियमेन सप्तम्यलुग भाव)। ११ 'विस्तारे पटच्'। १२ 'अवेः कः' (अविरेव अविकः)। १३ 'अवेर्दुग्धे सोढदूसमरीसचीचकथ्या' (सकारपाठ सामर्थ्यात्त षः)। १४ 'द्वित्वे गोयुगच्'। १५ 'सर्वतोऽक्तिन्नर्थादित्यके'। १६ रजः कृष्यासुति०' 'वले', 'व्रातेन जीवति'। १७ 'अनुग्वलं गामी'। १८ 'अयःशीनावष्टब्धे'। १९ 'गोष्ठजादय स्थानादिषु पशुनामभ्य'। २० आङ्पूर्वात्तोः कमकरे च, गो प्रत्यर्पणपर्यन्त कमकर। २१ बृहती आपणम् जलादिनिधान वा तत्सहितै रपि प्रावाररहितै (एकत्र बृहतिकाशब्दे 'न सामिवचने' इति सूत्रज्ञापितो बृहतीशब्दात्स्वार्थिकः कन् 'केऽण्' इति ह्रस्वः)। २२ 'शालीनकौपीने अधृष्टाकार्ययो'। २३ 'राजन्वान् सौराज्ये'। २४ 'विनयादिभ्यष्ठक्'। २५ 'अण् च' इत्यनेन तपसोऽण्। २६ अतिशयेन प्रशस्य इति, 'अतिशायने तमबिष्ठनौ' इत्यनेन प्रशस्यशब्दादिष्ठनि प्रशस्य श्रः 'प्रकृत्यैकाच्'। २७ प्रियशब्दादिष्ठनि, प्रियस्थिरेति प्रादेशः। २८ 'एकाच्च प्राचाम्'।

गा[२]दिकोऽपूर्वस्य स्वश्रुतस्यैव यत्काश्मीरेषु विजयनामधेये कस्मिंश्चिच्छाम्भवे महा क्षेत्रे कृतकुटीर , सर्वथा शत्रुरपि[२] विद्याहृद्यु[३] कश्चित्परिव्रा[४]ण् न्यवसत् । अह सर्व विजयी भवेय, द[५]विष्ठेष्वपि देशेषु मदीया वहिष्ठा[६] कीर्ति प्रसरेदित्यस्युत्कटेच्छ शम्भु प्रणम्य सद्योवादाय बहिर्निरगमत् । पयटनक्रमेण च स विदुष्म[७]त प्रदेशान् गत्वा तत्रस्थान् यावद्विद्वद्[८]देश्यबहुपण्डि[९]तान् पराजयमानोऽटवीमेकामासाद्य परिश्रान्त स्तरोरेकस्याधस्ता[१०]द्विशश्राम । क्षणादेव च तत्र नेदीय[११]सर सरसिजशिशिर समीरणे क्षेत्रे कुतश्चित्समागतेन दण्डकुण्डिकाकरेण, द्रव्येण[१२], धा[१३]र्मिकेणैकेन तस्य काकतालीया[१४] सगति सञ्जाता। कुत आगत , क्व च त्व यासीति परिव्राजा परिपृष्टो धार्मिको जगाद, 'अह विद्यासेवनात्पाटलिपुत्रादिहायातो वादेन यावद्रूकान् जेतु काश्मीरान् गच्छामि' । एतदाकर्ण्य परिव्राडचिन्तयत्–यदिहस्थोऽयमेक पाटलि पुत्रीय स्वकुशा[१५]ग्रीयया बुद्ध्या न मया जितश्चेत्तत्र गत्वा बहूनां जयोऽसम्भव एवेति परिव्राड् धार्मिकमाक्षिप्यैवमाह–'देव मुमुक्षुरयम्, वादव्यसनातुरत्वञ्चेत्येतद् द्व[१६]य सवथाऽन्यो न्यभिन्नम् । वादाभिमानबन्धेन सम्प्रतिमुमुक्षा, वह्निनौष्ण्यशमन मिव, हिमेन च शीतनिवारणमिव, पाषाणतरण्या सिन्धुतरणमिवेति रसा कृते शोभावहा वा[१७]कलहविवादेच्छा परित्यज्य ससारक्लेशभीरुणा मुमुक्षुणा सर्वथा शान्तेन दान्तेन च भवितव्यम् । एवमुक्तो धार्मिकोऽतिसन्तुष्ट उवाच–'सख्य[१८]हि सज्जनानामाभाषणपूर्व , सख्य[१९]ञ्च साप्तपदीनमित्यावयोरिह सङ्गतयोर्नावितद् द्वितय सञ्जातम् । अतो मित्रस्थानेऽपि भवानुपदेशेनानेन मे गुरुस्थानीय[२०] ।

---

१ अनुगादिनष्ठक्' । २ 'कशाभ्या ममयुस्तितुतयस ' । ३ 'अह शुभमो र्युम्' । ४ 'परौ व्रजे ष पदान्ते' । ५ 'स्थूलदूर०' । ६ बहुल शब्दादिष्ठनि 'प्रियस्थिरे'ति बहादेश । ७ 'तदस्यास्त्यस्मिन्निति मतुप्', 'तसौ मत्वर्थे', 'वसो सम्प्रसारणम्' । ८ 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर' । ९ विभाषा सुपो बहुच्पुरस्तात्तु । १० 'पूर्वाधराधराणाम्॰' 'अस्ताति च' । ११ अन्तिकशब्दादीयसुनि 'अन्तिकबाढयोर्नेदसाधौ । १२ 'द्रव्य च भव्ये' । १३ 'धर्म चरति' । १४ 'समासाच्च तद्विषयात्' । १५ 'कुशाग्राच्छ' । १६ 'सख्याया अवयवे तयप्' द्वित्रिभ्या तयस्यायज्वा' । १७ 'पूर्वसदृशसमो नार्थकलह०' । १८ 'सख्युर्य' । १९ साप्तपदीनं सख्यम्' । २० 'स्थानान्ताद्वि भाषा सस्थानेनेति चेत्' ।

कौमुदी-

# कथाकल्लोलिनी

## [ पश्चार्द्धभागः ]



## अथ गणनिर्देशात्मकः षष्ठः कल्लोलः

नमाम्यशेषविघ्नौघगारणं वारणाननम् ।
कारणं चर्द्धिसिद्धीनां दुरितार्णवपारणम् ॥

कामरूपेण स्पर्द्धमानो वत्सयुवराज एव शक्तियशस रत्नप्रभाद्या आद्या देवी स्तास्वपि च मुदयां मदनमञ्जुकाञ्चोपलभ्य सुहृद्युक्तो निजपितृपार्श्ववर्ती समोद

अन्यपत्नीप्राप्तौ– ( भ्वादय )

कौशाम्ब्यां नियमस्यैकदोद्यानं गतो देशान्तरादागताभ्यां द्वाभ्यां भ्रातृभ्यां राजपुत्राभ्यां सङ्गतोऽभवत् । स्वीकृतवत्सयुवराजकृतातिथ्ययोश्च तयोरेकतरस्तम् अगादीत्, 'देव, आसीन्निजारामरामणीयकाधरीकृतनन्दने, क्रीडासरसीभिः सम्वलिते, सुपारधव

1 गणकार्यारम्भे गणेशप्रणत्यात्मकमङ्गलस्यात्यावश्यकतया भ्वाधदादिसर्वगणप्रतिनिधिरूपतत्तद्गणीयधातुनिष्पन्नशब्दग्रथितश्लोकेनादौ गणेशनतिरूपं मङ्गलं नमामीति–इह नमामीत्यत्र 'नम्' इति भ्वादिगणधातु । अशेष इत्यत्र च 'शिष्' इति रुधादिगणधातुः । विघ्न इत्यत्र विपूर्वकादादादिकात् 'हन्' धातो कप्रत्यय । ओघ इत्यत्र च 'उच्' समवाये इति दैवादिकाद् घञि पृषोदरादित्वाच्चकारस्य घकार । गारणमित्यत्र तौदादिकात् 'गॄ' धातोर्णिजन्ताल्ल्युट् । एव वारणमित्यत्र क्रैयादिकाद् 'वॄ'धातोर्णिजन्ताल्ल्युट् । कारणमित्यत्र तानादिक 'कृ' धातोर्णिजन्ताल्ल्युट् । ऋद्धिरित्यत्र सौवादिकाद् 'ऋध्' धातो क्तिन् एव सिद्धिरित्यत्र दैवादिकात् 'सिध्' धातो क्तिन् । दुरितशब्दो दुरुपसृष्टात् आदादिकात् 'इण्' धातो क्तान्तः । अर्णवशब्दश्च जौहोत्यादिकाद् 'ऋ' धातो औणादिके नसि मत्वर्थीय वप्रत्ययान्तः ( धातोरस्यच्छान्दसत्वेऽपि 'अर्णसो लोपश्च' इतीयवविधान सामर्थ्याल्लोकेऽपि तत्प्रयोग ) पारणमित्यत्र तु चौरादिक 'पार' धातोर्ल्युट् प्रत्ययः।
2 स्पर्ध संघर्षे । 3 मुद् हर्षे । 4 भू सत्तायाम् । 5 गद् व्यक्तायां वाचि । 6 वल् सम्वरणे ।

रसात्तदनुरोधाच्च परम् आह्लादमानः[1] तथेत्यभ्युपेत्य सदानीतविजवाम्बरथम् अधिरुह्य[2] ताभ्यां सह वैशालपुरार्थं प्रातिष्ठत[3]। अतित्वा[4] चाचिरमेव तत्पुरं प्राप्य निशाकरो यथा तन्नगरनरनारीभिरभिनन्द्यमानस्तदुत्तमं पुरं प्रविवेश। तत्र च युवराजः पूर्वं प्रतिष्ठितस्य कामस्य रतिप्रीतिपदं शृङ्गारैकमयं मन्दिरं निकषा मन्दिरं रुचिरदेवस्य, तत्पुरस्कृतः प्रीत्या प्रविश्य वरवाजिगजाकीर्णे तदागमनसोत्सवसमूर्जितश्रिणि तद्गृहे सत्कृतोऽप्यद्भुताकृतिं कन्यां जयेन्द्रसेनां रुचिरदेवस्वसारं समवालोकिष्ट[5] इति तद्रूपाकृष्टः स विस्मृत[6]प्रवाससमुद्भूतस्वजनविरहप्रेमप्रविसर्पत्[7]फुल्लनीलाब्जजर्जय[8]मालयेव स्वयंवरे तयापि तत्क्षणमेवाभियतः। - -

अन्येद्युः रुचिरदेवेन पोतकानीतजवितुरगयुगले स्ववशावेगबलेन जिते यावदेव वत्सेशसुतोऽभ्यन्तरं प्रविशति तावदेव तत्पितृरूप्यो दूतस्तत्पार्श्वमाव्रज्य[9] तं प्राणंसीत्[10] अभाषत[11] च—'देव, उद्यानतोऽनिवेद्यैतावद्दूरमजितम्[12] अजितं त्वामाकर्णयतो विगतखेदैषस्य वत्सराजस्य हृदयमनुक्षणं त्वदनवलोकनसमुपजातासन्तोष जोष जोषमोप[13]तीति त्वामादस्मात्यक्तेहत्यन्यासक्तिना सत्वरमितरेण भवता भवनीयम्। एवं त्वदनवलोकनेन पितुरवस्थां प्रियोपलब्धिं[14] ध्यायन्तं[15] दोलायमानमानसं नरवाहनदत्तं दूरादेव नमन्तिहर्षकं जयघोषमुच्चरन्[16], तस्य भावि विद्याधराधीशत्वं विद्विषां विनाशकारित्वं च पणायन्[17] सार्थवाह एकोऽवदत्[18], 'अचिरादेवाद्भुतगुणं त्वालौकिककान्त्या दिवम् आक्रमन्त[19] भवन्तं खेचरा द्रक्ष्यन्ति[20]'। एवं स्तूयमानेन युवराजेन तेन सत्कृतो निजवृत्तान्तं वर्णयितुमनुयुक्तो महावणिक् एवं स्ववृत्तं वक्तुम् आरभत[21]—

अस्ति भूलोकमौलिमालिकामतल्लिका चम्पा नाम नगरी। अनुशासित च तत्र भवदत्तो नाम भुवो भर्ता। यत्र स्वराष्ट्रपरराष्ट्रनीतिं सम्यङ् निर्वहति[22]। अकृशा

---

१ ह्लादी सुखे च। २ रुह बीजजन्मनि प्रादुर्भावे च। ३ ष्ठा गतिनिवृत्तौ। ४ अत सातत्यगमने। ५ लोकृ दर्शने। ६ स्मृ चिन्तायाम्। ७ फुल्ल विकसने। ८ जि जये। ९ व्रज गतौ। १० णम प्रह्वत्वे शब्दे च ( यमरमनमातां सक् च )। ११ भाष व्यक्तायां वाचि। १२ अज गतिक्षेपणयोः। १३ तप दाहे। १४ डुलभष् प्राप्तौ। १५ ध्यै चिन्तायाम्। १६ चर गतिभक्षणयोः। १७ पण व्यवहारे स्तुतौ च। १८ वद व्यक्तायां वाचि। १९ क्रमु पादविक्षेपे। २० दृशिर् प्रेक्षणे। २१ रभ राभस्ये। २२ वह प्रापणे।

नुभावोऽपि च यो निजप्रतापातनुतनूनपाता विद्वेषी-धनौघदहा दहति[1] दारुण दुहृद । न यस्य राष्ट्रे धमति[2] दरिद्रातिदरिद्रेष्वपि बुभुक्षा सन्धुक्षित[3]बुभुक्षित जाठराग्निम् । न यो नमति[4] समुद्दामदस्तिहरीनरीन्[5] । न च गुरुजनसेवाया युच्छति[6] । न दायादान् च्युच्छति[7] । किं बहुना, य सत्यशीलसादगुण्यपुण्ययशोवा सासि चीर्वति[8] । असौज य ष्ठीवति[9] । स्वकीयायत्ययानत्ययाशालतारसैः पीवति[10] । विपश्चिविजिगीषानि श्वासैर्जीवति[11] । स्वकीयाप्रतिमप्रतिभया[12] नवनव विषय जातम् अभ्यूहते[13] । विबुधसदःकृतो विविधशास्त्राण्यवगाहते[14] । वृन्दारकवृन्दवन्दि नोऽवति[15], सन्मार्गप्रतिबन्धिनो मवति[16] । यस्यानुशासने वर्णाश्रमधर्ममनुसृत्य यथावस्थमाश्रमेषु लक्षाधीशोऽपि गृहीतब्रह्मचारिमतो गुरुजनेभ्य साङ्गवेदोपवेदान् शिक्षते[17] भिक्षते[18] च, विविधविज्ञानशाला[19] निरीक्षते[20] समीक्षते च । कृषीवलश्च यत्र निरीतिमीति निवसति[21], विघसति[22] च । आर्तीनश्च यथावृत्तिसमुपलब्धिसमु पजातमीति विहसति[23], विलसति[24] च । एव वर्तमाने सुखमयसाम्राज्ये तत्राभव देको-तिघनाढ्यः कुसुमसाराख्योमहावणिक् । प्रत्यह स देवान् अवन्दत[25] । वणि ज्याव्यासक्तोऽपि न सुपथोऽस्पन्दत[26] । दीनेभ्योऽनुदिन यत्किञ्चिद्वित्रणन् एव अमोदिष्ट[27] । ज्ञातीन् सुखयित्वैव मोऽह्लादिष्ट[28] । प्रतिपर्व स्नानार्थ स गङ्गा व्यसेध त्[29] । दारिद्र्यार्दितार्दित स बहूनां प्राणान् अगोपायीत्[30] । व्यवहृतौ धूर्तव ञ्चितोऽपि न स्वय तान् अधूपायीत्[32] ।

---

१ दह भस्मीकरणे २ ध्मा शब्दाग्निसयोगयो । ३ धुक्ष सन्दीपने । ४ णम प्रह्वत्व ५ उद्दामा दस्तिरहकृतिरेव दस्तिश्चर्मपात्र तां हरन्तीति उद्दामदस्तिह तिहरय, पशवः तान् (हरतेर्दृतिनाथयो पशौ इति इन्) ६ युच्छ प्रमादे । ७ च्युच्छी विवासे (प्रायेणाय विपूर्वकः) । ८ चीवृ वसने । ९ ष्ठिवु निरसने । स्वकीयो य आयत्ययः उत्तरकालीन शुभावहो विधिस्तस्य अनत्ययस्य अविनाशस्य या आशालता तद्रसे । १० पीव स्थौल्ये । ११ जीव प्राणधारणे १२ (प्रकारे गुणवचनस्य) । १३ ऊह वितर्के । १४ गाहू विलोडने । १५ अव रक्षणे । १६ मव बन्धने । १७ शिक्ष विद्योपादाने । १८ भिक्ष भिक्षायामलाभे लाभे च १९, २० ईक्ष दर्शनाङ्कनयो । २१ वस निवासे । २२ घस्लृ अदने । २३ हस हसने । २४ लस श्लेषणक्रीडनयो । २५. वदि अभिवादनस्तुत्यो । २६ स्पदि किञ्चिच्चलने । २७ श्रण दाने । २८ मुद हर्षे । २९ ह्लादी सुखे च । ३० षिध गत्याम् (सेधतेर्गतौ) । ३१ गुपू रक्षणे । ३२ धूप सन्तापे (गुपूधूप०) ।

अपि स्वविस्तृतेन चक्षुषा ईक्षमाणं मां कृताचना सस्नेहं मुहुर्मुहुः परिष्वज्य निरीक्ष्य किञ्चिद्विमृशन्ती च शनैश्शनैस्तस्मादगमत्[1] इति दृक्पथादृतायां तस्यां तमोऽन्धा दिशोऽवलोकमानोऽनिर्वचनीयावस्थोऽहं समजनिषि । तदवस्थे तत्र वर्तमाने मयि क्षणानन्तरं तेजसाऽर्कप्रभामिभा बालब्रह्मचारिणी मतङ्गमुनिकन्या यमुनानामधेया तप क्षामशरीरा धृतिरिव विग्रहिणी, कल्याणदर्शना, विपञ्चीव सुमधुरस्वराऽवलम्बितधृतिरिव मां रहसि रहस्यं सर्वं समपञ्चमपञ्चीत्[2] यद्द्वीपान्तरीयशिखिराख्यो महावणिक् कन्यायामस्यां जातरूपाभिजातरूपवत्यां प्रसूतायां जिनरक्षितसज्ञेन सुहृदा ज्ञानिनोक्तः 'अन्यमातृका कन्यैषाऽनवद्या स्वयं कस्मैचिददत्ता' । अतो देयां तां तन्मातामहहस्तेन स तुभ्यं दापयितुमचीकमत[3] । अत एव च तत्पित्रा सा सिंहलद्वीपं प्रेषिता । पयोधौ पोते भग्नेऽपि तत्र निपतिता सामायुशेषतया न कोऽपि जलजन्तुरस्वादत्[4] । महोर्मिमाली चापगतचेतनां तां वेलातटे न्यक्षेप्सीत्[5] । तत्र स्नातुं गतो मदीयः पिता भगवान् मतङ्गमुनिर्मृतकल्पामपि तदानीमवाप्तचेतनामवलोक्य प्राणिमात्रदयालुतया समाश्वास्य स्वकीयाश्रममानैषीत्, अवोचच्च माम्, यमुने, समुचितसम्वर्द्धनोपायैः तायस्व[6] इमामनाथामिति' वेलातटे समुपलब्धाया अस्या 'वेला' इति नाम कृत्वा सम्प्रमर्पितवान्[7] । तदाप्रभृत्यपत्यवात्सल्यमय मदीयं चित्तं नवयौवनशालिनीमिमामवलोकमवलोक तपति[8] । इदमुपयुक्तपतिसंयोगाय च कालातिपातं न सहते[9] । इयं हीह निवसन्ती देवार्चनपुष्पावचयादिना पितरं श्रयति[9] । स्वयमपि वात्सल्यसहजा सञ्जनितसत्कारैः सन्ध्ययोर्द्वयोर्देवान् यजति[10] । भोजनपाचनादिना चास्मानतिथींश्च भजति[11] । किं बहुना, विविधस्वादिष्टभोज्यपेयचीनादिपरिधेयार्हाऽपि वन्यफलमूलादिभिरस्माभिः सममात्मानं भरते[12] वल्कलवसनैश्च परिव्ययते[13] । सर्वथा पूतचरिता किंस्विद् त्वदीया प्राग्जन्मभार्येतीदृशगत त्वां प्रणिधानेनाहम् बुधो[14]धियम् तवान्तिकम् उपासर्पम्[15] चेत्यस्मदर्पितामिमां परिणयस्व[16], अत पर

1 गम्लृ गतौ । 2 पचि व्यक्तीकरणे । 3 कमु कान्तौ । 4 स्वाद भक्षणे । 5 क्षिप् प्रेरणे; क्षिपँ प्रेरणे । 6 तायृ सन्तानपालनयोः । 7 तप सन्तापे । 8 षह मर्षणे । 9 श्रिञ् सेवायाम् । 10 यज देवपूजा० । 11 भज सेवायाम् । 12 भृञ् भरणे । 13 व्येञ् संवरणे । 14 बुध अवगमने । 15 सृप्लृ गतौ । 16 णीञ् प्रापणे ।

दयस्व चेति गिराऽनयाऽनभ्रवृष्टयेव शुष्यच्छस्यचेतसमभिवृष्य यमुना मां स्वपि तुर्मतङ्गस्याश्रमम् अनैषीत्। स च मतङ्गो मुनी रूपिणीं मनोराज्यसम्पत्तिमिव वेलां मह्यम् अदर्शत्।

तया च वेलया ससुखं तत्र निवसन् सरस्येकस्मिन्नम्भोऽवगाहनकेलिं कुर्वं न्नपश्यन्नेकदाऽहं शुन्धन्तं मुनिं मतङ्गमम्भसा अभ्यषिञ्चम्। एतेन स मुनिम त्यन्तम् अचण्डिष्ट, अशपत्तं चावाभ्यां वियोक्तुमिति तदवहेलाभग्ननिजवेलासिन्धु वेला वेला, यमां याचमाना मुनिपादयो प्रण्यपतत्। तेन च शान्तो मुनि करेणुवेगेनाश्वयुगजेतृभाविविद्याधरेश्वरनरवाहनदत्तदर्शनावधिं तच्छाप निर्दिश्य सम्पादितस्नानादिक्रियो हरेर्दर्शनार्थं व्योममार्गेण श्वेतद्वीपम् अशिश्रियत्।

एव विसंदयितोऽपि सम्यजीवनेनातिखिन्नो वनितावियोगभयनुन्नोऽहं स्वदेश परावर्तितुमुत्सुकोऽभवम्। अतोऽम्बुधितटमवाप्य तदानीं समुपलब्धनिजसुहृ द्वणिक्प्रवहण भार्यामारोप्य यावदेवाहमारुरुक्षामि तावदेव समीरणस्तत्पोत दूरमहरदिति हृतभार्यो विह्वल्य भूमावहमपतम्। तदैव दैवयोगेन तत्रागत कश्चित्तापस तदवस्थ मामवलोक्य निजकामण्डलवचारिप्रक्षेपेण सचेतन कृत्वा ऽऽश्वासनपूर्वकं निजाश्रममानीतवान्। तत्र च यथावृत्त पृष्ट्वा श्रुतशापव्यतिकर स्वप्रणिधानेन सावधि शापमवधार्य मदीय चरित्र घम् अमोचत्। तदनन्तर तां प्रियां पुनरविन्दन् भग्नवहनोत्तीर्णं सखाय वणिग्वरमवाप्य लङ्घमानोऽपि दिवसानुल्लङ्घयन् देशान् दुर्गमान्, क्रमाद् वैशाखपुरमवाप्य सरसेश्वरसद्मसमु त्कामणेभवत इहागमनमहमश्रौषम्[11]। हरित या च विजिताश्वगोयुग मथ तमा लोक्य विगतशापभारोऽहमधुना साधु वणिग्भिरानीतां सम्मुखागतां तां प्रियां वेलामहमिह अदर्शम्[12]। असौ यमुनाप्रसादलब्धहस्तया तया त्वत्प्रसादेन सयो जित समुत्तीर्णशापमहार्णवोऽहमिह प्रणन्तु त्वामायात इति सदयितो निवृत्तो- ऽहमस्मिन् समये स्वदेशमये।

इत्थं पक्षितनिजप्रश्ने ऽक्षिते[14] च प्रणम्य चन्द्रसारेऽवलोकितवत्सराजाम

१ देङ् रक्षणे। २ दय दानगतिरक्षणहिंसादानेषु। ३ शुन्ध शौचे। ४ चडि कोपे। ५ शप आक्रोशे। ६ पाऌ पतने (पतः पुम्) तत नेर्गदनदेति णत्वम्। ७ टुओश्वि गतिवृद्ध्योः। ८ ह्वल चलने। ९ मव बन्धने। १० छवि भोजननिवृत्तौ। ११ श्रु श्रवणे। १२ दृशिर् प्रेक्षणे। १३ अय गतौ। १४ अचि गतौ।

इव पङ्कान्तर्विचेष्टितुं नापारयदिति तथाऽवसन्नं समवलोक्य सा वशा शिवा तत्क्षणमेव तं परित्यज्य वारणान्तरमाश्रित्य क्वापि इयाय[1] । किञ्चित्कालानन्तरञ्च पूर्वविश्लिष्टा तस्य निजा करेणुका निजपतिमन्विष्यन्ती दिष्ट्या तमेव प्रदेशं प्रायासीत्[2] इति भद्रजाति सा पङ्के निमग्नं निजपतिं निरीक्ष्यातिदुःखिनी तमनुसर्तुं सरसः प्रविष्टा स्वयमप्याकण्ठं पङ्के निमग्ना सञ्जाता । तत्कालञ्च तेनैव मार्गेण सशिष्यो ब्रह्मसिद्धिर्निरगात्[3] । वशानागौ च तथा पङ्कान्तर्निमग्नावुद्वीक्ष्यातिकरुणापरवशः प्रभूतबलैः शिष्यैस्तौ पङ्कान्तरादुद्धारयामास । एवं मृत्योर्वियोगाच्चोत्तीर्णौ तौ तस्मिन्मुनावपयाते यथाकामं विजह्रतुः । इत्थमुत्तमजन्मानस्तिर्यञ्चोऽपि न निजं प्रभुं प्रियं चोज्झन्त्यपि त्वापत्तेरुत्तारयन्ति । हीनजात्युद्भवाश्चञ्चलास्मामकश्चैव नैसर्गिकस्नेहपूर्णा न भवन्ति ।

नरवाहनदत्तोक्तमेतदाकर्ण्य दिव्यकन्यका सा सर्वं तदाशयम् अवेत्[4] अब्रवीच्[5] च, यद्भवदुक्तौ न कोऽपि यद्यपि संशेते[6], तवाभिप्रायञ्चाहमभ्युपायम्[7], तथापि, आर्यपुत्र, अहमपि कथामेकामुपवर्णयामि श्रुत्वा तां सर्वं मत्तः स्वहृत्तद्भावमुपगत्य मद्विषयिणीं शङ्कां सर्वां त्वं परिमृड्ढि[8]—

*'कान्यकुब्जे शूरदत्ताभिधान आसीदेको द्विजः । ब्राह्मणाः प्रायः दरिद्रति[9]* किन्तु स तत्रत्यबाहुशक्तिनामकमहीपतेरमात्य इति ग्रामशतम् ईशाञ्चक्रे[10] । पतिदेवता तस्य वसुमतीनामभार्या वामदत्ताख्यं भव्यं पुत्रं प्रासविष्ट[11] । सत्पश्चमुद्राकरणादिसंस्कारश्च सोऽचिरादेव सर्वा विद्या अध्यगीष्ट[12] । यौवनमापन्नश्च शशिप्रभां भार्यां परिणीय कालेन सभार्ये परेते पितरि तयैव भार्यया सह गार्हस्थ्ये प्रावर्तत । किन्तु अविदितं[13] तस्य किञ्चित्कालानन्तरं सा भार्या दैवात्स्वेच्छाचारिणी समवाप्तशाकिनीसिद्धिश्च संवृत्ता ।

एकदा राजसेवार्थं राजकटकमुपाश्रिते वामदत्ते निजगृहादुपेत्य सपितृव्यः

---

१ इण् गतौ । २ या प्रापणे । ३ इण् गतौ । ४ विद ज्ञाने । ५. ब्रूञ् व्यक्तायां वाचि । ६ शीङ् स्वप्ने । ७ इण् गतावित्यस्य लङि उत्तमैकवचनम् । ८ मृजू शुद्धौ ( लोटो हि: मक्षमरमसमसृज—इति पदे ढधौ ष्टुत्वम् ) । ९ दरिद्रा दुर्गतौ ( आभ्यस्तयोरातः ) । १० ईश ऐश्वर्ये । ११ षूङ् प्राणिगर्भविमोचने । १२ इङ् अध्ययने ( विभाषा लुङ्लृङोः, गाङ् कुटादिभ्योऽञ्णिन्ङित्, घुमास्थागापाजहातिसां हलि ) । १३ विद ज्ञाने ( विदः शतुर्वा )

अवग[1] यत्तवैषा भार्या त्वदीय महिषपाल सम्पृक्ते[2] अतोऽस्मत्कुलमिदानीं धन सङ्करतां प्राप्त सद्विनष्टम्। एतद्वाकर्ण्य वामदत्तो निजपितृव्य तत्रैव निजस्थाने स्थापयित्वोद्यायुधो निजसदनमुपेत्य यावन्निभृत पुष्पवाटिकाम् आस्ते तावत्तणा देयोपपतिसमुत्सुका विविधाहारहस्ता तज्जाया तत्रैव उपेद्। भुक्तवता च तेन साक निंस्यमाना[3] अस्वाप्सीत्। तदवलोक्य वामदत्तो निजायुधमुद्यम्य 'आः, पापौ अत्र इत क द्रर्त[4]' एवमुक्त्वा तौ हन्तुम् अवेट्[5]। एतेनानार्या तज्जार्या सहसा विनिद्रोत्थाय[6] 'कक्षे वह्निरिव त्व मां स्वकक्ष कँक्षे इति कथमिह अर्कक्षे त्व जाल्म! इत्यमुक्त्वा तन्मुखे धूलिं प्राक्षिपत्। तेन च स मानुषोऽपि मङ्क्षु तदानीमेव महिष समपद्यत। स्मृतिरत्वस्य तद्भावेऽपि न व्यलुपदिति तथाभूत तमिमस न्निमेषु सैरिभेषु निक्षिप्य दुष्टा सा महिषपालकेन तेन निघृण ताडयन्ती एकस्य महिषार्थिनो हस्ते तिर्यक्त्वविवशीकृत त व्यक्रैषीत्। तत्क्रेता च तत्पीठसमारोपितभार महिषत्वमापन्न वामदेव गगातीरे वसमान कञ्चिद् ग्राममानैषीत्। तत्र शङ्कुना चद स पूर्ववृत्त सर्वम् अभ्यगात् येन च 'दुवृत्ता भार्या कक्षान्तरप्रविष्टा पुंस्नादिनी सर्पिणीव न कस्यापि कल्याणाय' इति चिन्तयन्त सुदु जितमुद्वाप्य भारक्लेशास्थिपञ्जरशेषशरीर स काचिद् योगिनी[11] अभ्याचष्ट स्वालौकिकज्ञानाव गताखिलवृत्तान्ता च मन्त्रतोयेनाशु तस्य महिषत्वम् अद्यौष्ट[12]। प्राप्तमानुषरूपञ्च त स्वगृह नीत्वा तस्मै कान्तिमतीनाम्नीं निजदुहितरम् अरासीत्। एव पुनर प्राप्तमानुषरूप समुपलब्धनवीनभार्यश्च स वामदत्तः ससुख कतिपयान्यहानि तत्रैव तस्थौ।

व्यतिये[13]ष्सु चाहस्सु निजगृहगमनोद्यत वामदेव दृष्ट्वा सा योगिनीकृष्णरक्त गौरान् त्रिवर्णानपि सर्षपान् आदाय सर्वान् अयावीत्[14]। अभिमन्त्रितांश्च तान् कृत्वा

१ वसेर्लङ्। २ पृची सम्पचने। ३ णिसि चुम्बने। ४ क गच्छतः। ५ वश कान्तौ लङः प्रथमपुरुषैकवचनम्। ६ कक्षे, तृणेऽग्निरिव त्व स्वकक्षेत्व कीयप्रकोष्ठे, कक्षे शारिस, इतीह अकक्षे प्रकोष्ठाद् बहि (तृणाभावे वा) त्व माम् हे जाल्म, कथम् अकक्षे कुत्सित शारिस (नमो मलोपसिसडि चेपे)। ७, ८ कश गतिशासनयो। ९ इत्यवद्विक इति वक्तव्यम्। १० तत्वकथने 'नादिन्याक्रोशे पुत्रस्य' इति निषेधाभावे पुत्रशब्दे तकारस्य द्वित्वम्। ११ चक्षि ङौऽप्रदर्शनार्थत्वाद् अदशादित्यथ। १२ दुह् अपनयने। १३ एतेः शतरि सुप्। १४ यु मिश्रणामिश्रणयो।

समशिषत् यत् यस्याः कारणेन त्वमद्यावध्येवं कष्टमध्यकष्ठाः[2]। तामद्य दुर्भगां सर्षपैरभिराहत्य तत्र वडवां विधेहि। महिषपालश्च उज्जासय[3] जहि[4]। कृत्वा चैव निश्चिन्तः स्वपिहि[5]।

इत्थं समुपेताभिमन्त्रितसर्षपभार्यो वामदत्तस्ततो निजगृहमुपेत्य योगिनीकथितप्रकारेण सर्षपैराद्यभार्यां वडवां विधाय महिषपालमवधीत्[6]। मन्दुरायां बद्ध्वा तां वडवां प्रत्यहं स्ववैरविशुद्धये लगुडेन सत्कारवत्ताडयित्वैव आर्दत्[7] बद्धप्रतिज्ञः।

एवं कान्तिमत्या सह ससुखं समयं यापयतस्तस्य वामदत्तस्य गृहे एकदा कश्चिदतिथिः आयातः। तस्मिंश्चातिथ्याय तु प्रवृत्ते स्मृतादत्तकुभार्याविडवाहतिर्वामदत्तोऽशक्त्यैव दण्डपाणिर्निर्ययौ। प्रदत्तवडवारूपतत्कुभार्यानियतलगुडाहतिश्च गेहमागत्य समुपेतनिर्वृतिरध्मासीत्[8]। एतेन क्षणमतिथिर्निजभोजनम् प्रवर्जिष्ट[9] ससम्भ्रमं पप्रच्छ च तं तद्बहिर्निर्गमनकारणम्। सोऽपि च स्पष्टम् आचष्ट प्राघुणिकाय तस्मायामूलं सर्वं वृत्तान्तम्। तथाकर्ण्य प्राघुणिकस्तं तथाकष्टं समवर्जिष्ट[10] अशात्[11] च यत् एतेन दुर्ग्रहेण अलम्; या तव पत्नी तव पत्नी भवतु तामेव विनतिभिः नुहि[12] आराध्य च तामेवाचासमृद्धिः एधि[13]। अतिथिनैवमुक्तो वामदत्तो विहितसत्कृतिं तं विसृज्याकस्मात् गृहोपेतां तां योगिनीमनुग्रहार्थी समभ्यर्च्य चिरम् अस्तावीत्[14]। तेनातिप्रसन्ना सा योगेश्वरी सभार्याय तस्मै यथाविधि दीक्षापूर्वं कालसङ्कर्षिणीं विद्यामुपादिक्षदिति श्रीपर्वतं गतः स तां साधयित्वा तत समुपलब्धखड्गोत्तमः कान्तिमतीयुतो विद्याधरोत्तमो बभूव। ततश्चात्मसिद्धिप्रभावेण मलयभूभृतो रजतकूटाख्ये शृङ्गे कृतपुरवरः कालेन कान्तिमत्यां ललितलो

१ शासु अनुशिष्टौ (सर्तिशास्त्यर्तिभ्यश्च) इत्यङ् (शास इदङ् हलोः) इत्युपधेत्वम् ततः (शासिवसिघसीनाञ्च) इति सस्य मूर्धन्यः। २ कश गतिशासनयोः, कष्टं प्राप्नोदिति भावः। ३ आरयतीत्यस्य (दारजारौ कर्तरि णिलुक् च) इति कर्तरि घञ् णिलोपश्च। ४ हन् हिंसागत्योः (हन्तेर्जः)। ५. ञिष्वप् शये (रुदादिभ्यः सार्वधातुके)। ६ हन्तेर्लुङि (लुङि च) इति वधादेशः। ७ अर्द भक्षणे (अर्द गतियाचनयोः)। ८ ध्मा भक्षणे। ९ वृजी वर्जने। १० वर्जितवान् (वर्जने सदाम् नेटः)। ११ शासु अनुशिष्टौ (तिप्यनस्तेः)। १२ णु स्तवने। १३ अस् भुवि (ध्वसोरेद्धावभ्यासलोपश्च)। १४ ष्टुञ् स्तुतौ (स्तुसुधूञ्भ्यः परस्मैपदेषु)।

चनानामधेया कन्यामवाप। उत्पत्तिसमकालमेव च सा गगनोद्गतया गिरा भाविनो विद्याधरसचक्रवर्तिनो भाविनी भार्या निर्दिष्टा। तामेव माम आर्यपुत्रो विदाङ्करोतु[1]। नाहमत्र भवते सर्वमेव विदुषे कथमपि द्विषे[2]। अतो मा मयि भवानपि सदेग्धु[3]। त्वय्यनुरक्तैव चाह त्वामहमिह समानैषम्।

एवमात्यातात्मकुला सा स्वात्मविपर्यिणीं नरवाहनदत्तीयसर्वशङ्का पर्यमार्ट्[4] इति विद्याधरीं तां भार्यारूपेण स्वीकृत्य स तदीयाभिलाषा क्षिप्रम् अप्रासीत्[5]।

[ इत्यदादय ]

एकदा च क्रीडाकुसुमावचयक्रमेण सा ललितलोचना मलयपर्वतीयवनराजिषु किञ्चिद् दूरम् अजिहीत[6]। इतो नरवाहनदत्तोऽपि तया अवेवेक्[7]। एवभूते व्यतिकरे स वासन्तिकशोभासम्पन्ने कुसुमिततरुसुभगे गहने वने विहरन्नेकं महदच्छजल तीरतरुपरिच्युतकुसुमैः सतारकम् आकाशमिव विराजमानमपश्यत्। तद्दर्शन समकालमेव विचारोऽस्य तन्मनसि अविक्षत यत्कुत्रापि अवचिन्वाना मदीया प्रिया न यावत् इह अभ्याजिहीते तावद् अहमिहैव तां प्रतीक्षमाण काल पिपराणि एतस्मिन्नेव सरसि नेनिजानि, वस्त्रान्तराणि च बिभराणि[11]। एव सञ्चिन्त्य स तस्मिन्नेव सरसि, विविक्ते अनेनिक्त विहितदैनिकसन्ध्योपासनादिश्च तत्रैकस्मिंस्तरुतले तिष्ठन् राजहंसीना तत्सदर्शी गतिं रसालवल्लीषु च तदालापसन्निभं पिकीनामालापम्, हरिणीनाञ्च तन्नेत्राभे नेत्र विलोक्य दूरस्थामपि स्वप्रिया मदनमञ्चुका स्मरन्नुद्भूतकामाग्निस्तत्र तत्क्षणमेव मुमूर्च्छ। तस्मिन्नेव च काले पिशङ्गजटो नाम दिव्यदृष्टि कश्चिन्मुनि

नरवाहनदत्तस्य प्रिया पार्थक्यम्
( जुहोत्यादय )

---

१ विद् ज्ञाने ( विदाङ्कुर्वन्त्वित्यन्यतरस्याम् )। २ द्विष अप्रीतौ। ३ दिह उपचये। ४ मृजू शुद्धौ, लङ प्रथमपुरुषैकवचनम् ( मृजेर्वृद्धि ) ( व्रश्चभ्रस्जसृजमृज० ) इत्यादिना ष। ५ प्रा पूरणे। [ इत्यदादय ]

❀ जुहोत्यादय ❀

६ ओहाङ् गतौ, ( 'ई हल्यघो' )। ७ विजिर् पृथग्भावे, ( णिजां त्रयाणां गुणः श्लौ )। ८ विष्लृ व्याप्तौ, (शल इगुपधादनिट क्स)। ९ पृ पालनपूरणयो ( अर्तिपिपर्त्योश्च )। १० णिजिर् शौचपोषणयो ( णिजां त्रयाणां गुणः श्लौ ) ( नाभ्यस्तस्याचि पिति सार्वधातुके )। ११ डुभृञ् धारणपोषणयो ( भृञामित् )।

तत्र स्नातुमगादिति तदवस्थं स तमवलोक्य तत्प्रियास्पर्शानुल्यशीतलजलैः सिञ्चन् प्रबुद्धं सावहितं, प्रणतञ्च तमेवम् अभ्यधत्त, 'पुत्र, परीत्स्यन्ति प्रियाविषयकास्ते मनोरथाः' इति मा जुहुधि तद्विरहवह्निमात्मयौवनशक्तिहविषा। जहिदैन्यद्विपदम्। मा च जहिहि, जहीहि, जेहाहि धैर्यम्। एत हि तत्, धारिणसर्वममीष्टं ददानि। धैर्यशौर्यशालिनो हि व्याघ्रादयोऽपि बिभ्यति। असिद्धिस्तुश्वशुरादिव तस्माज् जिहेति, इति मदाश्रमं चलित्वा एतत्समयद्धा मृगाङ्कदत्तीयांकथां त्वमाकर्णय'। एतदुक्त्वा वाह्यान्तर्विशुद्धः पिशङ्गजटस्तं निजाश्रममानयत्। तत्र च फलमूलादिभिः सम्पादितसमुचितातिथ्यं तं स्वयमुपभुक्तफलादिरिय ⊕मृगाङ्कदत्तीयां कथाम् अभ्यधात्— [ इति जुहोत्यादयः ]

अस्ति भुवनत्रयविश्रुता अयोध्या नाम नगरी। तस्याममरदत्ताख्यो महीपतिर्विद्यते[9] स्म। भास्करस्येव तस्य राजवचस त्रिभुवनेषु दिदीपे[10]। नित्यानुरक्ताया सुरतप्रभाया भार्याया तस्य मृगाङ्कदत्ताख्य पुत्रो जज्ञे[11]। यौवनमापन्नस्य तस्य स्वकोदण्डस्येव कोटिप्राप्तगुणान तस्य प्रचण्डशक्ति-स्थूलबाहु-दृढमुष्टि-मेघबल भीमपराक्रम-विक्रमकेसरि विमलबुद्धि व्याघ्रसेन-गुणाकर विचित्रकथ प्रख्या कुलीना युवान, शूरा, प्रभुहितैषिण प्राज्ञाश्च मन्त्रिणो बभूवु। मृगाङ्कदत्तश्च तै सह ससुख पितु प्रासादेषु तिष्ठन्नात्मानुरूपां भार्या लेभे।

प्रियापार्थक्ये
( दिवादय )

एकदा रहसि तदन्यतमो मन्त्री भीमपराक्रम स्वकीय स्वप्नमेव वर्णितवान्-'देव, प्रासादेऽद्याहमशयिषीति स्वप्ने खरतरनखरमभिधावन्तं सिंहमेकमपश्यम्। गृहीतच्छुरिके समुत्थिते च मयि सोऽत्रस्यत्[12] इति पलायमानं तमहं जवादनुपत्य

---

१ डुधाञ् धारणपोषणयो, ( अभ्यस्तयोरात ), ( दधस्तयोश्च )। २ पॄ पालनपूरणयो ( वृतो वा )। ३ हु दानादनयो, ( हुझल्भ्यो हेर्धि )। ४ ओहाक् त्यागे, ( ई हल्यघो ), ( जहातेश्च ), ( आ च हौ )। ५ डुदाञ् दाने। ६ ञिभी भये, (आत्मनेपदेष्वनत)। ७ ह्री लज्जायाम्। ८ डुधाञ् धारणपोषणयो ( गातिस्थाघुपा० )- [ इति जुहोत्यादय ]

( दिवादय ) ९ विद सत्तायाम्। १० दीपी दीप्तौ। ११ जनी प्रादुर्भावे, ( गमहनजनखनघसां लोप क्ङित्यनङि )। १२ त्रसी उद्वेगे।

---

⊕ इयं कथा दशमकल्लोले समाप्नोति।

व्यद्धु[1] प्रायसम्[2]। स च किञ्चिद्दूरं गत्वा प्रसारितरसनः शूरित्थु[3] माम् अगृधत्[4]। अत छुरिकयाऽहं दीर्घां तस्य रसनामच्छैत्सम् । तदैव च स सिंहो विकृतो महानेकः पुरुष समपद्यत। 'को भवान्' इति पृष्टश्च सोऽब्रोचत् यदहं वेतालः, तव शौर्येण च निरतिशयम् अतुषम्[5]। कथय, किं ते प्रियमाचरेयमिति। एतदा कर्ण्याहमब्रव यदेव चेत्तदा मम प्रभोर्मृगाङ्कदत्तस्य का भार्या भाविनीति मामव बोधय। तच्चाकर्ण्य स वेतालोऽन्वशासीत् यत् उज्जयिन्यां कर्मसेननाम्नो नृपतेर्नि जलावण्यन्यक्कृताप्सरस्सौन्दर्यशीलसम्पन्ना सुता शशाङ्कवती नाम्नाया भविष्यति, ताञ्चावाप्य सार्वभौमो भूपतिर्भूत्वा तव प्रभु सर्वा निजप्रजा सन्तोषयिष्यतीति। एवमुक्त्वा स वेतालस्तिरोऽधत्त, अहञ्च स्वगृहमागमम्।

एतदाकर्ण्य मृगाङ्कदत्तोऽन्यान्निजमन्त्रिण समाहूय सर्वं तच्छ्रावयामास। स्वकीयञ्च स्वप्नमित्थं तेभ्योऽवर्णयत्–'जाने, सर्वे वयं महाटवीं प्रविष्टा अध्वनि अतृष्याम[6]। दुःखेन चावाप्त पानीयं पेतुं[7] प्रवृत्ता पञ्चभिः पुम्भिः सायुधैरवरुद्धा। तान् हत्वा पिपासवो वयं यावत्पानीयं पातुं प्रयतामहे[8] तावन्न तज्जलं नापि ते पुमांस इति कृच्छ्रां दशामवाप्ता वयमिन्दूज्ज्वलवृषमारूढमायान्तं महेश्वरमद्रा क्ष्महि। स च प्रणतेष्वस्मासु दक्षिणाद्दृगोऽश्रुण कणमेकमपातयत्। स च क्षणा नन्तरं समुद्र समपादि[9]। तस्मात् प्राप्तां शुभामेकावलीं गले बद्ध्वा रक्तानुलिप्तेन नृकपालेनाहं तमम्बुधिम् अपीये[10]। तदनन्तरमेवाहम् प्राबुद्धि[11]। क्षणदाऽपि तदाऽदासत[12]।

मृगाङ्कदत्तेनेत्थं निजस्वप्ने निवेदिते मन्त्री विमलबुद्धिर्हृष्यंस्तु तत्रस्थेष्वन्ये ष्वभाषत यत्समनासभवानुग्रहो भवान् धन्य । स्वप्ने मुक्तावलीं लब्ध्वा यत्त्वया ताऽम्बुधिः पीतस्तेन शशाङ्कवतीमवाप्य भवान् भुव भोक्ष्यतीति स्थिरीकृतम्। तच्चाकर्ण्य मृगाङ्कदत्तस्तानुवाद यद् यथा मम स्वप्नस्य फलं यथा वा भीमपरा क्रमो वेतालादाकर्णितवान् यद्यपि तत्तथैव भावि तथापि बलदुर्गाभिमानिन

---

१ व्यध ताडने। २ चमु प्रयत्ने ('यमोऽनुपसर्गात्')। ३ शृगी हिंसा स्तम्भनयोः। ४ गृधु अभिकांक्षायाम्, (पुषादिद्युतादि०)। ५ तुष प्रीतौ (पुषादित्वादङ्)। ६ ञितृषा पिपासायाम्। ७ पीङ् पाने। ८ यती प्रयत्ने। ९ पद गतौ। १० पीङ् पाने। ११ बुध अवगमने। १२ दीङ् क्षये (मीनातिमिनोतिदीङां ल्यपि च)।

क्रमेणैनस्य सुता शशाङ्कवती शौर्यमनावलेनैव मयोपलब्धया। यतो हि प्रतापलमेव स्वाभीष्टसिद्धिमुख्यसाधनम्।

अथ शशाङ्कवती समुपलब्धिसमुत्सुको मृगाङ्कदत्तः स्वसचिवैः समनुयायिनीं गन्तुमना महाव्रतिकवेषेण स्वनगर्या बहिर्गन्तुं मन्त्रिभिः सम्मन्त्र्य कपालादि समाहर्तुं भीमपराक्रमाभिधं सचिवं समादिशत्। किन्तु तेनाहृतं तत्सर्वं मृगाङ्कदत्तस्य पितुर्मुख्यो मन्त्री स्वगृहे अबुद्ध।

द्वितीयस्मिन् दिने हर्म्यपृष्ठे यातायातं कुर्वन् मृगाङ्कदत्तोऽधस्तादकस्मात्स मुखतांबूलरसम् अक्षेप्स्यत्। स च दैवाद्धर्म्यपृष्ठमधोऽधोवर्तमानया पद्धत्या पर्यमानस्य मन्त्रिणस्तस्य शिरसि अभ्रंशत। एतेन 'मृगाङ्कदत्तो ममोपरि अष्ठीव्यत् एवमवबुध्यमानो मन्त्री निरतिशयं तस्मै अक्रुध्यत्। इन्निहितपरिभवगर्वश्च निजगृहम् आपद्यत सचैलश्च अशुध्यत्।

अथान्येद्युर्मृगाङ्कदत्तस्य पितुरमरदत्तस्य दैवाद्विसूचिका समजायत। अतो निर्जने लब्धावसरो मन्त्री सहमोद्भूतरोगार्तिं तमभयं याचित्वाऽवदत्, देव, भीमपराक्रमगृहे मृगाङ्कदत्तेन त्वदर्थमभिचारः समारब्धस्तेनैव भवानद्य क्लिश्यति क्लेश्यति चानुक्षणं ध्रुवमस्य देहः अहञ्च चारमुखात्सर्वमेतद् अवाबुध्ये। अतो देहाद् व्याधिमिव देशात्तमात्मजं दुरात्मानं निराकृत्य सन्तुष्य। एतदाकर्ण्या मरदत्तः सातिशयम् उदभ्राम्यत् तदवेक्षणाय च निजसेनापतिं भीमपराक्रमगृहम् जीगमत्। स च सेनापतिः केशकलापादिसर्वमाभिचारिकमनुजातं सुत्रोपलभ्य ततः समानीय सर्वं तद्राजानं प्रादर्शयत्। अमरदत्तश्चैतेन निजमन्त्रिकथने व्यश्वसीत् निरतिशयञ्चाक्षुभ्यत्[11] अचिन्तयच्च, 'अहो! यच्छुभोदर्कतत्परः पिता दुष्परिस्थितौ [12]क्षुध्यन्नपि न भुङ्क्ते, तृष्यन् अपि न पीयते यश्च सुतस्नेहसम्बन्धबद्धः स्खलन्त इव पितरं नेहाति किं तथा कथितः स ईदृशः [13]पर्यवस्यति? किमयमेवास्मद्गो निजपूर्वजान् पुन्नाम्नो नरकात् [15]समुज्जमयति यो [16]यस्यति स्वमेव निजजनकाभि चारकलङ्कपङ्केनालिप्तयितुम्? किमेतदेवात्मजलाभफलं यद्वाप्य मानवमनो हर्षेण

१ बुध अवगमने। २ ष्ठिवु निरसने। ३ पद गतौ। ४ भ्रंशु भृंशु अधःपतने। ५ क्रुध क्रोधे। ६ शुध शौचे। ७ जनी प्रादुर्भावे। ८ क्लिश उपतापे। ९ कृश तनूकरणे। १० भ्रमु अनवस्थाने। ११ क्षुभ सञ्चलने। १२ क्षुध बुभुक्षायाम्। १३ णह बन्धने। १४ षोऽन्तकर्मणि। १५ जमु मोक्षणे। १६ यसु प्रयत्ने।

नृंत्यति । शैशवे धूलिधूसरितस्य यस्य रजसा मलिनीभूता अपि जना धन्याना त्मनो मन्यन्ते । यस्मिश्च पितु सहस्रशो जीवनाशाबुद्बुदा आधीयन्ते, न चिरार्थैत्र विलीयन्ते ? समस्वपीतरभावपदार्थेषु कि जगति द्रव्यस्यव प्राधान्यम्, गुणानाञ्च सर्वथोपसर्जनीभाव ? न च कर्मसु किमप्यवधानम् ? किं तथा स्निग्ध स्वपि पितरि पुत्रस्य जनसामान्यप्रतिपत्तिर्न विदाग्रह ? किमिस्य द्रव्यमति रिच्य गुणान्सिमवाये मानवानामेकपद एवाभावबुद्धि ? किमेतदर्थमेव जनोऽ न्योन्येन [6]सज्यते, रँज्यति, विरज्यते च ? अहो यत, यदनवाप्त्याधिपीडितोऽ हमन्त प्रविष्टघुण काष्ठ इवाहर्निशम् र्जरम् सत्यपि सर्वस्मिन् विभव सुत मुखावलोकनकामनया सुरतप्रभया सह तथाभूतानि व्रतादीनि समाचरम् तत्सर्वं विषबीजवपनमिव समजनि । कथमन्यथा ममैवोरसा जातस्य मय्येवाभि चारिकबुद्धिर्भवेत् । एवमित्यादि विविध चिन्तयन् [9]अतिगुप्यन्, [11]कुप्यंश्च नृपतिर्निजपुत्रदौरात्म्य [12]क्षमितु न [13]अशकयत्, सेनापतिञ्च प्राविसत् [14] यद्राज्य लुब्धो मम दुःशीलनसृगाङ्कदत्तोऽमात्यै सहितोऽद्यैव राज्यान्निर्वास्यताम् । सेनापति रपि मृगाङ्कदत्ताय राजादश निवेद्य सामात्य त नगर्या निरकालयत् । राजपुत्रोऽ पि चाचिंतविनायकोऽतिहृष्टा गृहीतापेक्षितसम्पत्तिर्मनसैव पितरौ प्रणम्य विनि र्गत्य चायोध्यात प्रचण्डशक्तिप्रमुखान्निजसहयोगिनो दशापि मन्त्रिण उवाच यन्मदीयो वाल्सुहृत्, विद्यासु च सब्रह्मचारी, किराताधिपतिरिदानीं पितरि मृते पित्र्ये राज्येऽधिरोपितो वतते अत सुहृदस्तस्यदानीं निकट गच्छाम । तत स्तमादाय शशाङ्कवतीं प्रत्युज्जयिनीं याम्याम इति ।

एव प्रतिपन्नात्मकथनै सचिवै सह गच्छन्मृगाङ्कदत्त साय निवृत्ततोयामट वीमेकामवाप्य [15]द्रिर्घद्गात्र कृच्छ्रात्तीरोपान्तप्ररूढशुष्कपादप सर एकमयाल [16]क्षिष्ट । तत्र स्नात्वा सम्पादितसान्ध्यविधि, पीतजल, श्रान्त शुष्कस्यैकस्य तरोरधोऽशयिष्ट येन तस्याध्वग्लान्ति [17]अलिसत् ।

---

१ नृती गात्रविक्षेपे । २ मनु अवबोधने । ३ धीङ् आधारे । ४ लीङ् श्लेषणे । ५ ञिमिदा स्नेहने । ६ सृज विसर्ग । ७ रञ्ज रागे । ८ जृष् वयोहानौ । ९ जनी प्रादुर्भावे ( जनिवध्योश्च ) । १० गुप व्याकुलत्वे । ११ कुप क्रोधे । १२ क्षमू सहने । १३ शक विभाषितो मर्षणे । १४ विस प्रेरणे । १५ द्रुह जिघांसायाम् । १६ ञिद्रा गात्रप्रक्षरणे । १७ छिदिर् अवपर्नाव ।

मृगाङ्कदत्त एव तत्तापस्यादाकर्ण्य 'भगवन्, अलमति खेदेन । सामात्याऽहं वेत्स्ये[1] तव सहाय इति सकमभीष्टं ते सेत्स्यति'[2] इत्थं तमभापिष्ट । तापसश्चैतं वभिनन्द्य कृतकृत्यमिव तत्क्षणमेवात्मानम् अमस्त[3] । सानुगेन तेन सह तत्स्थानं च ययौ । तत्र मन्त्रबद्धासु दिक्षु च रात्रौ मृगाङ्कदत्तादीन् स्थापयित्वा दिक्षु विदिक्षु रभिमन्त्रितसर्षपैरसौ मर्कटीकृत्य नागदमनैर्मन्त्रैर्होतुं प्राक्रम्यत । उत्पातमेवार्धी श्वान्ममप्रशवयाऽजैपीत् । एवं कुर्वति सानुगे तस्मिंस्तापसे शिशपातरारका स्त्री निरियाय । सा च स्वकीयाभरणरवैर्मोहमन्त्रान् पठन्तीवोपेत्य कटाक्षहत मानसत विदधती समाश्लिक्षत् । एतेन विस्मृतमन्त्रः स तापसो नितराम् अर्बुदन् इति होमभाण्ड तस्य हस्ताद् अभ्रशत् । तदानीमेव लब्धावसरोऽसौ पारावताम्या नाग कल्पान्तघनाघन इवोद्गमत् । नयनज्वालाघोरं तमालोक्य तस्य दारुण गर्जनञ्चाकर्ण्य सा दिव्या नारी तत्क्षणम् अनशत् । स्फुटितहृदयस्तापसश्चापि चिराय अशमत् । तस्मिन् नष्टे नागो विहितसाहाय्येभ्यो मृगाङ्कदत्तादिभ्य अशप्स्यत यद् यूयमस्य साहाय्य निष्कारणमनुचितमुचितो अकुर्यतेति कञ्चित्का एमन्योन्यवियुक्ता स्यास्यथेति ।

एवमुक्त्वाऽन्तर्हिते नागे ते सर्वे तत्क्षणमेव ध्वान्तावरुद्धदृशो ध्वस्तशब्द श्रवणशक्तयश्च मृगाङ्कदत्ताद्या विप्रयुक्ता शापप्रभावादितस्ततः "क्षुभ्यन्तोऽन्यो न्यान् "मृगयन्तश्च नितराम् अखिद्यन्त[12] ।

एव सचिवैर्वियुक्तस्ततो भ्रमतो मृगाङ्कदत्तस्य द्विश्रेषु मासेषु व्यतीतेषु एकदा श्रुतधिर्विप्रस्तम् अन्विष्यन् अकस्मात्तदन्तिकमवाप । प्रदर्शितविनयश्च साधु श्रुतधि सादरं स्वमन्त्रिवार्ता पृच्छन्तं तमाश्वास्योवाच 'प्रभो, न मया ते द्वास्त थापि जाने, उज्जयिनीमेव ते यास्यन्ति; यतो हि सैव पुरी भवतां गन्तव्यस्था नम्।' एवमुक्तस्तेन प्रेरितश्च मृगाङ्कदत्तस्तेन सहोज्जयिनीं प्रस्थित स्तोकैरेव दिनै

---

१ विद् सत्तायाम् । २ षिधु संराद्धौ । ३ मन ज्ञाने । ४ क्रमु पादविक्षेप ('वा भ्राशभ्लाशभ्रमुक्रमु०') इति वैभाषिक श्यन् 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम्, तेन 'क्रम परस्मैपदेषु' इति दीर्घाभाव' । ५ श्लिष् आलिंगने ('आलिंगने')। ६ भ्रंशु अधःपतने । ७ शमु उपशमे। ८ शप आक्रोशे। ९ उच समवाये (समवेता इत्यर्थ) १० क्षुभ सञ्चलने । ११ मृग अन्वेषणे ( दिवादराकृतिगणत्वात् श्यन् )। १२ खिद दैन्ये ।

मार्ग विमलबुद्धिं निजमन्त्रिणमप्राप्य अहृष्यत्[1]। तद्दर्शनेन चोद्वाष्पदृशं प्रणतं तं परिरभ्य तत्रैव चोपवेश्यैतरमन्त्रिणा वार्ता पप्रच्छ। विमलबुद्धिरुत्ततार यद्देव, नाहं बुध्ये[2] नागशापतः कस्कस्तेषु क्व गत इति तथापि भवाँस्तान् प्राप्स्यतीत्यहं यथा वच्मि तच्छृणु—नागशापेनैतस्ततः परिभ्रमन्नहमटव्या पूर्वदिग्विभागेऽति यलान्तः केनापि साधुना महर्षेर्ब्रह्मदण्डिन आश्रमं प्रापितः। तत्र तेनर्षिणा प्रदत्तैः फलैः अम्भोभिश्च विगतक्लमीकृतोऽहं पर्यटन्नाश्रमादारादुद्वृहतीं गुहा मद्राक्षम्। प्रविश्य च तत्र तस्या अन्तर्मणिमन्दिरमेकमवलोक्य जालगवाक्षैस्तत्र वीक्षितुं प्रवृत्तः सभृङ्गकं चक्रं भ्रामयन्तीं स्त्रियं पृथक् पृथक् स्थितौ वृषगर्दभौ चादर्शम्। भृङ्गाश्च पार्थक्येन वृषगर्दभौ अधीयन्त[3] इति ताभ्यां स्नुग्धौ[4] क्षीरासृक्फेनौ पीत्वा यथाश्रयं ते सितासिता भूत्वा जालकारका अभूवन्। ततो द्विविधैश्च तैः स्वकृतशकृद्भिर्द्विविधा जालपाशा कृता, ते च सुपुष्पैर्विपपुष्पैश्च संगताः। तेषु जालपाशेषु यथासुखं सक्तास्ते जालकाराः श्वेतकृष्णोभयमुखेन महाहिना समागत्य दष्टा इति नार्या तया ते नानाधटेषु क्षिप्ताः। समुत्थिताश्च ते तथेव तान् पाशान् यथातथं श्लिष्ट्वा विपोद्वेगाच्च तत्पुष्पजालस्थेषु समारटत्सु अन्येऽपि तेऽन्य जालस्था ग्रन्थितुं प्रवृत्ता इति तत्रस्थेन केनापि कृपालुना तपस्विना भाएतो मुक्तया ज्वालया दग्धपाशास्ते ससुषिरं वैद्रुमं दण्डं प्रविश्य तदूर्ध्वस्थे भास्वरे ज्योतिषि व्यलीयन्त। तत्क्षणमेव च सचक्रवृषगर्दभा सा स्त्री चक्षुषोरगोचरताम् आपद्यत। तद् दृष्ट्वा विस्मितोऽहं यावत्तत्र पर्यटन् स्थितस्तावद् भृङ्गगुञ्जितरम्बुजं स्व वीक्षितुमाह्वयन्तीमिव पुष्करिणीं हृद्यामेकामपश्यम्। तत्तीरोपविष्टश्च यावदहं तद्वनं वीक्षे तावल्लुब्धकेनैकेन स्वयं सवर्द्धितो दशराहुः सिंहपोतोऽनायत्त इति क्रोधात्तस्माद्वनाद्विवासित। स सिंहपोतोऽपि च वनान्तरं सिंह्याः शब्दमाकर्ण्य तत्र गच्छन् वायुनाऽवकीर्णभुजो विहितः किन्तु क्षणान्तरं क्रमशः स लब्धो न्रेणैकेन पुंसा पूर्ववत्समारोपितबाहुकः सम्पादित इति स सिंह्या कृते सद्वनं जिगमिषुस्तृशम् अक्लिश्यत[5] तथापि अन्ते तां प्राप्य तद्युक्तो निजवनमायात इति सभार्यं तं करिमदनमागतमालोक्य लुब्धकस्तस्मै तद्वनं समर्प्य ततोऽगात्।

एतद् निरीक्ष्योभयं तदाश्चर्यमहमाश्रममागत्य ब्रह्मदण्डिनेऽवोचम्। स चापि त्रिकालज्ञो मुनिर्मामेवमभ्यधात् 'धन्यस्त्वम्। सर्वमेतं प्रसङ्गेनेश्वरेण

१ हृष तुष्टौ। २ बुध अवगमने। ३ धीङ् आधारे। ४ ष्णुह उद्गिरणे ५ क्लिश उपतापे।

जलमानुषा युगपद् गृहीत्वा निगरितुम्[1] ऐषिषुः[2] । अतस्तत्परिच्छदस्तम् उज्झित्वा[3] बिभ्यदभ्यद्रवत् । तद् दृष्ट्वा समाकृष्टखड्गो मृगाङ्कदत्तोऽन्तः प्रविश्य जलमानुषांस्तान् प्रत्यकिरत्[4] शबरञ्च अमोचयत् इति तद्ग्राहनिमग्नान्मुक्तो भिल्लराजोऽस्य उदमाङ्क्षीत्[5], राजपुत्रपादयोः पतित्वा च अप्राक्षीत्[6], 'भगवन्, कस्त्वम् यस्समानीतो धात्राऽत्राऽऽसन्नग्रस्तस्य मे प्राणान्? जन्मना कः महानुभाव मृडसि[7]? रहसि त्वां का योषिज्जोषं जुषते[8]? क्व त्वं क्षियसि[9]? मनसि किं वा महोद्देश्यं धियसि[10]?' इति । एतदुक्त्वोत्तरे श्रुतधैर्योपलम्भश्च तद् वृत्तान्तं श्रुत्वा सुतरां प्रणतः शबरेन्द्रो यथादिष्टे तदभिवाञ्छिते सहायो भवितुं स्वं अदिक्षत्[11], स्वगृहं तत्कृपोपस्थित्या पवित्रीकर्तुञ्च प्रार्थयमानः स्वकीयां पल्लीमानीय सर्वैर्भूतिभिः यथावत् आद्रियत[12] । मृगाङ्कदत्तोऽपि च तदनुरोधतः तत्र कांश्चिद्वासरान् अध्रियत[13] ।

एकदा तत्रैव स्थिते मृगाङ्कदत्ते शबरेश्वरश्चण्डकेतुनाम्ना निजप्रतीहारेणाऽऽवेदितमासीदिति नभसि मेघेषु गर्जत्सु प्रनृत्यतो मयूरान् द्रष्टुं स उत्तस्थौ । एतद्रसिकः प्रतीहारस्तमभ्यधात् 'हे राजन्, अमुदिततताण्डवैरेभिर्मयूरैरलम् । मदीये गृहेऽसीमानभूतपूर्वो मयूरो वर्तते तदवलोकनरसिकश्चेद्भवान्, स मया प्रदर्शयिताहे । एतदाकर्ण्य 'नूनं स त्वया प्रदर्शयितव्य' इति प्रतीहारमुक्त्वा स्नानाद्यर्थमुत्थिते तस्मिञ्छबरेश्वरे मृगाङ्कदत्तोऽपि सानुगस्तावत्समाकर्ण्यारभ्य स्नानाहारादिविधीन् अविधत् ।

अथ रात्र्यन्धे तमसि कस्तूरिकानुलिप्तनीलवासश्चर्चिताङ्गो[14] राजपुत्रो वीरचर्यार्थं स्वोद्देश्यादेकक एव सुप्तानुगास्थायावासात् खड्गपाणिर्निर्जगाम । भ्रमतश्च मार्गे भ्रान्तिवशादपश्यतस्तस्य कस्यापि पुरुषस्यांसेनांसोऽभ्यहन्यत तेनातिक्रुद्धो राजपुत्रो युद्धाय तमाह्वयति स्म । किन्त्वसेनाहतो निपुणः पुमान्

---

१ गॄ निगरणे ('वृतो वा', अचि विभाषा') । २ इषु इच्छायाम् । ३ उज्झ उत्सर्गे । ४ कॄ विक्षेपे ('किरतौ लवने', 'अपस्किरमपवापेऽपि०') । ५ टुमस्जो शुद्धौ ('मस्जि नशोर्झलि') । ६ प्रच्छ ज्ञीप्सायाम् । ७ मृड सुखने । ८ जुषी प्रीतिसेवनयोः । ९ क्षि निवासगत्योः । १० धि धारणे । ११ दिश अतिसर्जने । १२ दृङ् आदरे । १३ धृङ् अवस्थाने । १४ चर्च संवरणे ।

तत्कालोचितमुवाच यद् अविचार्यैव कथमतिताम्यति भवान्। अत्र तु निशा पतिरेवापराध्यति येन नैषा निशा प्रकाशिता विधाता वा कुकोट[1] यो न पूर्णाधिकारमस्य भार्ये लिलेख[2]। अत एवेदृश्यन्धकारेऽकारण वैराणि समुल्लसन्तीति दैवादत्र मिलितयोरावयोर्युद्धेन कतर किं वेदिष्यते[3]। नागरिकाद्वेतदाकर्ण्य सत्यमिति तुष्टो मृगाङ्कदत्त 'को भवान्', इति त पुरुष पप्रच्छ। तेन च चौरोऽहम् इत्युक्तो राजपुत्रो नृपावदत्, 'तर्हि हस्तमानय, सहचरश्च मे भवेति'। इत्थ तेन सख्य कृत्वा तेनैव सह गच्छन् स निर्जलजीर्णकूपमेकम् उपासीदत्। तच्च प्रविश्य तत्र वर्तमानया सुरुङ्गया तेनैव पुसा च सह गत्वा स मायावटो राज्ञोऽन्त पुर प्रविवेश[4]। तत्र प्रकाशे स पर्यचषीद् यत्तस्य सहायायी पुरुषो नान्यस्तस्करोऽपि तु चण्डकेतु प्रतीहार। राजस्त्रीच्छन्नकामुकश्चण्डकेतुस्तु मन्दालोकैककोणस्थ मृगाङ्कदत्त परिचेतु नाशकत्।

तत्र प्राप्तमेव च प्रतीहारमुत्थाय मञ्जुमत्यभिधाना तदनुरक्ता राजपत्नी त कण्ठेऽग्रहीत् पर्यङ्के समुपवेश्य चाप्राक्षीत्, 'अद्य क पुमान् त्वमिहानैषी' इति। प्रतीहारोऽब्रवीत्, 'विश्वसिहि ममाय सुहृदिति न भयस्यावकाश' इति। एवमुक्ता मञ्जुमती सातिशयम् उद्विविजिष्ट उवाच च यदिदानीं मन्दभाग्याया मे कुतो विश्राम' यतो हि नर्मदाम्भसि मृत्युमुखे पतित राजानमवलोक्य मृगाङ्कदत्तस्तत्क्षणे व्यापृर्त इति राजाऽसौ जलमानुषगृहीतोऽपि नामृत। तच्छ्रुत्वोपांशु प्रतीहारोऽवादीत्, 'प्रिये, शुचा अलम्। अचिरादेव मृगाङ्कदत्त तम हम् प्रतिहिंकरिष्यामि' इति। एतदुक्तवन्त त मञ्जुमत्यभ्यधत्त—मा विकत्थिष्ठा, यदासौ नृपो नर्मदाम्भसि ग्राहेणाक्रान्तोऽभूत्तदैको मृगाङ्कदत्त एव तद्रक्षणाय समयस्यत्, तमजय्यंच। कथ न त्व त तत्रैव तर्हि तर्हितुमभङ्गुर शस्त्रम् उदगुरिष्ठा, अपि तु भीतस्ततः पलायिष्ठा? धीरा हि कर्मणि निपुणन्ति न केवल वाचानि जोपमास्यनाम्। मा कस्यचिच्छ्रुतिपथमेतदवतरेद् यथा मृगाङ्कदत्ताच्छूराच्छिन्न त न भवत्।

१ कुट कौटिल्ये। २ लिख अक्षर विन्यासे। ३ विद्लृ लाभे। ४ विश प्रवेशने। ५ ओविजी भयचलनयो। ६ पृड् व्यायामे। ७ मृड प्राण त्यागे। ८ गुरी उद्यमने। ९ पुण कर्मणि शुभे।

जल्मानुपा युगपद् गृहीत्वा निगरितुम् ऐषिषु[1][2]। अतस्तत्परिच्छन्नस्तम् उज्झित्वा[3] निष्यदभ्यद्रवत्। तद् दृष्ट्वा समाकृष्टखड्गो मृगाङ्कदत्तोऽन्तः प्रविश्य जल्मानुपाँस्तान् प्रत्यस्किरत् शबरञ्च अमोचयत् इति तद्ग्राहनिग्रहान्मुक्तो भिल्ल राजोऽद्भ्यः उदमाङ्क्षीत्, राजपुत्रपादयो पतित्वा च अप्राक्षीत्, 'भगवन्, कस्त्वम् यस्त्वमानीतो धात्राऽत्राग्रस्त ग्रस्तस्य मे प्राणान्? जन्मना त्व क महानु भाव मण्डसि? रहसि त्वां का योषिज्जोष जुषते? क त्व भियसि? मनसि किं वा महोद्देश्य धियसि?' इति। एतदुक्त्वोत्तरे श्रुतधेरशेषतश्च तद् वृत्तान्त श्रुत्वा सुतरा प्रणत शवरेन्द्रो यथादिष्टे तदभिवाञ्छिते सहायो भवितुं स्वत् अदिशत्, स्वगृह तत्कृपोपस्थित्या पवित्रीकर्तुञ्च प्रार्थयमान स्वकीयां पल्लीमानीय स्वविभूतिभि यथावत् आद्रियत[12]। मृगाङ्कदत्तोऽपि च तदनुरोधत तत्र कौंश्चिद्वासरान् अध्रियत[13]।

एकदा तत्रैव स्थिते मृगाङ्कदत्ते शबरेश्वरश्चण्डकेतुनाम्ना निजप्रतीहारेणार्थे दीप्यन्नासीदिति नभसि मेघेषु गर्जत्सु प्रनृत्यतो मयूरान् द्रष्टु स उत्तस्थौ। द्यूतरसिक प्रतीहारस्तमभ्यधात् यद्राजन्, असुशिक्षिततान्ण्डवैरेभिर्मयूरैरलम्। मदीये गृहेऽतीमानभूतपूर्वो मयूरो वर्तते तदवलोकनरसिकश्चेद्भवान्, त अ प्रदर्शयिताहे। एतदाकर्ण्य 'नून स त्वया प्रदर्शयितव्य' इति प्रतीहारमुक्त्वा स्नानार्थमुत्थिते तस्मिञ्छबरेश्वरे मृगाङ्कदत्ताऽपि सानुगस्तत्सर्वमाकर्ण्याध्याय स्नानाहारादिविधीन् अविधत्।

अथ रात्रावन्धे तमसि कस्तूरिकानुलिप्तनीलवासस्त्वचितांङ्गो राजपुत्रो वीरचर्यार्थं रत्नोद्देश्यादेकक एव सुप्तानुगारम्भावासात् खड्गपाणिर्निर्जगाम। भ्रमतश्च मार्गे ध्वान्तवशादपश्यतस्तस्य कस्यापि पुरुषस्यांशेनांस्योऽभ्यहन्य तेस्यतिक्रुद्धो राजपुत्रो युद्धाय तमाह्वयति स्म। किन्त्वसेनाहतो निपुण पुमान्

---

१ गॄ निगरणे ('गृतो वा', अचि विभाषा')। २ इषु इच्छायाम्। ३ उज्झ उत्सर्गे। ४ कॄ विक्षेपे ('किरतौ लवने', 'अभ्यासव्यवायेऽपि०')। ५ टुमस्जो शुद्धौ ('मस्जि नशोर्झलि')। ६ प्रच्छ ज्ञीप्सायाम्। ७ मृड सुखने। ८ जुषी प्रीतिसेवनयो। ९ त्रि भियासगत्यो। १० धि धारणे। ११ दिश अतिसर्जने। १२ दृङ् आदरे। १३ धृङ् अवस्थाने। १४ त्वच संवरणे।

कस्मिन् शाल्मलिपादपे निखाता गणेशप्रतिमामालोक्य कृततत्पर्[1]रिणूति तन्मूले परिश्रान्त मसुपाविशम् । कृतञ्च मनसि, यद् वेतालवृत्तान्त स्वामिने निवेद्य न मयोचितमाचरितम् । एव पारस्परिकपार्थक्येऽपराधिनमात्मानमालोच्य निरा हारो देवस्याग्रेऽध्रुव देहमिम परित्यक्तुमध्रु[2]वम् । गतासु चैवमबहुतिथीषु तिथिषु तेनैव पथा कश्चित्पथिकोऽपथीत् तस्यैव तरोश्छायायां च क्षण विश्रम्य 'किं त्व पुत्रात्र म्लानमुखस्तिष्ठसि ? किमिच्छ[3]ति भवान् ? किं मिच्छ[4]ति भवन्तम ? इत्थ निरवक्षात । तन्निर्बन्धेन च यथावस्त्ववृत्तान्त विनिवेदितवन्त मां स वृद्धपथिक 'न धीरेषु भयादृशेषु एवमात्मग्लानिहेतुभूतनिकारा शुम्भ[5]न्ति । धीरोद्योगिना हि सर्वे मनोरथा यथाममय सं[6]उम्भन्ति, इति नापदि ते स्वधैर्यम् उज्झन्ति ।' एवमुक्त्वा तद्बोधिका विविधा कथाश्च कथयित्वा मरणान्मां निवार्य यथेच्छम् अविच्छायीत्[7] । [ इति तुदादय ]

प्रियापार्थक्ये
( रुधादय )

मित्रवियोगजन्मतामिस्रावरुद्धबुद्धि किन्तु, सुगृहीतस्नेहोपदेशप्रदीपोऽप्येव खि[8]न्ते, यस्त्वमुपदेश्य विद्वानपि न स कृत्याकृत्य विन्ते[9] । ज्ञानप्रकाशो हि न तस्य सं[10]मुच्छन्ते इति प्रियाप्रियतरमपि स [11]परितृन्ते । अत कथ मां विधिर्मम प्रभुणा संयु[12]नक्तु येन स पुनरप्यस्मान् पूर्ववत् [13]सम्भुनक्तु इति चिन्तानिमग्नोऽह युष्मान् अन्विष्यन्नट्या स्तवाभिलषितामुज्जयिनीम् [14]आञ्जिषम् । पर सापि मे तव संयोगम् अ[15]वर्जीत् । एतच्च नैराश्य स्वान्त मदीयम् अभि[16]नत् इव, शरीरञ्च प्राणेभ्य अवि[17]नक् इवेति भवदनवाप्त्यव[18]रुद्धमानसगतिरतिश्रान्त एकस्या स्त्रिय गृह प्रदत्तभोजनावासमवश्योऽह वासाय प्राविशम् । तत्र चावासशयनासन क्षण

---

१ णू स्तवने । २ ध्रु गतिस्थैर्ययो । ३ 'मान्तप्रकृतिकसुयन्तादव्ययाच्च क्यच् न' इति किम् शब्दात् क्यचो निषेध । ४ मिच्छ उत्क्लेशे । ५ शुम्भ शोभार्थे । ६ उम्भ पूरणे । ७ विच्छ गतौ ( 'गुपूधूपविच्छ०' इत्यायप्रत्यय )

( इति तुदादय )

⊛ रुधादय तनादयश्च ⊛

८ खिद दैन्ये । ९ विद विचारणे । १० उच्छृदिर दीप्तिदेवनयो । ११ उत्तृदिर हिंसानादरयो । १२ युजिर योगे । १३ भुज पालने । १४ अञ्जू व्यक्तिम्रक्षण । १५ वृजी वर्जने । १६ भिदिर विदारणे । १७ विचिर पृथग्भावे । १८ रुधिर आवरणे ।

एवमुक्तो जार प्रतीहार सातिशय लेजे[1]। तदधिक्षेपशान्तिस्तवानीं तत्र श्रय न भेजे। अमपायेशभरोऽमुष्याधरो निष्पुष्फोर[2]। [3]चुक्षोर च मञ्जुमत्युक्तमेकैकमक्षर तद्धृदयमिति क्रोधाग्निर्ज्वलद्भ्राष्ट्रकपालपतितान्नमिव तत्स्वान्तं बभ्रंज[4]। अतोऽमृष्यमाण स उवाच-'आ पापे, मृगाङ्कदत्तस्त्वाम् अलुभत् इति त्व तस्मिन् बद्धभावा, किन्तु तेन त्व यन्माम् अधिक्षिपसि तस्य फलमिदानीमेव विन्दस्व[5]। एवमुक्त्वा स्त्रीवधपापानवहित स स्वच्छुरिकया तच्छिरश्छोरितुमैच्छत्। पर तस्मिन्नेव काले रहस्यधारिणी चेटिकैका छुरिकां ताम् अवाछिनात् इति मञ्जुमती ततो निर्गत्यान्यत्रागमत्। प्रतीहारश्च विस्मितेन मृगाङ्कदत्तेन सह यथागत स्वगृह परावर्तत।

प्रतीहारे तस्मिन् स्वगृह प्रविष्टे मृगाङ्कदत्तस्तमसि तमभिहितवान् 'ममासादितस्वभयनो भवानधुना क्षिप्र[6] गाढ निद्रातु अहमपि चात साधयामी'ति। प्रतीहारस्तथेत्युक्त्वा तच्चेष्टावलोकनेच्छया तत्रत्य स्वभृत्यमेकमाहूय आदिशत यत्र मयूरो यत्र वर्तते तत्र पुरुषमेन नीत्वा शयनीयमस्मै प्रयच्छ। भृत्योऽपि च तथेति प्रतिपद्य मृगाङ्कदत्त सदीपक तद्गृह प्रवेश्य दत्तशय्यश्च स विधाय बहिर्निर्ययौ।

गते च भृत्ये सार्गलीकृतबहिर्द्वारो मृगाङ्कदत्त पञ्जरस्थित त मयूरमालोक्य सोऽय प्रतीहारोक्तो मयूर इति चिन्तयन् कौतुकात्तस्य पञ्जरमुद्घाटयामास। पञ्जरनिर्गतो मयूरश्च मृगाङ्कदत्त निपुण निरीक्ष्य तत्पादयोर्निपपात मुहुर्मुहुर्लुलोठ[7] चेति लुठतस्तस्य कण्ठे मृगाङ्कदत्त बद्ध सूत्रकमवलोक्य मुदति एतदेन मित्रयवगत्य मञ्जु तद् अमुंच[8]। मुक्तकण्ठसूत्रश्च मयूर पश्यत एव मृगाङ्कदत्तस्य भीमपराक्रमो मन्त्री समपद्यत। मृगाङ्कदत्तश्च तदौत्सुक्येनानत त समाश्लिष्य किं न्वेतदिति विस्मयाविष्ट सर्वं वर्णयितु तम् अप्रेरयत्[10]। तन्निवर्ण्यातिप्रसन्नो भीमपराक्रमो लिम्पमानां[11] तदीयां मृदुलता तां जिज्ञासमानां स्ववृत्तान्तामूलवर्णनेनेत्थम् अब्रवीत्[12]-'देव, नागशापन भयदन्तिकाद्विभ्रष्टोऽहमटव्यां भ्रमन्

1 ओलजी व्रीडायाम्। 2 स्फुर स्फुरणे। 3 क्षुर विलेखने। 4, भ्रस्ज पाके। 5 लुभ विमोहने। 6 क्षिप प्रेरणे। 7 विद्लृ लाभे। 8 छुर छेदने। 9 मुच्लृ मोचने। 10 प्रू प्रेरणे। 11 लिप उपदेहे। 12 ओव्रश्चू छेदने।

कस्मिन् शाल्मलिपादपे निखातां गणेशप्रतिमामालोक्य कृततत्परिणूति[1] तन्मूले परिश्रान्त मनुपाविशम् । कृतञ्च मनसि, यद् धताल्पवृत्तान्त स्वामिने निवेद्य न मयोचितमाचरितम् । एव पारस्परिकपार्थक्येऽपराधिनमात्मानमालोच्य निराहारो देवस्याग्रेऽध्रुव देहमिम परित्यक्तुमध्रुवम्[2] । गतासु चैवमबहुतिथीषु तिथिषु तेनैव पथा कश्चित्पथिकोऽपथीत् तस्यैव तरोश्छायायां च क्षण विश्रम्य 'किं त्व पुत्रात्र ग्लानमुपस्तिष्ठसि ? किमिच्छ[3]तीति भवान् ? किं मिच्छ[4]ति भवन्तम् ? इत्थ निरवध्नात् । तन्निर्बन्धेन च यथावत्स्ववृत्तान्त विनिवेदितवन्त मां स वृद्धपथिकः 'न धीरेषु भवादृशेषु एवमात्मग्लानिहेतुभूतविकारा शुम्भ[5]न्ति । धीरोद्योगिना हि सर्वे मनोरथा यथासमय स[6]मुम्भन्ति इति नापदि ते स्वधैर्यम् उज्झन्ति ।' एवमुक्त्वा सम्बोधिका विविधा कथाश्च कथयित्वा मरणान्मां निवार्य यथेच्छम् अविच्छायीत्[7] । [ इति तुदादय ]

मित्रवियोगजन्मतामिस्रावरुद्धबुद्धि' क्विन्तु, सुगृहीतस्नेहोपदेशप्रदीपोऽप्येव खि[8]न्ते, यस्सर्वमुपदेश्य विद्वानपि न स कृत्याकृत्य विन्ते[9] । ज्ञानप्रकाशो हि न तस्य स[10]मुच्छृन्ते इति प्रियाप्रियतरमपि स [11]परितृन्ते । अत

प्रियापार्थक्ये (रुधादय)

कथ मां विधिर्मम प्रभुणा सयुनक्तु[12] येन स पुनरप्यस्मान् पूर्ववत् [13]सम्भुनक्तु इति चिन्तानिमग्नोऽह युष्मान् अन्विष्यच्चटव्या स्तवाभिलषितामुज्जयिनीम् [14]आञ्जिपम् । पर सापि मे तत्र सयोगम् अवर्जीत्[15] । एतच्च नैराश्य स्वान्त मदीयम् अभिनत्[16] इव, शरीरञ्च प्राणेभ्य अविनक्[17] इवेति भवदनवाप्त्यवर्द्धमानसगतिरतिश्रान्त[18] एकस्या स्त्रिय गृह प्रदत्तभोजनावासवक्षोऽह वासाय प्राविशम् । तत्र चावाप्तशयनासन क्षण

---

१ णू स्तवने । २ ध्रु गतिस्थैर्ययो । ३ 'मान्तप्रकृतिक्सुयन्तादव्ययाच्च क्यच् न' इति किम् शब्दात् क्यचो निषेध । ४ मिच्छ उत्क्लेशे । ५ शुम्भ शोभार्थे । ६ उम्भ पूरणे । ७ विच्छ गतौ ( 'गुपूधूपविच्छ०' इत्यायप्रत्यय' )

( इति तुदादय )

❀ रुधादय' तनादयश्च ❀

८ खिद दैन्ये । ९ विद विचारणे । १० उच्छृदिर दीप्तिदेवनयो । ११ उत्तृदिर हिंसानादरयो । १२ युजिर योगे । १३ भुज पालने । १४ अञ्जू व्यक्तिम्रक्षण । १५ वृजी वर्जने । १६ भिदिर विदारणे । १७ विचिर पृथग्भावे । १८ रुधिर आवरणे ।

सुप्त प्रबुध्य च यावत्कौतुकाभिभूतस्थितोऽवलोकयामि तावत्सा स्त्री गृहाभ्यन्तर भूमिम् औनैत्, मुष्टिपरिमितान् यवाँश्चादाय मन्त्रोच्चारणपूर्वकं समन्तात्तान् अवपत्, तत्क्षण एवामुञ्चिद्य जातान्, फलितान्, पक्वान्, लूनान् कपाल चैकस्मिन् भ्रष्टान्, अवहत्ताँश्च तान् सद्य अपिनट्ट सक्तुरूपेण च व्यशिंनट्। ताँश्च सक्तून् एकस्मिन् भाण्डे सन्स्थाप्य मुष्टित्रयपरिमिताँस्तेभ्य समादाय कांसपात्र्यामेकस्या निधाय अद्भि समस्कार्षीत् पिधानेनैकेन च तान् पिधाय गृहञ्च सुव्यवस्थ विधाय स्नानार्थं गृहान्निरयासीत्। एतत्सर्वं तत्कृत्य मदीयस्वान्ते निरतिशयाँ विस्मितिम् औतनिष्ट येन चाह ताँ शाकिनीम् अमनिषि सत्वरञ्चो त्थाय सक्तुभाण्डतस्तावत एव सक्तून् समुद्धृत्य सुरक्षितमकर पूर्वं पिधाने मस्थाप्य कांसपात्र्या सक्तून् सक्तुभाण्डे निक्षिप्य पिधानस्थापितसक्तून् पुन पूर्वपात्र्यां कृत्वा तथैव तावतीभिरेवाद्भिरम्युषय यथापूर्वं पिधाय शयनीयेऽभ्रायत निषि। स्नात्वाऽऽगता च सा मामुत्थाप्य पात्र्या सक्तून् अशनाय मह्यम् अवनिष्ट स्नय चाज्ञातमकृत यत्स्वया तस्मात्सक्तुभाण्डाद् गृहीत्वा अक्षणोत् इति भुक्तेषु तेषु सक्तुषु सा तत्क्षणमेव छागी समपद्यत। ता तथाभूतामवलोक्य तदीय मवं कृत्यञ्च प्रत्यभिज्ञाय मदीयोऽमपाग्नि समधिकम् ऐर्धं येनाह ताम् एकस्मै सौनिकाय अक्रैषम्"। [ इति रुधान्य तनादयश्च ]

परेद्यवि सौनिकपत्नी मामुपेत्य अगुध्यात् यत्र मदीया सखीम् अभ्यावी अतस्तस्य फलमवश्य त्व लप्स्यसे। पुन तया तर्जितोऽह तत पुरी बहिर्गत्वा , समन्ताद्विस्तृतशाखस्यैकस्य न्यग्रोधशाखिनो मूले श्रान्तोऽश प्रियापार्थक्ये यिपि। तदैव योगिनीदुष्टा सौनिकभार्या मामुपेत्य तथासुप्तस्य (क्र्यादय) मम गले सूत्रमेकम् अबध्नात्सीत्। तथाकृत्वा गताया च तस्यां यदाह प्राबुधि तदा स्थितस्तत्रैरह मयूरवत् प्रासमा

१ उन्दी क्लेदने। २ (डु वप् बीजसन्ताने)। ३ पिष्लृ सञ्चूर्णने। ४ शिष्लृ विशेषणे। ५ डु कृञ् करणे (उपात् प्रतियत्न)। ६ (तनु विस्तारे)। ७ (मनु अवबोधने)। ८ (षणु दाने)। ९ (तृणु अदने)। १० ञि इन्धी दीप्तौ। ११ डु क्रीञ् द्रव्यविनिमये [ इति क्र्यादय तनादयश्च ]

क्र्यादय

१२ गुध रोषे। १३ बन्ध बन्धने।

रमानमपश्यम्। तत कतिचिद्दिनानि इतस्ततोऽत्युद्विग्नोऽहमभ्रमिपम् इत्येक स्मिन् दिने शौनिक एको जीवन्त माम् अग्रहीत् भिल्लराजप्रतीहारमुख्यायास्मै चण्डकेतव च समुपाहार्षीत्। तपस्वी मामवलोक्य अपूर्वोऽय मयूर इति क्षिप्रम् अप्रैषीत। मदुपयुक्तेन च स्वादीयसा भोज्येन प्रोपित माम् अप्रीणीत्, मनोरञ्जकक्रीडनकरूपेण चैकस्मिन् सुन्दरे पञ्जरे समतिष्ठिपत्।

अथेह दैवानीतस्य मम कण्ठसूत्रकममुच इति पुन समयो नौ अक्षौणीत् अतो न चिरादस्मान् निर्गणीयाव। रात्रिंचर्याया दशकान् पार्षोऽय प्रतीहार स्वरहस्यभेदभिया प्रमीणाति स्वञ्चास्य रात्रिचर्यामर्यादर्शी इति सर्वमस्याचरणरहस्य जानासि। अतो योगिनीनिर्मितमेतत्सूत्र स्वकण्ठे सिनीहि मयूरीभूय चामुना गवाक्षेण बहिर्निर्क्रमणीहि। तत समुच्छ्रितास्तव कण्ठात् प्रसारितभुजोऽह तत्सूत्र मोचयित्वा आत्मन कण्ठे भन्त्स्यामि तद्वदेवाहमपि च द्रुतमनुद्रोष्यामि तत्र च त्वया मम सूत्रे मुक्ते आवा प्रकृतिस्थौ भविष्याव। द्वार हि बहिरर्गलितमिति ततो विनिगममावयो विष्कभ्नाति अतो गवाक्षमार्गेणैवाव योगमन श्रेय।

चतुरस्य भीमपराक्रमस्य युक्तिरिय राजपुत्र निरतिशयम् अप्रीणात् इति तत्कथनानुसारेण स ततो निर्गत्य मन्त्रिणा सह सचिवद्वय स्वावासमागात्। तत्र च प्रहृष्टास्ते सर्वेऽन्योन्यवृत्तान्तवर्णनैस्ता निशामनैषु।

प्रात मायाचतुर्भिल्लराजो निजप्रतीहारेण चण्डकेतुना सह मृगाङ्कदत्तमुपागाजीत्। राजपुत्र विनोदयन् 'एहि, अक्षैर्दीव्याम' इति चावादीत्। एतच्छ्रुत्वा मृगाङ्कदत्तस्य सखा श्रुतधिरभाषिष्ट, 'किमक्षैर्देवनेन! न तत्किमप्यपूर्वम्, किं विस्मृत भवता यद् ह्य भवत्प्रतीहारोऽपूर्वस्य मयूरस्य नृत्यप्रदर्शन प्रत्यजानात। अतस्तेनैवाधुना मनो रञ्जनीयम्।' श्रुतधरैतदाकर्ण्य शबरेश्वरो मयूरानयनाय त प्रतीहारमादिक्षत्। प्रतीहारश्च तदानीमचिन्तयत् यत्किमयमह प्रमादाद्विस्मृत्य शिखिविषयिसमपि सपारहस्यसाक्षिण न तत्क्षणमक्षणिषम्।

---

१ ग्रह उपादाने। २ प्रीञ् तर्पण कान्तौ च। ३ ष्ठुप स्नेहनसेवनपूरणेषु। ४ च्यच भूतप्रादुर्भावे। ५ ऋ गतौ। ६ मीञ् हिंसायाम् ('हिनुमीना')। ७ ज्ञा अवबोधने ('ज्ञाजनोर्जा')। ८ षिञ् बन्धने। ९ द्रु गतौ। १० स्कम्भु रोधने सौत्रो धातु। 'स्तम्भुस्तुम्भुस्कम्भु०',–'ष स्कम्भातनित्यम्। ११ क्षणु हिंसायाम्, व्यापादयमित्यर्थ (क्षणन्तेति वृद्ध्यभाव)।

तदस्मात्सत्वरमस्थिरो भूत्वा तथा करोमीति विचार्य शीघ्रं गृहमगात। किन्तु प्रविष्टशिखिवेश्मा यावत पश्यति न तत्र तावच्चौरो नापि मयूरोऽदर्शि। एष व्यतिकरः प्रतीहारस्य चण्डकेतोर्हृदयम् अम्रृदनात्[1]। स च गत्वा नृपतिं व्याहरत् 'देव, रात्रौ कश्चिच्चौरो मन्ताय मयूरम् अमुष्णात्[2]। यतो हि अतीतेऽह्नि प्रगेऽहं[3] तत्रेहम् अगे, तदानीं स आसीदिदानीञ्च नास्तीति भवदग्रे मिथ्यावादीदानीमहं सञ्जातः। न मे वाक् प्रसरति किमपि वक्तुम्। निश्चप्रचमेतद् यत् स आसीत् कश्चिद् गृहीतमयूरावतारो दिव्यावतारः। अपूर्वं स आचरत्। अदृष्टपूर्वं सोऽनर्तीत्। पुरः पर्यवस्थापितजलं न स यावत् अश्नात्[4] न किञ्चित् अदनात्। पत्न्याश्च मे मम आमीदपूर्वं क्रीडनकमिति चोरितेन तेन सा नितरां क्षुभ्नाति[5]। अनुनीयमानापि शिरो धुनाति[6]। तच्चौर्यहेतुञ्च मामवगत्य भृशं भृणाति[7]। किं बहुना, वार्यमाणापि सा तथैव प्रेर्णाति[8] इति। एतदाकर्ण्य 'यस्ते बर्हिणमपाहार्षीत् स प्रसिद्धश्चौरो निशाचरश्च' इति श्रुतधिनोक्ते मृगाङ्कदत्तादींश्चान्योन्यदर्शिनो हसतो वीक्ष्य मायावटुः किमेतदिति पृच्छन् तान् निरकुष्णात्[9]। ततो मृगाङ्कदत्तो रात्रौ प्रतीहारमेलनमारभ्य भीमपराक्रममोचनं यावत्प्रतीहारवृत्तान्तं शबरेन्द्राय शशंस।

*तथा च तत्र प्रतीहारो राजपत्न्या गृहं गच्छन् यथा मृगाङ्कदत्तम् अभ्यचीत्,* यथा च तत्र गत्वा कामुकः स राजमहिषीमचीकमत, शस्त्रकलहं या व्यधात्, यथा च स्वकीयप्रतीहारगृहमाप्तिर्भीमपराक्रममुक्तिश्चेत्येतत्सर्वं तथा शबरेन्द्रम् अश्लिशत् यच्च्वलत्कोपाग्निपरीताङ्गः स प्रतीहारमुद्दिश्य निरकुषत्[10] अविनीतां राज्ञीं मञ्जुमतीञ्च तदानीमेव स्वदेशाद् व्यौच्छत्[11]।

मृगाङ्कदत्तश्चाथ शबरसत्कृतः, शशाङ्कवत्यधिगमाय यद्धोद्यमोऽप्यवशिष्टमन्त्रिसङ्गमसव्यपेक्ष, पुलिन्दपल्ल्यां बहूनि दिनानि निनाय। [ इति क्यादयः ]

एवं भिल्लाधिपतेर्मायावटोर्गृहे तिष्ठति विमलबुद्ध्यादिमहिते मृगाङ्कदत्ते,

---

१ मृद क्षोदे। २ मुष स्तेये। ३ प्रातःकालेऽहं तद्गृहमगच्छम्। ४ अश भोजने। ५ क्षुभ सञ्चलने ( क्षुभ्नादिषु च )। ६ धूञ् कम्पने। ७ भृ भर्त्सने ( 'प्वादीनां ह्रस्वः' )। ८ पृ आभीक्ष्ण्ये ( पौनःपुन्येन तथैव करोति )। ९ क्लिशू विबाधने। १० कुष निष्कर्षे ( 'निरः कुषः' इति वेट् )। ११ ( उच्छी विवासे )। [ इति क्यादयः ]

समेत्यात्मीयश्चमूपतिरेकदा शबराधीश व्यजिज्ञपत् यत्त्वदाज्ञापिता भगवत्या उपहार मार्गयमाणा वय पुरुपमेक तादृशम् आपिवाम । स

प्रियापार्थक्ये (क्षुराद्य) चास्माक वीरयोधाना शतपञ्चकन असंमङ्ग्रामत, बहूँश्च अचखण्डत इति दण्डप्रहारविवशीकृतोऽस्माभि न इहानीत'।

तदाकर्ण्य पुलिन्देन्द्रस्त पुरुषमाशु प्रवेशयितु दर्शयितुञ्चादिदे शेति गण्डसिन्दूरसम्पृक्तस्तबकोन्मत्तयद्वकरटीव, शस्त्रक्षतक्षरदसृगाक्तगात्र, पाशैर्विबाधितं स यावत्प्रवेशितस्तावन्मृगाङ्कदत्तस्त निजमन्त्रिण गुणकर प्रत्य भिज्ञाय प्ररुदन् धावित्वा कण्ठे अजगृहत । भिल्लेन्द्रश्च तन्मित्रेभ्यस्त गुणाकर मवगत्य निजप्रभुपादलग्न तमतिमहो भृशम् असंमामत् स्वनिकेतनञ्च ससङ्केत्य, विविक्ते निनित्ते च तस्मिन्, बद्धव्रणपट्टक तमगदङ्कारभोक्तपथ्यै पानभोज नैश्च अवेवासत् । इत्थ समाश्वस्त त स्वमन्त्रिण मृगाङ्कदत्त ममागत्य, 'सखे, कथय कस्ते वृत्तान्त' इति तमन्वयुङ्क । तदाकर्ण्य रणस्वर्गुणाकरो गुणाकर श्रण्वसु सर्वेषु स्वकीय वृत्तान्त सम्पुपकेतयितुम् एवमुपाक्रमत— ......

'नागस्य शापेन भवद्भ्यो विरहितोऽह मोहात्सुदूर तामटवीं भ्रमन्नपि न किञ्चिद् अचीविदे[12] । क्वचिद् रयंणम् अचिच्छिद्रत, इतरत्र भवद्गवेषणश्रमसोह आन्दर्धत् । इत्थ नितरा दु खित चिरादवाप्तबुद्धिरहम् अचिचिन्तम्[17], 'अहो दुरिदा चितस्य वेधसोऽपूर्वो विलास' । यो हि मृगाङ्कदत्तो हर्म्यतलस्थितोऽपि खिद्येत स सन्तप्तसिकतायामस्यामटव्यां पदर्यमान कथ भवत् । कां वा गतिं तेऽस्मद्वयस्या प्राप्ता' स्यु । इत्यमन्तर्मुहुर्मुहुर्भावयन्, विन्ध्यवासिनीं दैवादवाप्य कृतान्तसद नोपममहर्निशोपहारीकृतानेकजीव देव्याभवन प्रविष्ट यथोपलब्धोपचारैर्देवीमहम् अमंमहम् । अपश्यञ्च तत्रैकमात्मोपहारिणं कण्ठान्तर्गतनिस्त्रिंशहस्त पुरुषशवम् ।

---

❀ क्षुराद्य' ❀

१ ज्ञप ज्ञाने ज्ञापने च । २ मार्ग अन्वेषणे । ३ आप्लृ लम्भने । ४ सग्राम युद्धे । ५ खडि भेदने । ६ यम संयमने । ७ गृह ग्रहणे । ८ साम सान्त्वप्रयोगे । ९ सङ्केत आमन्त्रणे । १० वास उपसेवायाम् । ११ केत श्रावणे । १२ विद् चेतनाख्याननिवासेषु । १३ री गतिरेषणयो (रेषण वृकशब्द )। १४ छिद्र कर्णभेदने । १५ गवेष मार्गणे । १६ अन्ध दृष्ट्युपघाते । १७ चिति स्मृत्याम् । १८ पद गतौ । १९ भुवोऽवकल्कने (अवकल्कन चिन्तनम् )। २० मह पूजायाम् ।

कुर्यात्'। एवमुक्त्वा राजपुत्रः शृण्वंस्तत्रालपितोऽतिष्ठत्। प्रचण्डशक्तिस्ततो वारणं तमपृच्छत् 'महात्मन्, को भवान्? कथं वा ते गजत्वम्? कथं च समदस्यापि ते निर्मदा वागेषेति?' एतदाकर्ण्य स निःश्वासमामूलात्तं स्वकीयं वृत्तान्तं वर्णयितुं गजो जगाद—।

'पुरा एकचक्रायां नगर्यां श्रुतधराभिधो राजाऽभूत्। सिंहासनमारोहति च यस्मिन्, यस्य शक्ति, षाड्गुण्य, त्रिवर्गं चारातयोऽपि अचीकृतन् ( अचिकीर्तन् ) समुदिते च यस्य तेजोविभाकरे भीतिचाकचिक्याभिभूतानि विपक्षिचक्षूंषि अचीकणन्, दुर्हृत्कुमुदानि च अयमन्त्रन्। य प्रजासु सर्वथाऽनाश्रितान् अपपक्षन्। अधमम् अदुद्रुलत्। चौर्यम् उदमूमुलत्। शौर्यम् अपपर्णत्। वधम् अवीवधत्, प्रजाभ्यश्चेत्थं सर्वथा सुखसौविध्यम् अबीभजन्।

तस्य चेत्थंभूतस्य धर्मध्वजस्य, राजनीतिपरायणस्य च राज्ञो द्वयोर्भार्ययोः शीलधरसत्यधरनामानौ द्वौ सुतावजनिषाताम्। शीलधरस्तयोर्ज्येष्ठः सत्यधरश्च कनिष्ठः। कनीयांस्तयोः यौवनमदोत्सिक्तः एवम् अजगर्वत यत्सोऽर्हानपि अजगर्हत्। न दयावान् किञ्चिद् अजीगणत्, न दीनेभ्यः पणमपि व्यशिश्रणत्। दायादैरन्यैः सह तद् व्यवहारं स्वाल्प्याल्पं दिवं याते एव भूपतौ स स्वौरसं ज्यायांसञ्च शीलधरमपि राज्याद् व्यौच्छिच्छत्[14]।

अमर्षेण चैतेनातिसमुद्विग्नः शीलधरो वनं गत्वा घोरेण तपसा सन्तोषितं शिवं वरार्थम् प्रार्थयत यदहं गन्धर्वो भवेयं येनाम्बरचरो भूत्वा दायादं सत्यधरमवहेलया हिंसयेयम्[16]। एतदाकर्ण्य शम्भुस्तमादिशद् यदतत्ते भावि किन्त्वयं शत्रुस्ते—स्वयं मृत इति स राढाया पुरि भूपतेरप्रमटस्य समरभटो नाम पुत्रो भूत्वा जनिष्यते। तस्य च त्वं भीमभटो नाम विमातृजोऽग्रजो भूत्वा तं निहत्य

१ कृत मशब्दने ('उपधायाश्च')। २ कण निमीलने। ३ यत्रि सकोचने। ४ पक्ष परिग्रहे। ५ हुल उत्क्षेपे। ६ मूल रोहणे। ७ पर्ण हरितभावे। ८ वध संयमने। ९ भज विश्राणने। १० गर्व माने (आगर्वीयत्वादात्मनेपदम्)। ११ गर्ह विनिन्दने (आधृषीय)। १२ गण सख्याने (द्र० गण)। १३ श्रण दाने ( प्रायेणायं विपूर्वः )। १४ उच्छी विवासे। १५. अर्थ उपयाच्ञायाम् ( आगर्वीयत्वाश्रित तङ् )। १६ हिसि हिंसायाम् ( आधृषीयः )।

राज्य का[1]रयिष्यसि किन्तु यतो हि त्व साम्प्रतम् अत[2]पसी इति मुनिशापात्पद भ्रष्टो जातिस्मरो व्यक्तवाग् धन्यो वारणो भविष्यसीति। यदा च त्वमवसन्नमतिथिं स्ववृत्तान्त सू[3]चयिष्यसि तदा गजत्वान्निर्मुक्तो गन्धर्वो भविष्यसि। अतिथिरपि च त्वया तदोपकृत सम्पत्स्यते। एवमादिश्य तिरोभूते भव शीलधरश्चिरतप क्षीणा स्वतनु विभाव्य गङ्गाया ताम् पात[4]यति स्म।

अत्रान्तरे पूर्वोक्तायोग्रभटमज्ञाय राज्ञे मनोरमया मनोरमाख्यया पत्न्या मसुख निवसते देशान्तरागतासको नाम नर्तक समागत्य यत्र स्त्रीरूपिणा हरिणा दैत्यानाममृत हृत तन्नाट्यप्रयोग प्रादर्शयत। तस्मिश्च नृत्यन्तीं नर्तकस्य तनया लास्यवतीं नृपोऽवलोक्य स्वरूपविशोभितविश्वे, विश्वे तद्रूपे अलुलु[5]भत् इति नृत्यान्ते प्रवितीर्णतरिपसृप्रचुरधनस्तत्कालमेव स कन्यां स्वकीयमन्तःपुर प्रा[6]वि-विशत। विहितोद्वाहया च तत्र तया नर्तक्या लास्यवत्या तन्मुखासक्तलोचनस्तस्थौ।

एकदा सा यजुःस्वामिनमन पुरोहितम् अच[7]कथत यत्पुत्रो मे नास्तीति पुत्रे छया त्व मामत्र सन्[8]नयस्व। तदाकर्ण्य पूर्वाराधित पुरोहितस्तथेति प्रतिज्ञाय विद्व द्भिर्ब्राह्मणैर्विधिवत्तामिष्टिम् अचीक[9]रत् मन्त्रपूत चरुञ्च द्विधा विभाज[10]यन् अग्न्य भाग ज्येष्ठाम्, शेषञ्च लास्यवत्यै प्राश[11]यत्। ततश्चोभयो राज्योरुदरयो पूर्वोक्त शीलधर-सत्यधरनामानौ पुत्रौ समाजग्मतुरिति समय प्राप्ते महीपते पाणिगृही ती भार्या मनोरमा कल्याणलक्षण पुत्र प्रासविष्ट। तत्प्रसवकाले च दिव सुस्पष्टा भारती समुदभूद् यदय भीमभटो नाम विख्यातकीर्तिनृपोऽजायतेति।

अन्येद्युर्लास्यवती चापि सुतमसूतेति पिता त समरभटनामान कृत्वा सुतद्वयोरन्नसमारोहे प्राचुर्येण यथाविभवम् अविव्य[12]यत्। यथासमयकृतयथा-वश्यकसंस्कारौ महाह्लादोल्यान्दोल्यमानौ लाल्यमानौ पाल्यमानौ च तावुभावपि समधिकसौकुमार्यौ कुमारौ कौमारे कुमार[13]यमाणौ राजप्रासादेषु अवधिषाताम्।

---

१ कृधातो स्वार्थे णिच्। २ तपोऽचर इति विग्रहे 'कर्मणो रोमन्थ तपोभ्या वर्तिचरो' इति क्यङि ( तपस परस्मैपदञ्च ) ( क्यस्य विभाषा )। ३ सूच पैशुन्ये। ४ पत गतौ ( वैभाषिकणिजन्त )। ५ लुभ विमोहने। ६ विश प्रवेशने। ७ कथ वाक्यप्रबन्धे। ८ सन्न सन्तानक्रियायाम्। ९ डुकृञ् करणे। १० भाज पृथक्कर्मणि। ११ अश भोजने। १२ व्यय वित्तसमुत्सर्गे। १३ कुमार क्रीडायाम्।

रमहितानवगच्छसि तदर्केऽस्तगतेऽस्मिन्निदिष्टसमयेऽलक्षितो निर्गत्य स्वसिद्ध्यै मातामहगृहमिहि । एन पार्दयद्भिस्तै[1] सद्गल स्वर्णपूर्णप्रेषित भाण्डमत मद्ब्रस्तेन गृहाण ।

तस्माद्द्विजादेतदाकर्ण्य तथेत्यभिनन्द्य च गृहीततरस्वर्णसद्गलभाण्डो भीम भट प्रदत्तमातृवाचिकानुरूपप्रतिवाचिक त द्विज व्यसर्जयत् । अस्तमिते चार्के कृपाणपाणिस्तत्तुरङ्गमपृष्ठमध्यममध्यारुह्य गृहीतहेमरसेन पृथग् अश्वयता[2] शङ्खदत्तेन सह श्वेतयमान[3] तत प्रातिष्ठत ।

इति कौमुदीकथाकल्लोलिन्यां गणनिर्देशात्मक षष्ठ कल्लोल ।



---

१ वद् सन्देशवचने । २ अश्वेनातिक्रामता ('तेनातिक्रामति') इति णिजन्तात् शतृप्रत्यय । ३ श्वेताश्वेनातिक्रामतीति ( श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकल्लोपश्च ) इति णिजन्ताच्छानच् ।

# अथ प्रक्रियानिर्देशात्मकः सप्तमः कल्लोलः

इत्थं ततो निर्गत्यातन् सवयस्यो राजपुत्रोऽतीतदविष्ठाध्वा निशीथे महच्छ्रवणमेकमापत्। तत्र च सवयस्यस्य तस्य पतद्वाजिखुरक्षुण्णशरशब्दप्रबोधितम् उद्गर्जच्छावके सहोत्थाय सिंहमिथुनमेकमश्वौ नखैररो
(ण्यन्तप्रक्रिया) प्रियापार्थक्ये विदारमुपचस्कारेति समिश्र सोऽवारुह्य यावत्तुरगाववलोकते तावद्विगलितास्रौ तावुभौ भूमावपतताम्। तदवलोक्य विषण्णो भीमभट, 'काले हि व्यसनप्रसारितकरो गृह्णाति दूरादपि'–'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता'–तथा–'वामे विधातरि कथं विपदां निवृत्तिः'–इत्यादि गालोडयमान[1] शङ्खदत्तमभाषत यद्विरद्वारम्वजनात्पलायिता अपि वयं विरुद्धाद्विधेः पलायितुं कथं शक्नुम इति स एषहैकान्ते कान्तारेऽश्वमात्रसहायानप्यस्मानसहायान् अबीभ्रमत[2]। अतर्कितोपनतैरेभिरास्मव्याघ्रप्रसरनखरक्षुरैरस्माकमाशातन्तुप्रतानवितानान् अलीलवन्[3]। यतो हि, एतावद्दूरमस्मान् ययो साहाय्यम् अशूशवत्[4] तौ हयावपि अमृपातामित्यमृषा ता शिवोक्तिं कर्तुमिवानीं क सहयुञ्ज्यात्। कथमधुना नैशेऽस्मिन् तमसि पन्थाः नियमरण्याऽटवी गम्या! एतदाकर्ण्य तत्सुहृच्छङ्खदत्तोऽब्रवीत्, 'वयस्य, धैर्येण विधुरोऽपि विधुर्जेतुं शक्यते इति नास्माभिरधैर्यैर्भाव्यम्। एहि, समारूढधैर्यावावामग्रे व्रजाव इति'। एवं वादिना शङ्खदत्तेन सह शनैः शनैर्व्यतिक्रान्तकान्तार शरपाटितपादः स राजसूनुस्तां विभावरी पर्यजीगपत्[5]।

प्रातरुदयाचलसानूदितभानुर्निविडतरलताध्वा तच्छन्नान् मार्गान्, तद्विरहिताटवीप्रदेशांश्च समचीचकासत[6]। सिंहादिसङ्कीर्णायामटव्यां गमनानुषङ्गप्रासैरन्यैः कतिपयपान्थैः सह पुरोगच्छन् मध्याह्नेऽध्वक्लममपनिनीषुः, सिस्नासुः, पिपासुश्च रानसूनुः शीतलसलिलसलीलैर्लसतेति[7] नातिदूरं गत्वा स तपस्विजनोटजसङ्कीर्णं जह्नुकन्यापुलिनं स्वसहगामिभिः प्रापिपत्[8]। शीतैः स्वादुभिश्च गाङ्गैर्वारिभिस्तत्र स्नानश्च शङ्खदत्तानीतवन्यफलमूलादिस्वयमभक्ष्य यानपि समाशिशत[9]। तदनन्तरं तत्रोत्तरीतुमशक्यायाः पयःपूरपूर्णपुलिनायाः समुच्छ्रितैस्तरङ्गहस्तैरसकृन्निवारयन्त्या इव जाह्नव्याः कूलेन गत्वा विजनोपजाह्नवस्थमेकत्र स्वाध्यायसलग्नमाश्र

---

१ 'सेनासिलक्षणपत्रप्रसर०' इति णिच्। २ ३ 'ओः पुयण्ज्यपरे'। ४ 'णौ च सश्चङोः'। ५ 'अर्तिह्रीव्ली०'। ६ 'नाग्लोपिशास्वृदिताम्'। ७ ईर्ष्य ईर्ष्यायाम्। ८ आप्लृ व्याप्तौ लम्भने। ९ अश भोजने।

तथा वञ्चापितं[1] अतर्कितं क्वाप्यगात्। तदवलोक्य मातृभयभीतोऽहं तदनुकूलमेव सर्वं विधातुं स्वभार्यां विशेषेण निरदिशमिति मन्नीतया तयाऽपि सा सर्वं स्वानुकूलमेव असीसधत्[2]। एतेनापि किन्तु मम भार्या कलहप्रिया स्वश्वश्रूं न कथमपि अतूतुपत्। तत्तूष्णीम् अवस्थानम् निजावज्ञानमिव, तद्दैन्यालाप कैतवकलाकलापमिव, प्रत्यायनञ्च स्वदोषविष्यापनमिव[3] मन्यमानायास्तस्या दुराशयो न शुनः पुच्छ इव वृश्चिकदंश इव वा निजकौटिल्यम् अरीरपत्[4]। अत सा तद्विरुद्धाचरणैः तां तथा अपीपिडत्, यदस्याधिक्यवैवश्य तां क्वापि अरीरदत्[5]। नाद्याप्यहं जाने तदद्य क्व ताम् अचीखृतत्।

घटनयाऽनया नितरां खिन्नोऽहं विदेशं गन्तुमुत्सुकोऽभवम्। किन्तु ज्ञातयो मिलित्वा पुनरङ्गनामेकां मया व्यवीवहन्। फलतो मात्रा मे भापिता सन्तापिता च सापि भार्या पाशेनोद्बध्यात्मानम् अजीर्नतत्। एतेन ततोऽप्यधिकं खिन्नोऽहं विदेशं गन्तुमुद्यतस्तदानीं, निवारयतो बन्धून् स्वभावदुष्टता पितृप्रवासनादींश्च कारणरूपेण सर्वम् अचमापम्। किन्तु यदाहं तान् प्रत्याययितुं नाशकम् तदा युक्त्या कारणा दारुणा पुत्तलिकामेकां निर्माप्य नृपैव तामहं पुनः पर्यणयम्। ताञ्चानीय सागलेऽन्तर्गृहेऽन्यत्र अतिष्ठिपम्। कर्मकरीरूपेण च तस्या एकां सेविकां पृथक् न्ययूयुजम्। अम्बामथावद् यन्नवोढापाऽभीता श्वश्रूवाराधनादिकं न जानाती तीयं पृथगिह तिष्ठतु आवाञ्चात्र पृथगास्वहे। इत्थं मातृकौटिल्यस्य मदीया वाधा वजनप्रत्याययिषया रहस्यमेतत्सर्वं मया न्यगूहयत्।

दिनेषु यातेषु सागरेऽन्तर्गृहे वर्तमानां कपटस्नुषां तां दूषयितुं कयापि युक्त्या यदा मे माता नापपारत् तदा प्रकारान्तरतया तथा कर्तुम् अचेष्टयत् इति स्वयमेकदा दुर्मना साश्रुमनाऽऽत्मनो मूर्धानमाहत्य स्वगृहाङ्गणे रक्ताक्षा तारमाक्रन्दीत्। श्रुताक्रन्दनप्रविष्टेश्च मत्सहितैर्जनैः किमेतदिति पृष्टाऽसावित्थं सासूयं तानुज्ञापयते स्म यदियं नवीना स्नुषा समागत्य मदीयामिमां दशामकार्षीदिति

१ 'प्रलम्भनाभिभवपूजासु०', 'लियः सम्माननशालीनीकरणयोश्च'। २ 'सिध्यतेरपारलौकिके'। ३ 'शाच्छासाह्वाव्यावेपां युक्'। ४ रीङ् क्षये। ५ 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्'। ६ गत्यर्थत्वात् 'अदेरगतौ तः' इत्यनेन न तोऽन्तादेशः। ७ 'उर्ऋत्'। ८ 'हनस्तोऽचिण्णलोः', 'होहन्तेरिति कुत्वम्'। ९ 'ऊदुपधाया गोहः'। १० 'दोषो णौ'।

मरणेनैवेदानीं मम निष्कृति सम्भवति। एतच्च तद्गृह्याणा मम बान्धवानां कोप नितरा स्फावयति स्मेति ते तत्र तदानीं वर्तमानेषु किंवृत्तेष्वन्यतम प्राजी हियन् अन्यानपि च द्विग्रान् भग्नपुरपान् ग्रामीणान् आजूहवन्।

इत्थं यदा सर्वे ते पर्यष्कोर्पुस्तदा मातुर्मे तथाभूताया दशाया कारिण्या तत्रवोढस्तुपाया समीपे मया सह अगच्छन्। किंतु समुद्घाटितागलास्ते यावत्प श्यन्ति तावत्तत्र केवला काष्ठमयीं पुत्तलिकामेकामपश्यन्। व्यतिकरश्चैष तैं बस्तु गतिं निरचीचयत् इति विडम्बितात्मान विलक्षिताश्चाम्वा हसन्तो हृदयाध्यारो पितैतत्कौटिल्यप्रत्ययास्ते यान्धवा यथागत गता।

परित्यक्तदेशोऽहञ्च आम्यन्निम देशं प्राप्य दैवाद् द्यूतशाला प्राविशम्। अत्र च, चण्डभुजाख्यम् पांसुपटम्, श्मशानवेतालम्, कालवराटकम्, शारि प्रस्तरश्चेमान् तुल्यपराक्रमान् शूरान् अद्राक्षम्। 'विजितो जेतुदास स्यादिति' मिथ पण कृत्वैते सममेवैरहमदीव्यमिति द्यूते विजिता इमे मम दास्य गता। अहञ्चैतेषा गुणैर्जित स्वय दास्यमुपगत, इतीमे स्वैः सम वसता मया सर्व दु ख व्यसंस्मरन्। एवमवस्थोचितेन नाम्ना प्रसिद्धोऽत्तक्षपणकनामाऽहम्। गृहिता स्मभि सत्कुलोत्पन्नैरिहैवमेतै सह भाग्यवशान्मिलितो नियमश्चाह पूर्वोपार्जित पुण्यैरत्रभवता मिलित इतीदानीं त्वमस्माकं प्रभु।

अक्षक्षपणेनेत्थ स्ववृत्तान्ते विनिवेदिते तेऽन्येऽपि यथाक्रममात्मोदन्तानवर्ण यन्निरयानुपङ्क्तिक्याशान् तान् सखीन् मत्वा सर्वैं सह विहस्य तद्दिन नीत्वा अक्ष क्षपणकाद्यैस्तै षड्भि सह तस्मादुद्यानान्नृपात्मजो भीमभट समुद्रासमानदर्शी ताश्रुतिलकालङ्कृताननपौरन्दरीं दिशमगात्।

तैं समं तत्र तिष्ठति तस्मिन् प्रावृडुपागमत् इति विपाशा नदी महावारि पूरेण पुलिन प्रपूर्यौघप्रशान्ताम्भोधिसम्मुखीव प्रोवाह। तस्मिन् काले तेन जलौघेन समानीयात्र क्षिप्त एको महामत्स्यो गरीयस्त्वान्नदीतटे व्यासक्तोऽभूत्। त तथाभूत दृष्ट्वा समग्रया जना विविधायुधैर्विहन्तु प्रधाव्य तस्य तिमेरुदर पाट यामासु । पाटिताच्च तस्माज्जीवन्नेको युवा द्विजो निरगात्। अद्भुतेन च तेन

१ 'स्फायो व'। २ हेरचङि'। ३ 'ह्व सम्प्रसारणम्'। ४ 'समवाये च'। ५. 'चिस्फुरोर्णौ'। ६ 'रुह' पोऽन्यतरस्याम्'। ७ 'अतस्मृद्दत्वर प्रथम्रदस्तॄस्पशाम्'।

विस्मापिता सर्वे लोका कोलाहल व्यधु । तच्च सर्वं श्रुत्वा मित्रै सह भीमभटोऽपि तत्रागात्, मत्स्याद्विनिर्गतं त निजमित्र शङ्खदत्तञ्चापश्यत् इति समुपजातपरिचयौ तावविरलधाराश्रुभिरन्योन्यमुन्दयमानौ परमानन्दम् अन्वभवताम्। ततो भीमभटेन पृष्ट शङ्खदत्त सर्वं स्ववृत्तान्तमित्थमवर्णयत्—

गङ्गोर्मिवेगेन त्वद्दृष्टेरगोचरीकृतोऽहमशङ्कितमेकेन महीयसा मत्स्येन निगीर्णो महावेश्मसदृश तस्योदरं प्रविष्ट क्षुधितश्छुरिकोत्कृत्ततन्मांसमभक्षीर्जिजम्। सोऽय तिमिरद्य तत इहानीय धात्रा विनिक्षिप्त इति जनैरभिहंताद्विदारितोदरा द्यास्मादहमेव विनिगतस्त्वा याहीक प्रकाशञ्च समवालुलोकम्।

शङ्खदत्तस्यैपोक्तिर्भीमभटमन्यांश्चापि तत्रस्थान् सर्वांस्तन्निगरणेन, मत्स्योदरस्थित्या, बहिरागत्या च निरतिशय विस्मापयते स्म।

तस्मिन् देशे शङ्खदत्तेन सहेत्थ स्थिते ससुहृदि भीमभटे, नागराजस्य वासुकेर्यात्रोत्सवमय समय समायात्। अघटितघटयितृ हि विधेर्विधान यद् विदेशीयेऽपि हृदयस्थलद्वये स्नेहलतामेका जनयति, सपल्लवयति चेति भीमभट' शङ्खदत्तादि' सह मिलन्महाजन नागमुख्यनिकेतन नागराजस्य वासुकेर्दर्शनायायासीत्। दिव्ये हि यत्रत्ये वातावरणे सत्य सर्वत्र अशशासत्। सत्यपि वासुकिसहस्रफणामण्यनवरतप्रकाशे, यत्रत्यदिव्यजनहृदयानि आध्यात्मिकज्ञानदीपो दिवानिशम् अचचकासत्। सर्वो हि यत्रत्यो जनो निजशालीन्येनात्मचारित्रमालिन्यम् अममार्जत्। दुराचारविचारनि श्वास एव च यत्रत्यजनताहृदयम् अवोवैनत। दुर्व्यसनवासनासन्ततिश्च यत्रत्यो जन हृत्स्थलेष्वेव असुषुपत। परगुणपर्यालोचनदर्पदि च निजबुद्धिम्, अशीशयत। परसन्तापश्च यत्रत्यजनान्योन्यस्नेह न व्यलीलयत्। ना माध्याचारो धस्त्राभरणाद्याडम्बरै लापयतेस्म। सबलश्च न दुर्बलम् वञ्चापयतेस्म। न कोऽपि कमपि कटूक्तिं वोदलीलपत्।

भीमभट एव भूते प्रदेशे प्रासादाभ्यन्तरस्यां माल्यदामभिभृताम्, पणारत्नप्रभापुञ्जै आरक्तारुणैरिव चिताम्, विषाग्निधूमपटलैश्च नीलोत्पलैरिवावृताम्, तद्वासुकिमूर्तिं दृष्ट्वा तां तत्रत्यैर्यथावासपत्रपुष्पफलादिभिः आर्चिचत्। स्तोत्रैश्चोपाशुश्लोकत्। एतस्मिन्नेव समये राज्ञो लाटेश्वरस्य चन्द्रादित्यस्य कन्या, कुवल

१ 'धो विधूनने जुक्'। २ 'स्वापेश्चङि'। ३ 'शाच्छासाह्वाव्यावेपां युक्'। ४ 'लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने'।

यावत्पा जाता शोभनसर्वाङ्गी कुरङ्गीदृग्, हंसावली तत्र समायात्। सा च दिव्यानुसारिभि स्वकीयैरङ्गै कटाक्षविक्षेपादिभिश्च भीमभटममोहयत्। जगत्यौन्न्यतस्कर सोऽपि च तिर्यङ्नयनवर्त्मनाऽन्त प्रविश्य तस्या धैर्यहृत्कोषम् अचूचुरत्[1]। [ इति ण्यन्तप्रक्रिया ]

एवभूते व्यतिकरे सा गुप्तविसृष्टाप्तचेटीमुखेन तन्मित्रेभ्यश्च तद्युवकनामास्पदादिक जिज्ञासते[2] स्म, प्राप्ततत्परिचया च तदनुसन्नद्धहृदयाऽपि विवर्तितमुखी यथा कथञ्चित् स्नात्वा परिजनैर्नीयमाना स्वमन्दिरञ्च जिगमिषति[3] स्म। प्रियाप्रेमपाशबन्धस्खलद्गतिर्भीमभटोऽपि च सखिभि सह स्वावासमीप्सति[4] स्म।

प्रियापार्थक्ये ( सन्नन्तप्रक्रिया )

गते च तस्मिन् भीमभटे राजकन्यका हसावली राजप्रासादमासाद्य स्वेप्सित[5] सन्देश दत्त्वा स्वकीया दूतीं तस्मै व्यसर्जयत्। सा चापि तत्र गत्वा एकान्ते हसावलीविषयकमनुराग भीमभटमुक्तवती सोऽपि च 'नक्तमन्त पुरमभ्युपगत्य तां सम्भावयिष्यामि, विद्याच्छन्न विशन्त नहि कोऽपि मामवलोकयिष्यति' इत्थ तां प्रतिसन्दिदेश।

प्रदोषसमये दिव्याभरणभूषितो भीमभटो गङ्गावितीर्णविद्याया आनुलोम्येन पाठतोऽदृश्यीभूय प्राग्विविक्तीकृत तस्यान्त पुर समाविश्य हसावलीम् अदिदृक्षिष्ट[6] इति प्रातिलोम्येन ता विद्या पठित्वा तस्या राजपुत्र्या दृश्यता गतो गान्धर्वविवाहविधिना हंसावलीं स्वभार्यां विधाय तयैव सह तां रात्रिञ्च नीत्वा पुनर्नक्तमायास्यामीति तामाश्वास्योपसि तत सपद्यपद्यत।

प्रातरन्त प्रविष्टा महत्तरा अन्त पुरे सम्भोगलक्षणैर्युक्ता हसावलीमवलोक्य

---

१ निवृत्तप्रेषणाण्णिच्। [ इति ण्यन्तप्रक्रिया ]

॥ सन्नन्तप्रक्रिया ॥

२ ज्ञा अवबोधने, 'धातो कर्मण समानकर्तृकादिच्छायां वा', 'ज्ञाश्रुस्मृदृशा सन'। ३ इण् गतौ 'सनि च' इति गमादेश। ४ ऋ गतौ स्मिपूङ्रञ्ज्वशां सनि'। ५ आप्लृ व्याप्तौ 'आप्ज्ञप्यृधामीत्', 'अत्र लोपोऽभ्यासस्य'। ६ दृशिर् प्रेक्षणे 'ज्ञाश्रुस्मृदृशा सन'।

पर चस्ये । वशोऽपि तु यत्तोऽह पितृवत्सलतम नूनमहाय त्या तन्निकट निनीषा मोति परिगणितैरेव दिवसैस्तत्रागत मामवयुध्य महायात्रायानिको बुभुषु कर्तव्य विचार-सोपानपरम्परां तितनिप । अचिरेणैव च पितृसामीप्यमुपगत्य तस्मै सुतसान्निध्यसुख सिसनिष ।

एवमुक्त्वा विसर्जितप्रैष्यो भीमभटो जिगीषया समनद्धवर्मागणितवीरभटो दायाद समरभटम् अभ्यपिषेणयिषीत् इत्यत्युज्ज्वले तस्मिन् राजेन्दावभ्युदयाचल ममारूढे प्रवृद्धनाद सैन्यमहाम्बुधि क्षुभ्यन्तुदचलत् । तत्महयुयुक्षया प्रस्थितैर-सङ्ख्यै सामन्तै राजपुत्रैश्च महानिनदैरिव सञ्जिगसमानैर्निजस्वामित्रल समीत्सुभिर्दिशा प्रदेशा समापिपरीषिषत । सम्पतदसङ्ख्यगजवाजिजयन्यग्रा, तद्भारविदलनत्रासात्सारम्पा मेदिनी, रजोराजि-याजेन विभुशरणम् अविभेषत । समरभटोऽपि च भीमभटमेव राढाभ्यणमागतमवगत्य सवम्य, हर्म्यतलसुखान वहितोऽहित सन्नद्धसेनोऽभ्युद्गत्य युयुत्सयाऽप्रतो निर्गतो रणाय आजूहवदिनि मिलितयोरुभयो राघो शूराणां परस्परसमरकौशलम् ईर्षियिषु[11] महानाहवप्र लय प्रावर्तत ।

क्षणानन्तरमेव कुप्यत्कृतान्तदन्ताग्रदलनोत्थित इव शस्त्रसम्पातजन्मानल समुज्जृम्भमाणो नभोऽभ्याविवरोपत् । रेणुवितानां सेन्यतुमुलनादवादिता, नृत्य-त्कबन्धा च रणाङ्गणरङ्गभूमिर्व्यरुचत् । हस्तमर्मान पादयमान प्राण्यसृङ्नदी, प्लवमानप्राणिनीर प्रत्यभासीत् । न चिरादेव च शङ्खदत्तेन, अश्वपणन, युद्ध विशारदैश्चण्डभुजाद्यैश्च महाबलैर्दुर्मदैर्द्विरदैरिव धनुर्धरो भीमभट परसैन्यमहा तरूनभाञ्जयत् । तस्य सैन्ये भग्ने रथस्थित समरभटोऽतिक्रुद्धो रणाग्रौ मन्दर इवाचलोऽतिष्ठत् । तदा वारणस्थो भीमभटस्तमभिपत्य तस्य चतुरोऽश्वान् स्वशरा

१ 'इको झलि', 'सनि ग्रहगुहोश्च'। २ 'तनिपतिदरिद्रातिभ्य सनो वा इट् वाच्य'। ३ सनीवन्तध इतीट्। ४ 'अज्झनगमां सनि', 'सन्लिटोर्जे'। ५ सेनया अभियातुमैषीत्, 'सत्यापपाश०' इति ण्यन्तात्सनो लुङ्। ६ 'समो गम्यृच्छिभ्याम्' (अजादेशस्येत्युक्तेः 'अज्झनगमामि'ति न दीर्घ, नापि सडि इडागम)। ७ अधु वृद्धौ, 'सनीवन्तर्ध०', इति पाक्षिकेड भाव 'आप्ज्ञप्यृधामीत्', अत्र लोपोऽभ्यासस्य'। ८ 'इट् सनि वा'। ९ भजते सन्नन्ताल्लुङ्। १० घर्मणा सन्नद्ध। ११ 'ईर्ष्यतेस्तृतीयस्य'। १२ 'णिङ्ङ्गाश्चिरसने' इति णिङ्ङन्ताल्लङ्।

रुधिरै रणभूमिशय्यायामसूपुपत् इति निरथोऽपि समरभटो धावित्वा तोमरेण तिलृहिषया भीमभटविकटकरटिन प्राहार्षीत् । इत्थ प्रहतवाहनावुभावपि विवाहनौ भूत्वा गृहीतचर्मखड्गौ पदाती प्रामर्षणौ तौ द्वन्द्वयुद्धेनान्योन्यम् अभ्यद्युभूषिषाम् । क्षणाच्च खड्गयुद्धविशारद प्रसह्य युध्यमानो भीमभटो नर्तकीतनयस्य शिरोऽचिच्छिदत् । सम्पन्ने चैत्य तस्मिन् ससैनिके समरभटवधे, मृधे चाप्य धमिते, सिद्धचारणोद्गीयमानकीर्तिर्भीमभट सखिभि सह राढापुरीं प्रविश्य चिरप्रवासोपयातो राम कौशल्यामिव मातरमभ्यनन्दयत् । स्वयञ्च पौरैरभिनन्द्यमानो, गुणप्रियै सचिवैश्च पूज्यमान, पितु सिंहासने समुपाविशत् । तत्त अक्षक्षपणादिभ्यो निजसहायकेभ्यो बहुग्रामान् वसूनि च प्रदाय तै सह पैतृक पद प्रशासत् लाटेन्द्रसुतया देव्या हसावल्या सह चिर रममाणोऽपि सर्वां भूमिं वशीकृत्य समाहृतोत्तमराजकन्याभि सम्भोगैकसक्त, पानादिव्यसने चानुरक्त, सचिवेषु न्यस्तसमस्तराज्यभारोऽभ्यन्तराच्च निरजिगमिषीत् ।

एव सासारिकव्यसनासक्तस्य तस्य दिदृक्षया यदृच्छया जातूत्तङ्गो मुनि शापसमादेशपवित्रमकाल इव तत्राजगाम । द्वारञ्च प्राप्ते तस्मिन् मुनौ द्वाःस्थै र्जनैरावेदितोऽपि रागमत्तैश्वर्यमदान्धो नृपतिर्न तदा तदादिदरिषयाँ लेशमप्य धाधात् इति क्रुद्धो मुनिरमुष्मै राज्ञे 'मदान्धस्त्वम् राज्याद्भ्रष्टो वन्यो हस्ती भव' इति शशाप । एतदाकर्ण्य विगतमदो भूपतिर्मुनिचरणानतो दीनैर्वचनैस्त प्रासा दयत इति प्रशान्तकोपो महर्षिस्तस्य उद्दिधीर्षया इत्थ वक्तुम् अन्वजिघृक्षत् यद्विकलचक्षुषम् , प्रचण्डशक्त्याख्य नागशापावसादितमज्ञातियीभूत मृगाङ्कदत्त सचिव समाश्वास्य यदा त्व स्ववृत्तान्त प्रवक्ष्यसि तदैतस्माच्छापात्ते मोक्षो भविष्यति । गिरिशाशिष्ट, त्व तदा, गन्धर्वत्वमवाप्स्यसि, अतिथिश्च ते चक्षुष्मान् सम्पत्स्यते । इत्थमुक्त्वोत्तङ्गो मुनिर्यथागत प्रायात् । भीमभटश्च राज्य विच्युतस्तत्क्षण मुनिशापकारणो वारणो बभूव । स चाह गजीभूतो भीमभट:, त्वञ्च प्रचण्डशक्तिरित्यधुना महमोऽस्मभावयो शापमोक्ष करिष्यति ।'

---

१ तृहू हिंसायाम् , ऊदित्वाद्वेट् तेन 'हलन्ताच्च' इत्यस्याप्रवृत्ति । २ 'हलन्ताच्च' इतिसन किरवम् । ३ दृङ् आदरे, 'अग्रेहो दीर्घो नेट ' तेन 'किरश्च पयञ्च इति न दीघ । ४ भौवादिकदृभ्रधातो सनि 'अज्झनगमा सनि' इति दीर्घादि । ५ 'रुदविदमुषग्रहि०' सनिग्रहगुहोश्च', 'ग्रहिज्या०' इति सम्प्रसारणम् सन परत्वस्यासिद्धत्वाद्भपभाव ।

यया विद्याधरैश्वर्यम् अर्जञ्जिष्ट[1] तत्सम्बद्धां मयोच्यमानां कथां निजश्रुतिपथमवतारयितुं त्वम् अवधेधायस्व[2]—

'अस्ति गोदावरीतीरे प्रतिष्ठानाभिधानो देश । तत्र शक्रपराक्रमस्त्रिविक्रमसेनाख्यो वैक्रमसेनी राजा बभूव । अधर्माय कोपिनोऽपि कोऽपि नो नानन्द्यत यो यस्य राष्ट्रे साधारणोऽपि जन । राजनीतिचतुरोऽपि धार्मिकवरो यो न प्रजाना विपद पदं पदे अचङ्क्रम्यत । प्रतापशालिनो यस्य नामाकर्णनेनैवारयो रणे दुर्गंशरणं निजविजयनिराशा समासासयन्त । यदनुभावोऽरिगणयौवनयौवनश्रान्तिकविभूतिमदम् अददहत[3] । क्वचिल्लम्बितकौक्षेयकाटोपमात्रेण आहितारिहृदयभयो यद्भुजो भुजङ्ग इव सपत्नानपि विपत्नान् अददशत ।

आस्थानमण्डपगतस्य तस्य सेवार्थं शान्तिशीलाख्यो भिक्षुरेकं फलम् उपानेनीयत । स राजा चापि तत्फलमादायासन्नवर्तिन कोषागाराधिकारिणो हस्ते अ[4]सीयत ।

इत्थं व्यतीतेषु दशसु वर्षेषु फलमेकदा राज्ञे दत्त्वाऽऽस्थानतोऽपसृते भिक्षौ तत्फलं राजा रक्षिणां हस्तान्मुक्ताय दैवतस्तत्र प्रविष्टाय च क्रीडामर्कटपोतायाददाशदद्यत । स च मर्कटो यावत्तत्फलम् अशाशयते तावद्भेदिमाप्तमध्यात्तस्मात् उत्तममनर्घं रत्नमेकं निरगात् । तद् दृष्ट्वा राजा तत्फलमानाय्य भाण्डागारिकमप्राक्षीत् यद्भिक्षूपनीतानि यानि फलानि मया तुभ्यमनुज्ञिनमर्पितानि तानि त्वया क्व स्थापितानीति तच्छ्रुत्वा सभय कोषाध्यक्षो व्यजिज्ञपत् यत्तानि फलानि गवाक्षमनुद्घाट्यैव प्राचेभिपिपि गवाक्षतस्तत्राहम् । आदश चेद्देव तत्र गत्वा गवेषये । एवमभिदधानो राज्ञाज्ञप्त कोषाध्यक्ष तत्र गत्वा निरीक्ष्य पुनरागतो न्यवेदयत् यत्तत्र फलानि तु न सन्ति किन्तु रश्मिज्वालोर्णोनूयमानरत्नराशिर्देदीप्यमानो दरीदृश्यते । तदाकर्ण्यातितुष्टो भूप तान् मणीन् कोशरक्षिणे दत्त्वा पूर्ववदागत भिक्षुमन्येद्युरवदत्, 'भिक्षो, एवमेतावद्धनव्ययन यत् त्व मां सेवेध्यसे किमेतेन ते प्रयोजनं सरीसृत्स्यते[5] इति न यावत्त्वं वदसि न तावद्वत पर फलमहं ते जरीगृहिष्ये[6]' । एतदुक्तवन्तं राजानं भिक्षू रहस्यवादीत्—'देव धीर साहाय्यसापेक्ष मन्त्रसाधनं मेऽत्र वसते प्रयोजनम् । तत्र च भवान् चर्लीक्लृप्यते

१ 'ये विभाषा' । 'यस्य हल' । २ 'घुमास्था०' इतीत्वे 'गुणो यङ्लुको' । ३ लुपसद्चर० 'जपजभदहदशभञ्जपशां च' । ४ 'सूचिसूत्रि०' । ५ 'रीगृदुपधस्य च' । ६ 'वृतो रो ऽ०' इत्युभयत्र रुगम् ।

कोट्ट गच्छाम । तत्रैव च कैरातो राजा शक्तिरक्षित आकार्यते । तत एव च सर्वे सम्भूय सिद्धये समुद्योगो निश्चेय । सम्भावयामि, स्वीकुर्यादेतद्भवान् ।

श्रुतधैरेतत्प्रज्ञापूर्णवाक्यमाकर्ण्य सामात्यो मृगाङ्कदत्तस्तद्वाक्ये श्रद्धाव् । अन्येद्युश्च धृतोदय, प्रदर्शिताश, विघ्नभोनित्याध्वग मिश्र नमस्कृत्य ससचिवो दुर्गपिशाचस्य मातङ्गेन्द्रस्य निकेतन गन्तु समुच्चचाल । तत्र पूर्वं विन्ध्याद्रि मारुह्य दूरतो दक्षिणपार्श्वं च तस्यावरुह्य दन्तिदन्ताजिनचिता भिल्लपल्लीरवलोकयन् कुत्र तस्य मातङ्गाधिपतेरास्पद स्यात् ! कुतश्च वय तज्ज्ञास्याम इति मृगाङ्कदत्तोऽन्तर्दध्यौ । सदैव च मुनिकुमारक एक सम्मुखमायादिति कृता नति सहामात्यस्तमपृच्छत्, 'अपि जानासि त्व मातङ्गभूपतेर्दुर्गपिशाचस्य गृह क्व वर्तते ? त हि वय दिदृक्षव ।' एतदाकर्ण्य स तापसपुत्रक उवाच, 'इतो नातिदूरे वर्तमानस्य विन्ध्यस्य सानुनि करभग्रीवनामा कुटिलदुर्गम कोट्टो वर्तते तत्रेव प्रचण्डविक्रमो दुर्गपिशाचो मातङ्गपतिर्निवसति । स हि धनुधराणां लक्ष स्याधिपति । तैर्दस्युभि स द्विषा सार्थं दलयति । महाटवीं चैता भुनक्ति । इच्छामि, अनेनैव पथा तेन सङ्गच्छेतां भवान् । मुनिकुमारकादेतदाकर्ण्य सानुगो मृगाङ्कदत्तस्तेनैव मार्गेणाव्यरत क्रमेण च करभग्रीवस्य मातङ्गराजकोट्टस्य भिल्ल पल्लीसमाकुल निकट प्राप्नोत् । तत्र स इतस्ततो धावतो बर्हिबहुभदशनया प्रचर्ममृगामिषान् शबरौघानवलोक्याचिन्तयत्, 'अरण्यवृत्तयो ह्रीमे तिर्यञ्च इव जीवन्ति । तथापीमे दुर्गपिशाच निजप्रभु मुवते । प्रजासु न क्वापि किञ्चि दराजक वर्तते । निर्बलो हि जीव सबलस्य जीवन न भवेदिति राजशब्दो दैवैविनिर्मित' । एव विचिन्तयन् स यावत्करभग्रीवकोट्टमार्गं विविक्षिपति तावत्तत्रागतस्य मायावटोश्चारै समगतेति ते चारास्तस्यागमन मायावटवे न्यवे दयन् । तदाकर्ण्य ससैन्य पुलिन्दराट् तत्रागत्य निकटीभूय परित्यक्ताश्वो राजसूनोस्तस्य पादयो पपात । पृष्टकुशलो राजा चापि सामात्य वाहनारूढ त निजकटकमनैषीत् । तदागमनशमिन प्रतीहार च शबराधिपो मातङ्गराजाय प्राहिणोत् इत्यचिरादेव स्वदेशतो—यथार्थनामा शिलाकूटकठोरशरीरावयव, तस्णोऽपि क्षपिताशेपवया, कृष्णोऽप्यनन्यसेवी, मातङ्गराजोऽपि भूभृत्पादोपजीवी, नूतनजलधर इव मायूरपिच्छचित्रधनुर्धर, हिरण्याक्ष इव वराहक्षतविग्रह,

---

१ 'विभाषाधातौ सम्भावनवचनेऽयदि । २ इच्छार्थेषु लिङ्लोटौ ।

न योग्यः कन्यायास्तु कथैव केति दूत, त्वं याहि[1] याहीति याहि तव स्वास्थात परं यत्समुचितमाकलयतां तद् विधत्स्व[2] विधत्स्वेति विधत्ताम्।

राज्ञा कर्मसेनेनेत्थमुक्तो दूतः सुविग्रहः क्रमायातमित्थमभाषत—'राजन् राजपुत्रमपश्यन्नेव त्वमेवमोजायसे[3]। न सर्वसामान्योऽस्मत्स्वामी। न [4]जीर्यति तस्य यशःशरीरम्। न जृणाति[5] तस्य शक्तिः। नो जूर्यते[6] तस्य भुजबलम्। न जिनाति[7] तस्य तेजः। स तेजोभिरेवारिजगदावृणोति[8]। यथार्हं[9]धनैर्ज्ञातीन् वरीते सर्वत्र सत्कीर्तिं वृणाति[10]। सर्वथा क्षेमं [11]वरयति, [12]व्रीयते च यशः। युद्धे निवारयति[13] विद्विषः। निवर्तते[14] चानीतिशत्रुभीतिप्रजोपद्रवम्। यद्यप्याश्रितानां स गुरुमप्यपराधं [15]मर्षति तथाप्युद्धतानां नृपाणामणुमात्रमप्यनुचितव्यवहारं न [16]मृष्यति। युद्धे स निजविपक्षसैन्यप्रक्षिप्तनिशितशरसहस्रैरन्तरिक्षमाच्छा[17]दयति। विद्विषां रुण्डमुण्डैराहवभूमिं [18]छदति। निजालौकिकगुणनिर्मितयशःपटैः स सुरलोकं [19]छदयतीति सख्ये सुरयुवतिविमुक्ताः पुष्पवृष्टयस्तं समाच्छा[20]दयन्ते। अतस्तस्मिन्निहागते त्वं स्वपरान्तरमवभोत्स्यसे' इति।

सर्वसमक्षमित्थं तत्समाभृतमुच्चैः[21] क्षोरमाचक्षाणे, ब्रुवाणे चेतरं नीचैःकारं तस्मिन् वैदेशिकनैदेशिके, सकलैव राज[22]सभा निरतिशयक्षोभमवाप। क्रुद्धो नृपोऽपि दूतमवध्यं ज्ञात्वा नास्मै किमप्यभ्यधात्। अन्ये च तत्रत्या वीरा

---

१–२ 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः', 'यथाविध्यनुप्रयोगः पूर्वस्मिन्'। ३ ओजस्वीव आचरसि, 'कर्तुः क्यङ् सलोपश्च'। ४ जॄष् वयोहानौ दैवादिकः। ५ जॄ वयोहानौ क्र्यादिः प्वादिः। ६ जूरी हिंसावयोहान्योः दैवादिकः। ७ ज्या वयोहानौ क्र्यादिकः। ८ वृञ् वरणे, स्वादिः। ९ वृञ् वरणे भ्वादिः।, १० वृञ् वरणे क्र्यादिः। ११ वर ईप्सायाम्, चुराद्यन्तः। १२ वृञ् वरणे दिवादि। १३ वृङ् सम्भक्तौ णिजन्तः। १४ वृञ् वरणे भौवादिक उभयपदी। १५ मृष तितिक्षायाम् भ्वादि। १६ दिवादि। १७ छद अपवारणे चुरादि। १८ छद आच्छादने भ्वादि। १९ छद व्याप्तिकरणे चुरादिरदन्तः। २० छद संवरणे चुरादिः। २१ 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ'। २२ 'सभाराजाऽमनुष्यपूर्वा' इत्यत्र राजपर्यायस्यैव ग्रहणान्नपुंसकत्वाभावः।

'न श्रद्दध्महे न मर्षयामहेऽस्मासु सत्स्वपि किंकिल अयमेवमस्मद्भूपतिमवमानयिष्यतीति दन्तदष्टौष्ठा करैः करान् मृद्नन्तोऽधुनैव गत्वा किं न स हन्तव्य' इति मिथोऽब्रुवन्। वाचाटोऽय चतुर्यातु, किमस्य गिरा क्षुप्यते, यद्द्रक्ष्यते तत्समुचित प्रतिविधास्यते इति धैर्यतोऽपरे निजगदु । दूतोऽपि च विमनास्ततो विनिर्गतो निजशिबिरमन्वचलत्।[1]

( इति लकारार्थप्रक्रिया )

इति कौमुदीकथाकल्लोलिन्या पदवाच्यलकारार्थनिर्देशात्मको नवम कल्लोल ।



१ 'किंकिलास्त्यर्थेषु लृट्'। [ इति लकारार्थप्रक्रिया ]

# प्रकीर्णकनिर्देशात्मको दशमः कल्लोलः

कर्मसेनसभातो विनिर्गतो दूतो निजकटकमासाद्य कर्मसेनोक्तं सर्वं समिग्राय मृगाङ्कदत्ताय व्याहार्षीत्। सोऽपि च सुविग्रहोक्तमागृह्य विग्रहाग्रहग्रहिलो यानमादिशदिति तदादेशप्रबलपवनापातविधुतो नरतुरङ्गमातङ्गमकरो बलाम्भोधि सपक्षाणां भूभृतां मनसि परितोषं विपक्षाणाञ्च प्रतिभयकरं क्षोभं समुत्पादयन् क्षमासीमानमतिचक्राम। क्षिप्रमेव च क्षितिं वल्गाविगलद्वक्षरालोन्मत्ततुरङ्गकटकर्दमितां कुर्वन् त्रिभुवनञ्च रणवाद्यघोषैर्बधिरयन् विजयायोज्जयिनीं प्रतस्थे।

प्रियापार्थक्ये (प्रकीर्णका)

कतिपयैरेवाहोभिर्विन्ध्यमुल्लङ्घ्य सन्नद्धसैनिकः सुहृद्युक्तो मृगाङ्कदत्त उज्जयिनीसीमानमनुप्रासरत्। अचिरेणैव चोज्जयिन्यर्यारुद्ध। कर्मसेनोऽपि चैतत्सर्वमनगरस्य सन्नद्धो युद्धाय नगर्या निरगात्। निकटीभूय च व्यतिम्नत्याःभुभयोः सेन सम्प्राहृषाताम्। उभयत्रत्या वीरा भयानकमसमसङ्ग्रामन्त। पञ्चदिवसान् यावत् प्रवहच्छोणितनिम्नगेन शूरान्तकरेण रणेनाऽरायीयत। पञ्चमेऽह्नि श्रुतधिर्मृगाङ्कदत्तसमीपमागत्योवाच—'युष्मासु समरासक्तेषु इतो धृतभिक्षुकरूपस्वविद्याप्रभावतो निकटादप्यदृश्यो यदहमजगवेषं तत्तुभ्यं वदामि कृपया कर्ण्यताम्, 'यदैवासौ राजा कर्मसेनो युद्धाय निरगच्छत् तदैव मातुरनुज्ञया शशाङ्कवती स्वगृहान्निर्गत्य समरे स्वपितुः श्रेयोऽर्थं देवीमाराधयितुं पुरीवर्तिगौर्यायतनमशिश्रियत्। तत्रस्था च रहसि एकामाप्तां चतुरिकाभिधेयां सखीमाविशत्, 'सखि, तातेन सह अय विग्रहो मदर्थमुपस्थितः। वह्निना चानेनाक्रान्तोऽयमस्मै राजसुतायावश्यं मां प्रदास्यति। यतो हि राजानो राज्यार्थमपत्यस्नेहं न गणयन्ति। राजसुतश्चायं ममानुरूपो वर्तते न वेति नाहमवगच्छामि। तत्कीदृगयं वर्तते, कीदृशस्तस्य स्वभावः, कियच्च तच्छौर्यादिकमिति सर्वं तद्विषयकं गुप्तरूपेणावगत्यागच्छ। चतुरिकानामा त्वं स्वकीयनामानुरूपं चातुर्यमिह कर्मणि सदुपयुङ्क्ष्व' इति।

---

❀ प्रकीर्णका ❀

१ कमकर्तृरूपम् 'न रुध'। २ 'न गतिहिंसार्थेभ्यः'। ३ 'हरतेर प्रतिषेधः'। ४ भावकर्मणोः। ५ गवेषमार्गणे इति चौरादिकाद्गुह्।

एवमुक्ता सा सखीमुपेतास्मत्कटका भवन्तमवलोक्यान्यच्च सर्वं ज्ञातव्य गुप्तरूपेणावगत्येतो निवर्तिता राजपुत्रीमजपत्, 'सखि, राजपुत्रस्याभिरूपताम-शेषा शेषरसना अपि न वंदेयुः[1] तथाप्येतावन्मात्र मया वक्तव्य यदसौ सौन्दर्ये त्वत्तुलामेवाधिरोहति । गुप्तरूपेण तच्छीलशौर्यादिविषयेऽप्यहमेयमवबोधिता यत्स पोषति[2] विप्राणा मनांसि, पुष्यति[3] च यशांसि धर्मप्रचारेण, पोषयति[4] निजानुजीविनो यथेष्टदानेन, न स पुष्णाति[5] स्वानगुगुण्यकृष्णां तृष्णाम् इति तस्य साहाय्यकरविक्रम प्रतिक्षण पूपति[6] । वृणक्ति[7] वृजिनै सह स सङ्गम् । वृंक्ते[8] धर्मप्रतिकूलै सहयोगम् । वर्जयति[9] चानर्जवोपेतै सम्पर्कम् । वर्जति[10] च दुर्जनानां सङ्गम् । महति[11] स नित्य भक्त्या माहेयीम् । महयति[12] महाजनान् इति महीयमा[13]नस्य तस्य एदमीरन्वह महते[14] । यद्यपि स स्वद्विपतां बल मिनोति[15] तथापि समरे नि शस्त्रान् न स मीनाति[16] । मीयते[17] मान्ये मायाम् । मयते[18] च धर्मेण धनम् । लुञ्चति[19] सोऽविश्वस्तान् निजसेवात । न लुञ्चति[20] कस्मिन्नपि कार्ये, न च विलुञ्चति[21] स्वयमरीनतिरिच्यापरधनमिति स एव तस्यानुजीविषु परस्वम् अधिलुञ्चति[22] तस्य शिरोऽसौ सद्यो लुञ्चयति[23] । एकोऽपि स न रिपुषु क्षुभ्यति[24] । न क्षोभतेऽनुग्राह्येषु[25] । महाहवे च न तस्य मनो मनागपि क्षुभ्नाति[26] । नीचसङ्गत्या स जिहति[27] । अनृतभाषणाद् ह्रीच्छति[28] । स्वैरिणीनां[29] च कथाश्रवणादेव हृणीयते[30] । अयशस्करकृतिसम्मन्त्रणेनापि लंजते[31] । व्रीडाजनकविचारेणापि

---

१ 'शकि लिङ्ग् च' । २–३ पुष पुष्टौ भ्वादिर्दिवादिश्च ।

४ पुष धारणे चुरादि । ५ पुष पुष्टौ क्र्यादि । ६ पूष वृद्धौ । ७ वृजी-वर्जने । ८–१० वृजी वर्जने क्रमश अदादि, चुरादि, भ्वादि । ११ माहेयीम् गाम्, महति पूजयति, मह पूजायाम् भ्वादि । १२ मह पूजायाम् चुरादयदन्त । १३ महीङ् पूजायाम् कण्ड्वादि । १४ महि वृद्धौ भ्वादि । १५ डुमिञ् प्रक्षेपणे स्वादि । १६ मीञ् हिंसायाम् क्र्यादि । १७ मीङ् हिंसायाम् दिवादि । १८ मेङ् प्रणिदाने भ्वादि । १९ लुञ्च अपनयने भ्वादि । २० लुचि आलस्ये । २१–२२ लुञ्च स्तेये । २३ लुञ्च अपनयने अस्य णिजन्त रूपम् । २४–२६ क्षुभ सञ्चलनेयस्य क्रमश दिवादि भ्वादि क्र्यादि रूपाणि । २७ ह्री लज्जायाम् जुहोत्यादि । २८ ह्रीच्छ लज्जायाम् भ्वादि । २९ 'स्वादीरेरिणो' इति साधु । ३० हृणीङ् रोषणे लज्जायाञ्च कण्ड्वादि । ३१ ओलस्जी व्रीडायाम् तुदादि ।

# प्रकीर्णकनिर्देशात्मको दशमः कल्लोलः

कर्मसेनसभातो विनिर्गतो दूतो निजकटकमासाद्य कर्मसेनोक्तं सर्वं समित्राय मृगाङ्कदत्ताय व्याहार्षीत्। सोऽपि च सुविग्रहोक्तमागृह्य विग्रहाग्रहग्रहिलो यानमादिक्षदिति तदादेशप्रबलपवनापातविधुतो नर-तुरङ्ग-मातङ्गमकरो बलाम्भोधिः सपक्षाणां भूभृतां मनसि परितोषं विपक्षाणाञ्च प्रतिभयकरं क्षोभं समुत्पादयन् क्षमासीमानमतिचक्राम। क्षिप्रमेव च क्षितिं वल्गाविगलद्धवलालोन्मत्तकरटिकटकर्दमितां कुर्वन् त्रिभुवनञ्च रणवाद्यघोषैर्बधिरयन् विजयायोज्जयिनीं प्रतस्थे।

प्रियापार्थक्ये
(प्रकीर्णका)

कतिपयैरेवाहोभिर्विन्ध्यमुल्लङ्घ्य सन्नद्धसैनिकः सुहृद्युक्तो मृगाङ्कदत्त उज्जयिनीसीमानमनुप्रापयान्। अचिरेणैव चोज्जयिन्यवारुद्ध। कर्मसेनोऽपि चैतत्सर्वमवगत्य सन्नद्धो युद्धाय नगर्या निरगात्। निकटीभूय च व्यतिभ्रत्या तूभयोः सेने सम्प्राहर्षाताम्। उभयत्रत्या वीरा भयानकमससङ्ग्रामन्त। पञ्चदिवसान् यावत् प्रवहच्छोणितनिम्नगेन शूरान्तकरेण रणेनास्थीयत। पञ्चमेऽह्नि श्रुतधिर्मृगाङ्कदत्तसमीपमागत्योवाच—युष्मासु समराङ्गणेषु इतो धृतभिक्षुकरूपस्वविद्याप्रभावतो निकटादप्यदृश्यो यदहमजगवेष तत्तुभ्यं वदामि कृपयाकर्ण्यताम्, 'यदैवासौ राजा कर्मसेनो युद्धाय निरगच्छत् तदैव मातुरनुज्ञया शशाङ्कवती स्वगृहान्निर्गत्य समरे स्वपितुः श्रेयोऽर्थं दवीमाराधयितुं पुरीवर्तिगौर्यायतनमधिशिश्रियत्। तत्रस्था च रहसि एकामाप्तां चतुरिकाभिधयां सखीमादिशत्, 'सखि, तातेन सह अद्य विग्रहो मदर्थमुपस्थितः। बलिना चानेनाक्रान्तोऽयमस्मै राजसुतायावश्यं मां प्रदास्यति। यतो हि राजानो राज्याधमपत्यस्नेहं न गणयन्ति। राजसुतश्चायं ममानुरूपो वर्तते न वेति नाहमवगच्छामि। तत्कीदृगयं वर्तते, कीदृशास्तस्य स्वभावः, कियच्च तच्छौर्यादिकमिति सर्वं तद्विषयकं गुप्तरूपेणावगत्यागच्छ। चतुरिकानामा त्वं स्वकीयनामानुरूपं चातुर्यमिह कर्मणि मदुपयुङ्क्ष्व' इति।

---

❀ प्रकीर्णका ❀

१ कमकर्तृरूपम् 'न दध'। २ 'न गतिर्हिंसासाधर्म्य'। ३ 'हरतेर प्रतिषेध'। ४ भावकर्मणो। ५ गवेषमार्गणे इति चौरादिकाल्लुङ्।

'देव, अत्र काचित्कन्यका पाशेनोद्बध्यात्मानं जिघांसति[1]। तत्केयं स्यादिति पश्य।' तच्छ्रुत्वा राजपुत्रस्तामवलोक्य तदलौकिकरूपापहृतहृदयः केयं भवेदिति जिज्ञासया यावत्ससवयस्यश्छन्नस्तिष्ठति तावदुद्विग्ना शशाङ्कवती देवीं व्यजिज्ञपत्, 'देवि, अस्मिन् जन्मनि मदीयप्राग्दुष्कृतैर्यदि स राजपुत्रो मृगाङ्कदत्तो न मे पतिर्जातस्तदा त्वत्प्रसादेन सोऽन्यस्मिन् जन्मनि मदीयो भर्त्ता भवतु।' एवं देवीं विज्ञाप्य सा राजपुत्री कृतदेवीप्रणतिर्वाष्पाद्रलोचना पाशं कण्ठेऽर्पयामास। एतस्मिन्नेव च क्षणे प्रयुद्धाम्नात्मसख्यस्तदर्शनोद्विग्नास्ता चिन्तयन्त्यस्तदन्तिकमुपजग्मुः। शशाङ्कवतीं च तस्या दशायामवलोक्य, 'हा! सखि, किमेतत्त्वया समारब्धम्? साहसेनानेनालम्। आगमयस्व[2] क्षणं तावत्' इत्युक्त्वा त्यो व्यपाशयन्[3]। एवं सञ्जाते यावदत्युद्विग्ना शशाङ्कवती तत्र तिष्ठति तावद्गौरीगर्भगृहान्तराद्भारतीयमश्रूयत 'शशाङ्कवति, विषादं मा गाः। स्वप्ने उक्तं मदीयं वचो मृषा न भावि। स एवायं मृगाङ्कदत्तस्ते पूर्वभर्त्ताऽत्र प्राप्तस्तव समीपे वर्त्तते। अतोऽनेनैव सह प्रजित्वाऽखिलमैश्वर्यं भुङ्क्ष्व।'

एवमुक्ता सा यावत्किञ्चिदुन्मनायमाना तिष्ठति तावन्मृगाङ्कदत्तस्य मन्त्री विक्रमकेसरी तामुपगम्य समभ्यधात्, 'देवि, सत्यं भवान्या समादिष्टं स एवायं ते पतिस्तव प्रेमपाशाकृष्टोऽत्रायातः।' तच्छ्रुत्वा साचीकृतलोचना सा कान्तं, तेजस्विनं, सहचारिणां मध्यवर्तिनञ्च तं दृष्ट्वा यावत्पतदनङ्गशरपुङ्खपक्ष्मचितैरिव कण्टकितैरङ्गैः स्तम्भनिश्चला तिष्ठति तावन्मृगाङ्कदत्तस्तामुपेत्य प्रेमपूर्णया गिरोवाच यत् त्वद्गुणपाशाकृष्टः परित्याजितनिजवधुराज्यदेशः, अनुभूतानेकारण्यग्रामवसुधाशयनक्लेशः, दासीभूतोऽहमहमिहायातः। तत्ते मयि स्नेहानुरोधश्चेदस्मत्पुरपुरन्ध्रीनयनोत्सवं प्रवर्धय। सङ्ग्रामं शाम्यतु पक्षद्वयं श्रेयश्चानुभवतु।

मृगाङ्कदत्तेनेत्थमुक्ता शशाङ्कवती मन्दाक्षमन्दाक्षरं समाचचक्षे 'त्वत्परं इदानीं मम जनस्त्वविघ्न इति यथा कुशलं भवेत्तथा तेऽभीष्टं स्यात्तथैव विधीयताम्।'

शशाङ्कवत्या वाक्सुधयेत्थं सिक्तो मृगाङ्कदत्तो गौरीं प्रणम्य राजपुत्रीञ्च तामग्रे स्वपृष्ठतः समारोप्य अश्वसमारूढैर्दशभिः शस्त्रपाणिभिर्धीरैः सचिवैः सह धृतायुधो रात्रावुज्जयिन्या निर्गत्य श्रुतधिप्रदर्शितयुक्त्या शशाङ्कवतीसहितो मायावटोर्गृहमागमत्[4]।

---

१ 'अञ्जनगमा सनि', 'अभ्यामाघ'। २ 'आगमे समायाम्'। ३ पाशयुमुखन्। ४ 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः'।

व्रीड्यति[1]। अर्दते[2] दुरितोदयम्। अर्दयति[3] च द्रविणदानेन दीनानां दारिद्र्यम्। वितनति[4] स नीतिधर्मकृत्यम्। वितनोति[5] च विद्विड्वनिताहृदयवियोगव्यथाम् इति कृत्यैरेतैः सत्कीर्तिं वितानयन्[6] सर्वतोभावेन स राजकुमारस्तवानुरूपतामावहति।'

सखीमुखेनेत्थमुक्तायास्तस्याः शशाङ्कवत्या मानसं त्वत्प्राप्त्यभिलाषपाशोऽमीमौत्[7]। तत्क्षणादेव च तव स्वपितुश्च श्रेयस्काम्या[8] सा त्वद्विरहेण तनीयसीं तनुं बिभ्रती मदनार्ता मोमूर्च्छीति[9]। अतो गुप्तमद्य निशि गत्वा निर्जनाद् गौर्याश्रमादपहृत्यालक्षितस्त्वं तामिहानय। इमे राजानस्तावदस्य दुर्गपिशाचस्य मायावद्धे गृहे तिष्ठन्तु। पश्चाच्चेमे मया साकं तत्रैष्यन्ति। एवं कृते, निवृत्ते चास्मिन्नपायो धने सैन्यसंक्षयो न भवेत्। तव, त्वदीयभाविश्वशुरस्य च सर्वथा कल्याणं भवेत्। युद्धरूपोपायो हि व्यर्थमेवाकाले मदीयसैन्यासून् जाग्रहीतीति[10] बुधास्तं जर्गृहति[11]।

श्रुतधिनैवमुक्तो मृगाङ्कदत्तोऽश्वानारुह्य सचिवैः सह ततश्चलित्वा श्रुतधिप्रत्ताभिज्ञानैः सुलक्षितं पुष्पकरण्डाख्योद्यानान्तरे वर्तमानं तत्कालोद्यच्छशाङ्करश्मिप्रकाशितं गौर्याश्रममवाप्त्।

इतश्च परिचर्यादिपरिश्रान्ते सखीजने निर्निद्रा शशाङ्कवती व्यचिन्तयत् यत् मदर्थं राजानो राजपुत्राश्चान्वहमाहवे हन्यन्ते। अम्बिकया देव्या च स्वप्ने मदर्थिताहृद्य स राजपुत्रो मदीयः पूर्वभर्ता समादिष्टः। किन्तु लेखाद्धेत्यमवगतं यत्पिता पूर्ववैराद्दर्पाच्च मन्दपुण्यां मां न तस्मै दित्सतीति विधातरि वामे क्व स्वप्नदेवतादेशनिश्चयः क्रियेत। अतो यावद्रणे तातस्य तस्य मम प्रियस्य चाहितं न शृणोमि[12] तावद्धुताशमात्मानं किं न त्यजामि। एवमवधार्य गौर्याः पुरो गत्वा स्वोत्तरीयविरचितपाशा साऽशोकपादपे मर्तुमध्यवास्यत्।

एतस्मिन्नेव काले मृगाङ्कदत्तोऽपि सवयस्यस्तत्रागत्योद्यानतल्पबद्धतुरङ्गमो गौर्याश्रममगमत्। तत्रावलोकितराजपुत्रिणा विमलबुद्धिना च निगदितं,

---

१ *व्रीड लज्जायाम् दिवादिः*। २ अर्द हिंसायाम् भ्वादिः। ३ णिजन्तः। ४–५ तनु विस्तारे भ्वादितनादी। ६ तनु श्रद्धोपकरणयोः चुरादिः। ७ मव्य बन्धने यङ्लुकि लङ्, ज्वरत्वर॰ इत्युपधावकारयोरूठि पिति गुणः। ८ 'काम्यच्', 'अप्रत्ययात्' टाप्। ९ मुर्छा मोहसमुच्छ्राययोः 'यङो वा'। १० ग्रह उपादाने। ११ गृहू गर्हणे 'अदभ्यस्तात्' इति झस्यात्। १२ 'यावत्पुरानिपातयोर्लट्'।

रभ्य कर्मसेनीयसन्ध्यन्त विविधाद्भुत मर्वं स्वप्रभुवृत्तान्त निवेदयन् इत्थ प्रकृत मुपागान् यत् तव सूनुना मृगाङ्कदत्तेन स्ववीर्येत कर्मसेननृपतिसुता शशाङ्कवती समुपालम्भि। तद्विवाहश्च देव्या देवेन च विना शोभनो न प्रतिभासते इति युष्मान् प्रतीक्षमाण स शवराधिपतेर्मायावटोर्गृहे वर्तते। तेन विसृष्टश्चाहमिह भवन्त सर्वं विज्ञापयितुमायितोऽमायित ।[1][2]'

तदाकर्ण्य सुतकल्याणे कृतमतिरमरदत्तस्तदानीमेव देव्या सार्द्धं मतङ्गजारूढोऽत्युत्सुक सचिवै सह हस्त्यश्वबलयुक्त पुत्र प्रति प्रागात्[3]। अल्पैरेव च प्रयाणकै स शवराधिपदेशस्थ सुतकटकमवाप। पितुरागमनमाकर्ण्य समग्रै राजभि सह चिरोत्सुको मृगाङ्कदत्तोऽपि च निगत्य पितरौ दृष्ट्वा दूरादेव तुरङ्गादवतीर्णो गजावरूढयो पित्रोश्चरणाननमस्यत्। सर्वे तत्सहायकनृपाश्चापि सदेवीकममरदत्त क्रमश प्रणेमुरथ मायावटो राजधानीं प्रविश्य तत्र पादावनता स्नुषा शशाङ्कवतीं चावलोक्य ततो निर्गतोऽमरदत्त स्वकटके वसतिं विधाय पुत्रेण सर्वै राजभिश्च सह भुक्त्वा विविधोत्सवैस्ससुख तद्दिन नयानो भाविना चक्रवर्तिपुत्रेण मृगाङ्कदत्तेनात्मान गौरवान्वित च मन्वानस्तत्रातिष्ठत्।

एतस्मिन्नेव समये कर्मसेनप्रहितो दूत समागत्योवाच, 'देव, अस्मत्स्वामी मन्मुखेनाभिधत्ते यदहमात्मपुत्र सुषेण तत्र प्रेषयामि। स च विधिना निजभगिनीं तुभ्य दास्यतीत्यस्मत्स्नेहानुरोधश्चेत्तामविधिना नोद्वहे । राजोचितमेतत्सन्देशमाकर्ण्य नृपतेरमरदत्तस्य हृदयमतितुष्टयाऽविप्रदिति स प्रतिसमदिक्षद् यदस्मासु त्वदीयप्रमोरेव स्नेहश्चेत्तर्हि स सुषेणमिह प्रेषयतु वय निजेन पुत्रेण तत्सुताया स्तथा विवाह करिष्यामो यथा सर्वथा स सर्वेषां सन्तोषकृद्भवेत्।

दूतमुखेन कर्मसेनमेव प्रतिसन्दिश्यामरदत्त, श्रुतविधिम्, निजपुत्रम्, नृपतींश्चान्यानेवमुवाच, 'अधुना वयमयोध्या गामहे। तत्रैव विवाह शोभते। सुषणस्य यथाविधि सत्कारश्चापि तत्रैव सम्भोभवीति इति दुगपिशाचौ मायावटुश्चेहैव सुषेण सम्प्रतीक्षमाणौ तिष्ठताम्। आगतेन च तेन सहैमौ पश्चादयोध्यामुपारिप्स्यत ।'

राज्ञ एतद्वच आकर्ण्य सर्व राजभिरनुमतोऽमरदत्तोऽन्येद्युर्देव्या सैन्यैश्च सह ससचिवमृगाङ्कदत्त, सुषेणागमनावधि तत्र मायावटु सस्थाप्य शशाङ्कवत्या सह

---

१ अय गताविस्यस्मात् क्त, आगत इत्यथ । २ माया सजाता अस्येति मायितस्तथाभूतो नेत्यमायित (मायारहित इति भाव )। ३ गाङ् गतौ। ४ 'अह इत्यनृचश्च'। ५ विप्लृ व्याप्तौ (व्याप्तमभवत्)।

क्षणानन्तरमथ प्रबुद्धेषु रक्षिषु राजसुतामपहृतामवगत्य राजमहिषी तदानीं स्कन्धावारस्थित कर्मसेन तद्वृत्त नगराध्यक्षेण अवागमयत्। स च तदाकर्ण्य रहसि सेनापतिमाकार्य शूराधिरूढै पञ्चभि शतैरश्वैस्तत्र गत्वाऽन्विष्य मृगाङ्कदत्त हन्तु यदुषु या समादिदेश। सेनापतिश्च यथानिर्दिष्टयल्युक्- कटकादाग्रा दुज्जयिनीमागात्। तत्र च मिलिताच्चगराध्यक्षात्सोऽशृणोत् यदन्यैर्वीरैरिव कैश्चिद्वीरैरेवापहृता राजपुत्रीति व्यर्थोऽवस्कन्द। तच्च स राजभवनमासाद्य कर्मसेन विज्ञापितवानिति राजपुत्रीप्राप्तिं प्रयत्नसाध्या मत्वा विनिवृत्तावस्कन्द-विचारास्ते तूष्णीमेव तां निशामनयन्। मृगाङ्कदत्तसैन्यशिविरेऽपि च मायावटु-प्रमुखा नृपा श्रुतधे कथनानुसारेण युद्धमबद्धा एव तस्यां निश्यजागरुः।

प्रातःकाले चारैरन्विष्टवृत्तान्त कर्मसेनो मृगाङ्कदत्तकटके दूत सम्प्रेष्य सर्वान् राज्ञो विज्ञप्तवान् यद् यद्यपि मृगाङ्कदत्तेन मदीया सुता छलेनापहृता तथापि स तस्या उपयुक्त पतिं मन्यानैरस्माभिरित्थं विज्ञाप्यते यत्स युष्माभि सह मम गृहमायातु येन मत्सुतायास्तेन सह सविधि विवाहो भवेत्। तत्सन्देश-माकर्ण्य मृगाङ्कदत्तसहिता सर्वे राजान कर्मसेनसन्देश परस्पर विचारयन्त ऐकमत्येन निरचैषुर्यत्तदीया सुता प्राप्तैवेति तद्गेहगमने कुशलममन्वानानामस्माकं तत्र गमनमश्रेयस्करम्। एतदाकर्ण्य मृगाङ्कदत्त श्रुतधेरभिमतमजिज्ञासत। स चाह 'कर्मसेनस्य गृहेष्ववश्य गन्तव्यमित्येषा मदीया मति यतो हि सर्वमेत दशाठ्येन तेन सन्दिष्टमन्यथा सुतायामपहृतायामपि सोऽजेयो यत्नी युद्ध त्यक्त्वा कथमेवमुदासीत। सयत्स्य च ते तद्गेहगतस्य स किं कुर्वीत? मन्ये, तव तत्र गमन तेन सहाजर्यं सगत स्थापयिष्यति परस्परप्रत्ययश्च स्फावयिष्यतीति दुहितृस्नेहेन सोऽग्रे सहाय एव भवेत्। स हि अवैधविवाह न घष्टि तेनेत्थ विशिनष्टीति तत्र गमन श्रेय।

एतदाकर्ण्य सर्वे राजान साधु! साधु!! इति ब्रुवाणा श्रुतधिं श्रद्धाय तद्वच प्रशशसुरिति मृगाङ्कदत्तस्तानवोचत् 'सर्वमेवमस्तु, किन्तु तातमम्बाञ्च विना न मे विवाहो रोचते इति तयोराह्वानाय कश्चिदितो व्रजतु। विज्ञाततद भिप्रायश्चाह यथोचित विधास्ये।' एवमुक्त्वा स तत्रस्थ एव भीमपराक्रम स्व मन्त्रिण पित्रो पार्श्वे प्रैषयत्। स चाप्ययोध्यामागम्य सुतवियोगग्लानतनो सपत्नीकस्यामीष्टसुतोदन्तश्रवणसमुत्सुकस्य राज्ञ पादयोर्निपत्य गृहनिर्गमनादा

१ 'विभाषा कथमि लिङ् च'।

रम्य कर्मसेनीयसन्ध्यन्त विविधाद्भुत सर्वं स्वप्रभुवृत्तान्त निवेदयन् इत्थ प्रकृत मुक्तवान् यत् तव सूनुना मृगाङ्कदत्तेन स्ववीर्यत कर्मसेननृपतिसुता शशाङ्कवती समुपालब्धि। तद्विवाहश्च देव्या देवेन च विना शोभनो न प्रतिभासते इति युष्मान् प्रतीक्षमाण स शबराधिपतेर्मायावटोगृहे वर्तते। तेन विसृष्टश्चाहमिह भवन्त सर्वं विज्ञापयितुमायितोऽमायित ।'

तदाकर्ण्य सुतकल्याणे कृतमतिरमरदत्तस्तदानीमेव देव्या सार्द्धं मतङ्गजारूढोऽत्युत्सुक सचिवै सह हस्त्यश्वबलयुक्त पुत्र प्रति प्रागात्। अल्पैरेव च प्रयाणकै स शबराधिपदेशस्य सुतकटकमवाप। पितुरागमनमाकर्ण्य समग्रै राजभि सह चिरोत्सुको मृगाङ्कदत्तोऽपि च निर्गत्य पितरौ दृष्ट्वा दूरादेव तुरङ्गमादवतीर्णा गजावरूढयो पित्रोश्चरणाननमस्यत्। सर्वे तत्सहायकनृपाश्चापि म्देवीकममरदत्त क्रमश प्रणेमुरथ मायावटो राजधानीं प्रविश्य तत्र पादावनतो स्नुषां शशाङ्कवतीं चावलोक्य ततो निर्गतोऽमरदत्त स्वकटके वसति विधाय पुत्रेण सर्वै राजभिश्च सह भुक्त्वा विविधोत्सवैस्ससुख तद्दिन नयानो भाविना चक्रवर्तिपुत्रेण मृगाङ्कदत्तेनात्मान गौरवान्वित च मन्वानस्तत्रातिष्ठत्।

एतस्मिन्नेव समये कर्मसेनप्रहितो दूत समागत्योवाच, 'देव, अस्मत्स्वामी मन्मुखेनाभिधत्ते यदहमात्मपुत्र सुषेण तत्र प्रेषयामि। स च विधिना निजभगिनीं तुभ्य दास्यतीत्यस्मत्स्नेहानुरोधश्चेत्तामविधिना नोद्वहे । राज्ञोचितमेतत्सन्देशमाकर्ण्य नृपतेरमरदत्तस्य हृदयमतितुष्टयाऽविर्वेदिति स प्रतिसमदिशद् यदस्मासु त्वदीयप्रभोरेव स्नेहश्चेत्तर्हि स सुषेणमिह प्रेषयतु वय निजेन पुत्रेण तत्सुताया स्तथा विवाह करिष्यामो यथा सर्वथा स सर्वेषा सन्तोषकृद्भवेत्।

दूतमुखेन कर्मसेनमेव प्रतिसन्दिश्यामरदत्त, श्रुतधिम्, निजपुत्रम्, नृपतीं श्चान्यानेवमुवाच, 'अधुना वयमयोध्या गामहे। तत्रैव विवाह शोभते। सुषेणस्य यथाविधि सत्कारश्चापि तत्रैव सम्योभवतीति इति दुर्गपिशाचो मायावटुश्चैहैव सुषेण सम्प्रतीक्षमाणौ तिष्ठताम्। आगतेन च तेन सहेमौ पश्चादयोध्यामुपारिप्यत ।'

राज्ञ एतद्वच आकर्ण्य सर्वे राजभिरनुमतोऽमरदत्तोऽन्येद्युर्देव्या सैन्यैश्च सह ससचिवमृगाङ्कदत्त, सुषेणागमनावधि तत्र मायावटु सस्थाप्य शशाङ्कवत्या सह

१ अय गतावित्यस्मात् क्त, आगत इत्यर्थ । २ माया सजाता अस्येति मायितस्तथाभूतो नेत्यमायित (मायारहित इति भाव )। ३ गाहृ गतौ। ४ 'अहू कृत्यतृचश्च'। ५ विप्लृ व्याप्तौ (व्याप्तमभवत्)।

क्षणानन्तरमथ प्रबुद्धेषु रक्षिषु राजसुतामपहृतामवगत्य राजमहिषी सद्यो स्कन्धावारस्थित कर्मसेन तद्वृत्त नगराध्यक्षेण अवागमयत्। स च तदाकर्ण्य रहसि सेनापतिमाकार्य शूराधिरूढै पञ्चभि शतैरश्वैस्तत्र गत्वाऽन्विष्य मृगाङ्क दत्त हन्तु यद्वा सेनापतिरश्व यथानिर्दिष्टबलयुक्त कटकात्प्रत्या- वाप्य समादिदेश। उज्जयिनीमागात्। तत्र च मिलिताग्नगराध्यक्षात्सोऽशृणोद् यदन्यैर्वीरैरिव कैश्चिद्वीरैरेवापहृता राजपुत्रीति व्यर्थोऽवस्कन्द। तच्च स राजभवनमासाद्य कर्म सेन विज्ञापितवानिति राजपुत्रीप्राप्तिं प्रयत्नसाध्यां मत्वा विनिवृत्तावस्कन्द विचारास्ते तूष्णीमेव तां निशामनयन्। मृगाङ्कदत्तसैन्यशिविरेऽपि च मायावटु प्रमुखा नृपा श्रुतये कथनानुसारेण युद्धसन्नद्धा एव तस्यां निश्यजागरु।

प्रातःकाले चारैरन्विष्टवृत्तान्त कर्मसेनो मृगाङ्कदत्तकटके दूत सम्प्रेष्य सर्वान् राज्ञो विज्ञप्तवान् यद् यद्यपि मृगाङ्कदत्तेन मदीया सुता छलेनापहृता तथापि स तस्या उपयुक्त पतिं मन्वानैरस्माभिरित्थ विज्ञाप्यते यत्स युष्माभि सह मम गृहमायातु येन मत्सुतायास्तेन सह सविधि विवाहो भवेत्। तत्सन्देश- माकर्ण्य मृगाङ्कदत्तसहिता सर्वे राजान कर्मसेनसन्देश परस्पर विचारयन्त ऐकमत्येन निरचैषुर्यत्सद्यीया सुता प्राप्तैवेति तद्गेहगमने कुशलममन्वानानामस्माक तत्र गमनमश्रेयस्करम्। एतदाकर्ण्य मृगाङ्कदत्त श्रुतध्यभिमतमजिज्ञासत। स चाह 'कर्मसेनस्य गृहेष्ववश्य गन्तव्यमित्येषा मदीया मति यतो हि सर्वमेत दृशाटवेन तेन सन्दिष्टमन्यथा सुतायामपहृतायामपि सोऽजयो बली युद्ध व्यवसाय कथमेवमुदासीत। सबलस्य च ते तद्गेहगतस्य स किं कुर्वीत ? मन्ये, तव तत्र गमन तेन सहाजर्य सगत स्थापयिष्यति परस्परप्रत्ययञ्च स्फावयिष्यतीति दुहितृस्नेहेन सोऽग्रे सहाय एव भवेत्। स हि अवैधविवाह न वष्टि तेनेत्थ विशिनष्टीति तत्र गमन श्रेय।

एतदाकर्ण्य सर्वे राजान साधु! साधु!! इति ब्रुवाणा श्रुतधि श्रद्धाय तद्वच प्रशशसुरिति मृगाङ्कदत्तस्तानवोचत् 'सत्यमेवमस्तु, किन्तु तातमम्बाञ्च विना न मे विवाहो रोचते इति तयोराह्वानाय कश्चिदितो व्रजतु। विज्ञाततद भिप्रायश्चाह यथोचित विधास्ये।' एवमुक्त्वा स तत्रस्थ एव भीमपराक्रम स्व मन्त्रिण पित्रो पार्श्वे प्रैषयत्। स चाप्ययोध्यामागत्य सुतवियोगधामतनो मपर्सीकस्याभीष्टसुतोदन्तश्रवणसमुत्सुकस्य राज्ञ पादयोर्निपत्य गृहनिर्गमनादा

१ 'विभाषा कथमि लिङ् च'।

स्य कर्मसेनीयसध्यन्त विविधाद्भुत सर्वं स्वप्रभुवृत्तान्त निवेदयन् इत्थ प्रकृत मुक्तवान् यत् तव सूनुना मृगाङ्कदत्तेन स्ववीर्येत कर्मसेननृपतिसुता शशाङ्कवती समुपालम्भि। तद्विवाहश्च देव्या देवेन च विना शोभनो न प्रतिभासते इति युष्मान् प्रतीक्षमाण स शवराधिपतेर्मायावटोर्गृहे वर्तते। तेन विसृष्टश्चाहमिह भवन्त सर्वं विज्ञापयितुमायितो[1]ऽमायित[2]।'

तदाकर्ण्य सुतकल्याणे कृतमतिरमरदत्तस्तदानीमेव देव्या सार्द्धं मतङ्गजारूढोऽत्युत्सुक सचिवै सह हस्त्यश्वबलयुक्त पुत्र प्रति प्रागात्[3]। अल्पैरेव च प्रयाणकै स शवराधिपदेशस्थ सुतकटकमवाप। पितुरागमनमाकर्ण्य समग्रै राजभि सह चिरोत्सुको मृगाङ्कदत्तोऽपि च निर्गत्य पितरौ दृष्ट्वा दूरादेव तुरङ्गमादवतीर्णो गजायरूढयो पित्रोश्चरणाननमस्यत्। सर्वे तत्सहायकनृपाश्चापि सदेवीकममरदत्त क्रमश प्रणेमुरथ मायावटो राजधानीं प्रविश्य तत्र पादावनतां स्नुषां शशाङ्कवतीं चावलोक्य ततो निर्गतोऽमरदत्त स्वकटके वसतिं विधाय पुत्रेण सर्वैं राजभिश्च सह भुक्त्वा विविधोत्सवैस्तसुख तद्दिन नयन्नो भाविना चक्रवर्तिपुत्रेण मृगाङ्कदत्तेनात्मान गौरवान्वित च मन्वानस्तत्रातिष्ठत्।

एतस्मिन्नेव समये कमसेनप्रहितो दूत समागत्योवाच, 'देव, अस्मत्स्वामी मन्मुखेनाभिधत्ते यदहमात्मपुत्र सुषेण तत्र प्रेषयामि। स च विधिना निजभगिनीं तुभ्य दास्यतीत्यस्मत्स्नेहानुरोधश्चेत्तामविधिना नोढुमर्हे[4]। राज्ञोचितमेतत्सन्देशमाकर्ण्य नृपतेरमरदत्तस्य हृदयमतितुष्ट्याऽविप्लदिति[5] स प्रतिसमदिक्षत् यदस्मासु त्वदीयप्रमोरेव स्नेहश्चेत्तर्हि स सुषेणमिह प्रेषयतु वय निजेन पुत्रेण तत्सुताया स्तया विवाह करिष्यामो यथा सर्वथा स सर्वेषां सन्तोपकृद्भवेत्।

दूतमुखेन कमसेनमेव प्रतिसन्दिश्यामरदत्त, श्रुतधिम्, निजपुत्रम्, नृपतीं श्चान्यानेवमुवाच, 'अधुना वयमयोध्या गामहे। तत्रैव विवाह शोभते। सुषणस्य यथाविधि सत्कारश्चापि तत्रैव सम्भवीति इति दुर्गपिशाचो मायावटुश्चेहैव सुषेण सम्प्रतीक्षमाणौ तिष्ठताम्। आगतेन च तेन महेमौ पश्चादयोध्यामुपारिष्यत।'

राज्ञ एतद्वच आकर्ण्य सर्वे राजभिरनुमतोऽमरदत्तोऽन्येद्युर्देव्या मन्त्रैश्च सह ससचिवमृगाङ्कदत्त, सुषेणागमनावधि तत्र मायावटु सस्थाप्य शशाङ्कवत्या सह

---

१ अय गतावित्यस्मात् क्त, आगत इत्यर्थ। २ माया सजाता अस्येति मायितस्तथाभूतो नेत्यमायित (मायारहित इति भाव)। ३ गाड् गतौ। ४ 'अर्हे कृत्यतृचश्च'। ५ विप्लृ व्याप्तौ (व्याप्तमभवत्)।

एवं तस्मान्मुनीन्द्रोदाराशयात्कर्णनलिकाद्वारेणापीतामृतवचा नरवाहनदत्तो मदनमञ्जुकावाप्त्यवाप्तिसंघटितर्मलयगिरौ ललितलोचनामन्विष्यन् यावद्विचरति तावदेव तस्य गोमुखप्रभृतयश्चिरमितस्ततस्तम् प्रियासमागमं न्विष्यन्तो भ्रम्[1]यमाणाः सचिवाः, समवचितकुसुमा ललितलोचना च तत्रागता[2]सतेति निजचरणनतांस्तान् सर्वान् अभिनन्द्य तैः सह स स्वपुरीमाजगे[3]। तत्र च सर्वपरिग्रानकजनमिलितो निजप्रियतमां मदनमञ्जुकां समवाप्य जहर्षतमाम् ।

इति कौमुदीकथाकल्लोलिन्यां प्रकीर्णकनिर्देशात्मकः दशमः कल्लोलः ।



१ भ्राम्यतेर्यङन्ताच्छानच् । २–३ गाप्तौ ।

( इति प्रकीर्णका )

# अथ कृदन्तनिर्देशात्मक एकादशः कल्लोलः

कौशाम्ब्यामित्थमात्मपरिवारेण सङ्गतो वत्सेश्वरसुतो नरवाहनदत्त आज्ञया मदनमञ्जुकयाऽन्याभिश्चापि दिव्याभिर्वनिताभिः सह परिक्रीडमानः पितृविभूतिभिः सम्पूर्णकामो गोमुखादिभिः सह निवसन् स्वाभीष्टवधूसङ्गमनोरमान् सौर्यत्रिकल्पापरम्यान् दिवसान् व्यतियापयामास। अथैकदा स तामप्रयां कान्तां मदनमञ्जुकां सपरिजनां निजावरोधस्यान्तरनालोकय

मदनमञ्जुकापहार (कृत्यप्रक्रिया)

न्नुषसि रजनीविरहापगतकान्तिर्निशाकान्त इव विवर्णतां गतोऽचिन्तयत्, किं मदीयं चित्तं जिज्ञासमाना मदीया प्रिया क्वाप्यतिरस्यत्, आहोस्वित् मम कस्यचिदपराधस्य लेशात्क्वापि कुपितेव गता। केनचिन्माययाऽपहृताच्छन्ना वा कुत्रचित्स्थापितेत्यमनेकसङ्कल्पविकल्पपरम्पराविह्वलः किंकर्तव्यविमूढः समजायत। तस्य तथाभूतामनवलोकितव्यां[2] दशामवलोक्य तस्य पिता वत्सेश्वरो मातरो मन्त्रिणो भृत्याश्चातिविह्वलतां गताः। निजसुतया विहीना कलिङ्गदत्ता चापि समसुहत्।

अथैकान्तःपुरगणिकाऽऽकर्णयत्सु सर्वेषु नरवाहनदत्ताग्रेऽब्रवीत्, यद्धर्म्याग्रे सतीं मदनमञ्जुकामवलोक्य नभसोऽवतीर्ण एको विद्याधरयुवा यश्च 'मानसवेग' इति स्वनामोक्त्या कलिङ्गसेनामभ्येत्य मदीया सुता दातव्या इति तामयाचत, तदानीञ्चैनया निषिद्धो यथागतं गत्वा गुप्तमिदानीमागत्य स मायया किं न तामपहरेत्। परदारान् यद्यपि दिव्या नैव कामयन्ते तथापि रागान्धजनः सदसद्विवेको रहयतीति सर्वं सम्भाव्यते। तदाकर्ण्य नरवाहनदत्तस्य विरहोत्प्लुतं चेतो वीचिविक्षोभितमम्बुजमिवाजनि। रुमण्वांस्तत्राब्रवीत् 'इयं पुरी अभितो रक्षिता वर्तते इतीहागमनस्तुतस्य कस्यचिदपि प्रवेशनिगमौ न भवतः। हरप्रसादाधारया अन्येनानिष्टेन न सम्भवनीयमिति प्रणयकोपात्स्वयमेव क्वचित्स्थितया भवितव्यम्। प्रणयकुपिता हि कामिन्य एव प्रायः कुर्वन्तीति बहुत्र प्रसिद्धं वर्तते। तथाहि—

---

❀ कृत्यप्रक्रिया ❀

१ 'धातुसम्बन्धे प्रत्ययाः'। २ 'तव्यत्तव्यानीयरः'। ३ 'तव्यत्तव्यानीयर'। ४ 'केलिमर उपसंख्यानम्'।

बलिं दत्त्वा सत्यवद्यगीस्ते[1] भामिनीभूय[2] गता भूयोऽपि त्वदभिलषितं सम्पादयेयम्। त्वयाऽपि च मदीयो नवोऽनृतोद्यादीनवो मृज्यो[4] भवेत्।" एतत्तद्वाक्यमाकर्ण्य विरहकातरो नरवाहनदत्तस्तत्क्षणमेव स्तुत्यमाहत्य, घृतविपूयमेत्यलाङ्गं शिष्यं जुष्य विगतविनीयम् च निजपुरोधसं शान्तिसोमं सम्भृत्यभृत्यं समाहूयापरिमितकुप्याकुप्यधामा, क्षणाभ्यन्तर एव प्रयोजितनियोज्योपयमनसम्भृतसम्भारो गृह्यां तां मायामदनमञ्जुकां वस्तुतो वेगवतीं विद्याधरीमुपायंस्त[12]। सा च मद्य-पिशितादिभिः स्वहस्तेन यक्षेभ्यो बलिं ददौ। नरवाहनदत्तश्चाथ वासभवनम्या-रुन्ध्यया तया सह तत्कथनानुसारं मैरेयं[15] पेयं पपौ। परिवर्तितरूपया च तया महच्छायया सूर्य इव श्रव्यभव्यशक्तिर्जीवलोकसुखमुपाभुङ्क्त।

एकदाऽनया नरवाहनदत्तो रहसि निगदितो यत्सुसाह समुद्घाटितमुखी न कुर्यकार्येणापि त्वया कदापि विलोकनीया। एतदाकर्ण्य किमर्थमनयत्थमुक्तमिति सकौतुको राजपुत्रस्तोपकोत्तरास्तरसुप्तायां तस्यामन्वेषुर्यावत्तस्या मुखमुद्घाट्या-वलोकयति तावत् स्वापवेलावशेनापगतभव्य-मायारूपा सा काचिदन्यैव, न पुष्यतारोद्दीप्तमुखी मदनमञ्जुकेत्युपलभ्य जाग्रदेवावतिष्ठमानं प्रबुद्धा ताम् 'का, त्वम्? सत्य सर्वं मे मुग्धे त्वमभिधेहि' इति पप्रच्छ। समुपजातमतिभेदा सापि निजे रूपे वर्तमाना निर्निद्रोपविष्टं नरवाहनदत्तमेव यथावस्तु वक्तुमुपचक्रमे।

प्रिय, अस्ति हिमगिरिमानौ आषाढपुरनाम विद्याधरपुरम्। तत्र कुलपरम्परागतराज्यश्रीशक्तियुग्यं-वर्यः, अन्वमावास्य स्वादिष्टपाक्यफलसुसम्पादितपितृकामः, पूयमानावश्यपाच्यदैवहव्यः, सन्ध्याद्वयमप्राथमानोर्चाम्यः, सकलसल्लोक-

१ वद सुपि क्यप् च' इति यत्। २ 'भुवो भावे'। ३ वद सुपि क्यप् च' इति क्यप्। ४ 'मृजेर्विभाषा' इति क्यप्। ५. शब्दाण्यायां ण्यति कुत्वम्। ६ एतिस्तुशास्वृदृजुषः क्यप्'। ७ विपूयविनीयजित्या-। ८ सम्भर्तव्यकर्मकरं 'भृञोऽसंज्ञायाम्' 'समश्च बहुलम्'। ९ 'राजसूयसूर्य-'। १० 'प्रयोज्यनियोज्यौ शक्यार्थे'। ११ ऋदुपधाच्चाक्लृपिचृतेः। १२ विभाषोपयमने। १३ 'गदमद-'। १४ राजसूयसूर्य०'। १५ 'अचो यत्', 'ईद्यति'। १६ १७ 'राजसूयसूर्य०'। १८ 'विभाषा कृवृषोः' 'ह्रस्वस्य पिति कृति तुक्'। १९. 'भव्य गेय-'। २० पुष्यसिद्ध्यौ नक्षत्रे'। २१ 'युग्यं च पत्रे'। २२ अमावस्यदन्यतरस्याम्'। २३ २४ 'ऋहलोर्ण्यत्', 'यजो कु णिण्यतो'। २५. 'ण्य आवश्यके' इति कुत्वं न। २६ 'आसुयुवपिरपित्रपिचमश्च' इति ण्यत्।

लाप्य, नगरनि सारितनि शेषनिष्ठाप्य, प्रणाप्यंजनानधिष्ठितनिकाप्य, आनाय्यमानानाप्यं सार्शोप्य क्रियमाणकुण्डपाप्यामा यसोमस्तोम, परिचाप्यधाप्यां सधुच्यमाणचिर्त्यं, समयोचितसम्पाद्यमानाग्निचित्ये, अध्यधीयमानगेयोपस्थानीय प्रवचनीय, [11]निजभुजोपार्जितकरप्रचेयोच्छ्रितफलसम्पत्तिनिर्जरोऽजर्यसङ्गतिविद्याधराधिपवेगवत पुत्रो मानसवेगाख्यो राजाऽस्ति। वेगवतीनामा तस्याह कनीयसी स्वसा। स च मदीयो भ्राता मामतिद्विपन्मनिरतिद्विपन् [12]प्रगोपणीया विद्या दातु नैच्छदिति मया महता क्लेशेन तपोवनाश्रिताद् [13]अच्यात् पितु सकाशात् सर्वाधिकबला विद्या प्राप्ता। साऽहमाषाढपुरीयोद्याने रतिभिरावृता वीर्नां मदनमञ्जुकामवलोकितवती। सा च त्वदीया [14]भार्या मदीयेन भ्रात्रा माययाऽपहृता। सा हि साध्वी स्त्री अनिच्छन्ती च तेन पराभवितुम् अशक्या इति कुभ्रात्रा तेन तदनुनयने नियुक्ताऽहमेकदा त्वद्भलापपरां [16]प्रगे तामगे। तत्प्रबोधनप्रसङ्गाच्च तया साध्व्या सह त्वन्नाम्न्यभ्युदीरिते सति मम मनस्त्वदेकाग्र सञ्जातमिति 'यन्नाम्नि श्रुते त्व स्मरपरवशा भवे स ते पति' इत्याद्यो देवीस्वप्नादेशो मया स्मृत। अत तत्सस्मृत्य तां मदनमञ्जुका घृतिं धारयित्वा तस्या रूपेण त्वमु पायत [17]उपयंयत। तदेहि, यत्र ते प्रिया मदनमञ्जुका वर्तते तत्रैव तत्कृपाविष्टा त्वा नयामि। यतो ह्यात्मनिरपेक्षा मदीया कापि त्वत्प्रेमवश्यता वर्ततेऽत सपत्न्या कैङ्कर्यमपि मेऽभिरोच्यम्[18]। एतदाभाष्य स्वविद्याबलेन सा वेगवती तस्यामेव निशि प्रियावियोगानुभूयमानदुःखोकमोक[19]कोकमिव नरवाहनदत्तमादाय समुदपतत्।

एव चक्षुषामगोचरतां गतयोस्तयोरतद्वृत्तमाकर्ण्य नरवाहनदत्तपरिवारोऽतिक्षोभ प्रापत्। यौगन्धरायणाद्यो मन्त्रिणोऽपि मरुभूतिमुखै पुत्रै सह व्यह्वल

---

१ प्रणाप्योऽसम्मतौ'। २ 'पाप्यसाक्षाप्यनिकाप्यधाप्या'। ३ 'आनाप्योऽनित्ये'। ४ 'पाप्यसाक्षाप्य'। ५ कर्तौ कुण्डपाय्यसचाप्यौ। ६ अग्नौ परिचाप्योपचाप्यसमूह्या। ७ 'पाय्यसाक्षाप्य'। ८ ९ चित्याग्निचित्ये च। १० 'भव्यगेय०'। ११ 'भुजन्युब्जौ पाण्युपतापयो'। १२ 'अजर्यं सङ्गतम्' निपात्यते सह अजर्या सगतिर्यस्य। १३ 'ह्लज्रुपधात्'। १४ 'यजयाचरुचप्रवचर्चश्च'। १५. विभक्तण्यत्। १६ प्रात काले सामगच्छमिति भाव। १७ उपायेन विवाहित इत्यर्थ। १८ यजयाचरुच–' इति कुत्वाभाव। १९ 'ओक उच के' (ओक शकुन्तवृषल्यौ, तेन कोकपक्षिणमिवेति भाव)।

कुरु' इति । तदाकर्ण्य तदुत्तरस्य ददौ[1] वीणादत्तस्तत्रत्यराजपुत्रीपरिचयप्रसङ्ग वृत्तान्तो नरवाहनदत्त जगाद—'अस्त्यत्र रिपुञ्जय, परमधनुर्वदवेदय सायन्या- यानत्वायं[2], विद सर्वशास्त्राणाम्, वितुदोऽन्यदु[3] खदानाम्, सागरदत्ताख्यो गन्ध र्वाणा राजा । स्वकीयसौन्दर्याधरीकृताप्सरोरूपा तस्य गन्धर्वदत्ताख्या दयोदया धयां[4] गान्धर्वे परमोत्कर्षं प्राप्ता शौरिणा स्वय प्रदत्त स्वगीतक जेगीयमाना 'य कश्चिद्गान्धर्वविदस्त्रिभिर्ग्रामैः सम्यग्वैष्णव स्तुतिगीतक वीणायां वादयति स मे पतिरि'ति निरचैषीत् । अस्या राजपुत्र्या एतन्निश्चय ज्ञात्वा सर्वे वीणासु शिक्षन्ते किन्तु नाद्यावधि कोऽपि तथाभूतो वीणावादनपारयोऽभूदिति गृहे गृहे प्रदेशे आविष्टानामिव सर्वेषां हृदि तदवाप्तिदावोज्ज्वलो "ज्वालोऽधलोक्यते'[10] । वीणा दत्तादेतदाकर्ण्य समासादितसकलकलावैदुष्यसातयं[11] नरवाहनदत्तस्त प्रत्युवाद, 'अह सर्वासा कलानां स्वयवरवृत पति । त्रैलोक्ये वर्तमान यावद्गान्धर्वं, तस्य नाय[12] ।' एतन्निशम्य वीणादत्तो नरवाहनदत्त सागरदत्तान्तिक नीत्वोवाच, 'अय वात्सराजिर्नरवाहनदत्तोऽशेषगान्धर्वप्रवीण, [13]नर्तक-गायक-गायनी-नायक नन्दन, स्वकीयापूर्वसौन्दयसमाकर्षितपोडशहार्यनीगण, विद्याधरीद्वरतात्रिह नगरे विभ्रष्टस्तव सामीप्य संरक सञ्जात । गन्धर्वाचार्योऽय केशवस्तुतिगीतक वेत्ति' इति । एतदाकर्ण्य राजाऽब्रवीत् सत्य सर्वमेतत् । गन्धर्वाणा मुखान्मयैतच्छ्रुत- मित्ययमस्माक मान्यः । जीवकोऽय भूयात् । नात्र विचिकित्सालेशोऽपि यदय देवांशोऽन्यथा विद्याधरी सङ्गत्य कथमिह मानुषो गन्धर्वनिकेतमनुगेम ।

॥ इति निरुपपदकृत ॥

---

१ 'ददातिदधात्योर्विभाषा' । २ 'तनोतेरुपसङ्ख्यानम्' इति ण । ३ श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च' इति अतिपूर्वकाविणधातोर्णः । ४ 'इगुपध०' । ५ कन्या, 'पाघ्राध्मा धेट्०' । ६ 'शिक्षेर्जिज्ञासायाम्' । ७ 'गेहे क' । ८ 'विभाषा ग्रह' । ९ १० ज्वलितिकसन्तेभ्यो ण' इति पाक्षिको ण, पक्षेऽच् । ११ 'अनुपसर्गाल्लिम्प०' (भाति सुरार्थं सौम्यो हेतुमण्ण्यन्त) । १२ नेता, 'दुन्योरनुपसर्गे' इति ण । १३ 'शिल्पिनि ष्वुन्,' 'नृतिखनिर ञ्जिभ्य एव' । १४ 'गस्थकन्' । १५ 'ण्युट् च' । १६ हश्च व्रीहिकालयो' । १७ 'प्रुसृल्व समभिहारे वुन्' । १८ आशिषि च' । [ इति निरुपपदकृत ]

एतत्कथनानन्तर राजाज्ञया महत्तरिकाभिरानीता गन्धर्वकलाकलापैर्ह्या गन्धर्वदत्ताह्वा राजकन्या निजपितु पार्श्व समुपविश्य तद्वचसा उपवीणयन्ती मतिप्रह्वाम्[2] शंमदा[3] ब्राह्मीं श्रियमिवाङ्गुलित्रेण[4] स्वरान्

मदनमञ्जुकापहारे ( सोपपदकृत ) श्रुतिषु योजयन्तीं दृष्ट्वा नरवाहनदत्तो विस्मितिकार[5] तद्गीते रूपे च नितरां मुग्धोऽप्यवदत्, 'तन्त्रीवादन पटिष्ठवृतिकामे[6], कल्याणाचारे, राजपुत्रि, संमस्थस्ते[7]

वीणास्वर इति विविधस्वरवादनवहुक्षामाया[8] अपि भवत्या जाने, कुत्रचित्तन्या थाल्ग वर्तते।' एवमुक्त्वा यावत्स्मा निरीक्षते तावत्तत्रैको[9] बालस्तयाऽवापीत्येतद् वगत्य सर्वेऽपि ते स्वोच्छ्रायस्वर्गह्वायमिवापाढपुरगिरिमधिवसन्तो गन्धर्वा विस्म यमापु। विरतिमञ्चितायाश्च तद्विपञ्च्या दिविष्ठ[10]-प्रष्ठ-परमेष्ठीव[11] गन्धर्वपति सागरदत्तो गन्धर्वदत्ताहस्तात्ता वीणा भूमिष्ठ-पुञ्जिष्ठगन्धर्वकलामूर्त्तेरिव नर वाहनदत्तस्य हस्ते समर्पयन् 'राजपुत्र, इमा गृहीत्वा स्वकीयस्वरामृतरमेना स्माक श्रुती मन्तप्यास्मच्छोकापनुन्[12] भव' इत्युवाच। नरवाहनदत्तश्चापि तथा नुमात उपवीणयंस्तथा विष्णोर्गीतक्रमगायद् यस्मय ते गन्धर्वाश्चित्रलिखिता इवातिष्ठन्। गन्धर्वदत्ता चापि स्वप्रतिज्ञानुसार सर्वथा सन्तोषप्रद, प्रफुल्लकुमुद[13] माल्यव प्रणयार्द्रया दृष्ट्या तमनिभृतमवृत। तदालोक्य तथाभूतां तत्प्रतिज्ञा स्मरन्, सन्मार्गप्रेर्ह्स्तद्वाक्यसख्यैश्च[14][15] नरपतिर्गन्धर्वदत्ता सुता सद्यिन्यातोद्यके विवाहोत्सव विष्णुगीतसंज्ञाय[16]-नरवाहनदत्तसज्ञाय ददाविति नवोढया गन्धर्व

---

❀ अथ सोपपदकृत ❀

१ 'आतोऽनुपसर्गे क'। २ कविधौ सर्वत्र सम्प्रसारणिभ्यो ड' अत' 'आतश्चोपसर्गे' इति क वाधित्वाऽनेन ड। क तु सम्प्रसारणे प्रहुव इति जायत। ३-४ आतोऽनुपसर्गे क'। ५ 'कर्मण्यण्'। ६ शीलिकामिभक्ष्याचरिभ्यो ण'। ७ 'सुपि स्थ'। ८ ईक्षिक्षमिभ्याञ्च। ९ ह्वावामश्च' इत्यणि 'आतो युक् चिण्कृतो'। १० 'सुपिस्थ'। ११ 'अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्य स्थ'। १२ 'सुन्दशोकयो परिमृजापनुदो'। १३ 'कप्रकरणे मूलविभुजादिभ्य उपसख्यानम्। १४ 'प्रे दाज्ञ' इति णापवाद क। १५ समि ख्य' तद्वाव सचष्टे इत्यथ चक्षिङ ख्याञि क। १६ उप सृष्टत्वात् 'कर्मण्यण्' 'आतो युक्—' 'गापोष्टक्' इत्यस्याप्रसृष्टे एव प्रवृत्ते।

दत्तया दिव्यान् भोगान् भुञ्जानो यथावसरं शीधुपः स शीधुपीं[1] ताम् अनुक्रीडन्[2] चिरं तत्र तस्थौ ।

एकस्मिन् दिने कवचहरो[3] वत्सेशांशहरो[4], मनोहरां नगरश्रियं समवलोकयितुं नगराद्विनिर्गतः सुखाहरांस्तांस्तान्[5] प्रदेशानालोकयन् भ्रमणार्हं[6] पुरोद्यानं समदः स्तम्बेरम[7] इव प्रविवेश । तत्र च दुहित्रा सहाकाशादवतरन्तीं, 'पुत्रि, सोऽयं वत्सराजस्ते भावी पतिरिति' निजसुतां जल्पन्तीमनभ्रेऽपि खेशयां[8] सवृष्टि विद्युन्नमिव व्योमेचरां[9] योषितमेकामपश्यत् । समुपागतां च 'का त्वम्, किमर्थं चेहागतेति' तामन्वयुङ्क्त । तदाकर्ण्य स्मितोपक्रमणी दिव्या योषित्तमब्रवीत्, 'देव, अहं हि गिरिशप्रभावेण[10] [11]भिक्षाचरीकृतनिजारिनगरस्य, शत्रुसेनाचरस्वर्णनमस्यादितभर्गस्य, धार्मिकपुरस्सरस्यापि[12] सयुगपूर्वसरस्य[13] तपस्विनोऽपि महासिधनुरादायचरस्य सत्पथोच्चारणभीरोरपि च रणविभीतेर्देवसिंहाभिधानस्य विद्याधरपतेर्यशस्करी[14] विद्येव[15] वचनकरी जीवनसहचरी[16] भार्या धनवती नाम । एषा चाजिनावतीनामधेया पतिंवरा[18] मदीया कन्या करप्रतापेन [19]दिवाकरस्येव, शरीरधाम्ना च विभाकरस्येव, स्वपक्षसम्पदामादिकरस्यापि विपक्षसम्पदामन्तकरस्य, निजप्रजानन्दकरस्यापि महाधनुष्करस्य, निजकुलकुमुदनिशाकरस्याप्यज्ञानतमोऽहस्करस्य, द्विकरस्यापि बहुकरस्य, क्षमकरायमाणादितरस्याम तस्यापि धनूरीकृतशामनारिनारीनिस्सिन्दूरीकृतसीमन्तस्य चण्डसिंहस्य पुंसोऽनुजा[21] भगिनी ।

---

१ 'पिबते सुराशीध्वोरिति वाच्यम्' इति सहकारेण 'गापोष्टक्' ङीप् । २ अनातृतीयार्थ कर्मप्रवचनीयत्वेति 'क्रीडोऽनुसम्परिभ्यश्च' इत्यस्याप्रवृत्ति । ३ 'वयसि च' । ४ 'हरतेरनुद्यमनेऽच्' । ५ 'आङि ताच्छील्ये' । ६ 'अर्ह' । ७ 'स्तम्बकर्णयोरमिजपो' 'हस्तिसूचकयोरिति वक्तव्यम्' । ८ 'अधिकरणे शेते' । ९ 'चरेष्टः' टित्वान् ङीप् । १० 'गिरौ डश्छन्दसि' इत्यस्य लोकेऽप्रवृत्त्या गृधातो 'इकुड्यापिभ्य' इतीकि निष्पन्नाद्गिरिशब्दादस्त्यर्थे लोमादित्वाच्छः । ११ 'भिक्षासेनादायेषु च' । १२ 'पुरोऽग्रतोऽग्रेषु सर्तेः' । १३ 'पूर्वे कर्तरि' । १४ 'कृञो हेतुताच्छील्यानुलोम्येषु' । १५. 'विदन्ति अनये'ति विग्रहे 'संज्ञायाम्'—इति यपप् । १६ पचादिषु चरडिति पाठात्, सिद्धिः । १७ संज्ञायाम्, 'मर्सा यष्ट्च —इति दीर्घः । १८ सहायां भृतृवृजि०'—इति खच्, 'अरुर्द्विषदजन्तस्य मुम्' । १९ 'दिवाविभानिशा०' । २० 'कर्मणि भृतौ' । २१ 'अनौ कर्मणि' ।

यस्या प्रियङ्करो भर्ता गगनोद्गतया गिरा भवानादिष्ट इति वेगवत्यात्र निक्षिप्त भाविविद्याधरेश्वर भवन्त निजविद्याबलेनावगत्य स्वच्छन्दमभिधातुमिहायाता । स्वैर वैरकारा विद्याधरा हि नैमगिकमानवद्वेषेणैकक त्वा स्तम्बकरि–कडङ्कर कुक्षिम्भरि–बलि–नाथहरिमिव मा मृत्युदेवतायायुपहारीकुर्य्युरिति विद्याधरैक-गम्येऽत्र स्थाने तव स्थानमस्थाने । तदागच्छ, आवामन्यत्र न याव साम्प्रत मस्मात्त्वा तदगम्यां भुव नयाव । अवसरे सम्प्राप्ते त्वमेता मदीया सुता परिणेष्यसि ।' एवमुक्त्वा धनवती तमादाय ससुता, दिवमुत्प्लुत्य श्रावस्त्या उपवने च त निक्षिप्य अजिनावत्या सहातिरस्यत् ।

एतस्मिन्नेवान्तरे वानमर्जान रजयन दूरागतो राजा प्रसेनजित् उदाराकार लक्षण हस्तिमवलोपपन्नमपि प्रियवद त राजपुत्र दृष्ट्वा सकौतुक समुपसृत्यानुयुक्त तत्कुलनामधामाऽतिप्रीत स्वभवन नीत्वा तच्छ्रीलशौर्यादिगुणवशवदो भगीरथ यशोऽभिधा निजकन्यामजायाघ्नस्यापि जायाघ्नस्य तस्य अपतिघ्नीमपि[11] पतिघ्नी चकारेति तद्दिनोदाय धात्रा सृष्टया मूर्तिमत्या लक्ष्म्या इव तया महार्हविभवो नरवाहनदत्तस्तत्र चिरमरस्त ।

---

१ 'क्षेमप्रियमद्रेऽण् च ।' २ न शब्दश्लोककलहगाथावैर०' इति टस्य निषेधे अण् । ३ 'स्तम्बशकृतोरिन् व्रीहिवत्सयोरितिवक्तव्यम्' । ४ फलेग्रहिरात्मम्भरिश्च इत्यत्र चात्कुक्षिम्भरि । ५ 'हरतेर्दृतिनाथयो पशौ' । ६ वातशुनीतिलशर्धेषु —इत्यादिना खश् । ७ 'रजेर्णौ मृगरमणे नलोप' । ८ शक्तौ हस्तिकपाटयो' । ९ 'प्रियवशे वद खच्' । १० अविद्यमानो जायाघ्नस्तिलको यस्येत्यजायाघ्नस्तस्येति बहुव्रीहि', न जायाघ्नोऽजायाघ्न इति तत्पुरुषो वा । जाया हन्तीति जायाघ्नस्तस्यापि अजायाघ्नस्येति विरोध' । जस्य = पितु अय = शुभावहो विधिस्त न हन्तीति जायाघ्न स्तस्येति परिहार' ( निजजन्मना पितु समृद्धिकरस्येति तत्त्वम् ) लक्षणे जायापत्योष्टक्' । ११ 'अमनुष्यकर्तृके च' अविद्यमाना पतिघ्नी पाणिरेखा यस्या सा अपतिघ्नीति बहुव्रीहि, न पतिघ्नी इत्यपतिघ्नीति तत्पुरुषो वा । अत्रत्यो विरोध द्वितीयस्य पतिघ्नीशब्दस्य पातीनि पञ्चरत्नकस्त तिनुधन्ति आस्कन्दन्ते इति पतिनो द्वेषिण तान् हन्तीति पतिघ्न शत्रुघाती ( मूलविभुनादित्याश्रक: ) तस्य स्त्री चकारेति ह्युत्पत्यावगमय' ।

अथैकदा लोकलोचनानन्ददायिनि रजनीरमणे प्राचीदिग्वधूमुखमण्डने, मानिनीमानखण्डने, निरभ्रनिर्मलव्योमदर्पणे भगीरथयशोधवले इवामृतनिधिनि दिग्भामिनीभालबिन्दाविन्दावुदिते सति, कौमुदीसुधाधौते हर्म्याग्रे, प्रियया सह तदिच्छयाऽस्मानमावर्तीत्। मैनितापानलीऽश्च सोऽभ्यन्तरं गतो भगीरथयशोयुक्तः शयनीयकं भेजे। तत्र च तस्यां प्रियायां सुप्तायां सुखविनिद्रकाऽस्मावकस्माद् चिचिन्तत, 'भगीरथयश प्रीतिसम्पद् मामिह रमयन्तीऽन्या मामकीना भामिन्यो न स्मेरयन्ति। मैवं[1] कश्चो विधिरेवात्र हेतुः। ललाटतपनिष्ठुराक्षरां तल्लिपिं वाचयितुमाम्नाहितनिश्चविश्वंभराभारभुजंगमोऽपि[5] वाचंयम[6]। स एव हि शुनिंधय[7] सरिंधय स्तनंधयानप्युग्रंपश्य[9]महामहिमशालिनाम् [11]आढ्यमनिंगुल मुष्टिंधयान्[12] करोति। प्रियंकारान[13]पि च प्रियस्य पृथक् करोतीति [14]अतिकरे काल द्विषन्तपा अपि मत्प्रियकरा मघिवा मरभूत्यादयो मत्ता नियोजिता नाहमथाव ध्यस्य दुःखस्य अन्तगं[16]। सवासयनस्थानस्मत्सुखसा चतुरो गोमुखोऽधुना दूरंग इति न सोऽपि वर्तमानाद्विग्न्याधतममपूणधाणिंधमे[18] जीवनाध्वनि [19]इरम्मद इव मां मार्गं निदिशति'।

एतच्चिन्तयन्नेव स निशाम्य[2] मधुरं मृदु च हा ! दुःखमिति कयाचित्स्त्रियवोदीरितं वच शुश्राव। श्रुत्वा च तद् दीप्तप्रदीपं स्वकार्यजनंसुखे[20][21]ऽप्यमस्तुत जनदुर्गेऽत्र भयनेयावदितस्ततोऽवलोकयति तावद्वयासा तस्तदानींतनं[22]तमोऽपहं नाया दिव्यं मुखचन्द्रं पश्यन्नपि शेषमङ्गमपश्यन्तद्दर्शनोत्सुकताक्लेशात् पद्मतद्रूपाकृष्टनयना दोलायमानचेता क्षणमतिष्ठत्। एतस्मिन्नेवान्तरे गवा

१ आध्याने खोरणा'विस्यस्याप्रवृत्ति (नोत्कण्ठापूर्वकस्मृतिविपयीभवन्तीत्यर्थः)। २ 'सर्वकूलाभ्रकरीषेषु कषः'। ३ 'असूर्यललाटयोर्दृशितपोः'। ४ सक्षाया सृतृशिजि०'। ५ 'गमेः सुपि वाच्य' 'खश्च डिद्वा वाच्य'। ६ 'वाचि यमो व्रते', 'वाचंयमपुरंदरौ च'। ७ 'वातशुनीतिल०', 'खित्यनव्ययस्य'। ८ 'घटीखारीखरीपूपसङ्ख्यानम्'। ९ 'नासिकास्तनयोर्ध्माधेटोः'। १० 'उग्रंपश्येरम्मदपाणिंधमाश्च'। ११ 'कर्त्तरि भुव खिष्णुच्खुकञौ'। १२ 'नाडीमुष्टयोश्च'। १३ 'क्षेमप्रियमद्रेऽण् च'। १४ कष्टप्रदसमये 'मेघर्तिभयेषु कृञः'। १५ 'द्विषत्परयोस्तापेः', 'खचि ह्रस्वः'। १६-१७ 'अन्तात्यन्ताध्वदूर०'। १८-१९ 'उग्रंपश्येरम्मदपाणिंधमाश्च'। २० 'अमनुष्यकर्तृके च'। २१ 'दुदुरोरधिकरणे'। २२ 'अपे क्लेशतमसो'।

स्तात् सा दिव्या स्त्री प्रदर्शितनिजपाणिपल्लवतल्लजा 'इत एहि' इति सूचक विरहितवर्णसङ्घाट[1]मङ्गुल्याऽस्मसकेतत्। तदवलोक्य ससुहृदयितान्निजाम्भवनात् स्वैरं निर्गत्य तद्दिव्ययोषितमुपागतवति समुत्के तस्मिन्नित्थं साऽशब्दायिष्ट 'हा मदनमञ्जुके, अन्यहृदयक[2]ष्टध्न पतिं प्रशमन्ती त्व हतासि' तदाकर्ण्य स्मृतप्रिय, प्रज्वलद्भिरहवह्निर्नरवाहनदत्तस्तां दिव्यभामिनीमभाणीत्, 'सुभगे, प्रियङ्[3]करणेनानेन रूपेण सुभगं[5]भावुक मां दर्शनमिह ददती का त्वमेतादृशी[6] दुर्मद[7]-मदगङ्गनाग्र[8]णीर्निनममस्पृशा[9] [10]वाचा मां विस्मायमसि। कुत्र वा त्वया मदीया प्रिया मदनमञ्जुका समवलोकिता ? किमर्थञ्च युवजनकामप्रसू[11]स्त्व ममोपनिपद्[12] अवलोकयसे एतत् सर्वं सविस्तरं श्रावय' इति। एतन्निशम्य सा तं तन्निविड निशि ततोऽतिदूरं नीत्वा, 'भवनाशंभा[13]ग, श्रुणु सर्वम्' एवमुक्त्वेत्थं वक्तुमारभत।

अस्ति विविधप्रतिभितशिल्पिनिर्मितप्रतिभिस्यभ्रलिह[14]प्रासादपुष्करावत्या पुरि प्रातिकूलिकपूतनामरित्कूल[15]मुद्रुजोद्व्य[16] इवायोध्य, प्रत्यहं [17]खारिम्पचपात्रपाचित नैर्ख[18]म्पचपायसम्पादिताशनायिताशितम्भव[19], सपत्नासूर्यम्पश्यदारमुखविधुविधु[20]-न्तुदारुन्तुद, मन्दुरानन्दपरिमितनुरङ्ग मितङ्ग[21]मोऽपि कुलायिकापरिपालिता गणिलकूजद्वजु साम[22]ग विह[23][24]ङ्गम, जनमेजय इव द्विपस्नागसहर्तापि भुजङ्गभीरु, भय[25]ङ्करभूभृद्भगन्दर[26][27] पुरन्दर[28], सद्गुणग्राम[29]ेगोऽपि सर्वत्रगविचार, शत्रुशीर्षघाती,[30][31]

---

१ कर्मणि समि च' इति सम्पूर्वकाद्धन्तेरण् टकारश्चान्तादेश। २ शक्तौ हस्तिकपाटयो'। ३ 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्'। ४ 'कर्तरि भुव खिष्णुच्खुकञौ। ५ 'त्यदादिषु दृशोऽनालोचने कञ्च'। ६ 'सत्सूद्विषद्रुहदुह०'। ७ समानान्ययोश्चेति वक्तव्यम्, दृगदृशवतुषु। ८ 'अग्र ग्रामाभ्यां नयतेर्णो वाच्य'। ९ 'स्पृशोऽनुदके क्विन्'। १० 'क्विब्वचि०'। ११–१२ 'सत्सूद्विष। १३ भजो ण्वि'। १४ 'वहाभ्रे लिह'। १५ 'उदि कूले रुजिवहो'। १६ मेघोद्ध्यौ नदे'। १७ परिमाणे पच'। १८ मितनखे च'। १९ 'आशिते भुव करणभावयो' इत्यनेन भाव खच्। २० 'असूर्य ललाटयो'–। २१ 'विध्वरुषोस्तुद'। २२ 'गमे सुप वाच्य'। २३ 'गापोष्टक्'। २४ खच्च डिद्वा वाच्य'। २५ एजे खश्'। २६ मेघर्ति-भयेषु कृञ'। २७ 'भगे च दारे' इति काशिका'। २८ 'पूः सर्वयोर्दारि-सहो'। २९ अन्यत्रापि दृश्यते इति वक्तव्यम्' इति ड। ३० 'सर्वत्र पक्षयोरुपसख्यानम्'। ३१ कुमारशीर्षयोर्णिनि'।

राजधराजवर्चस[1], अग्न्याराधनपिङ्गल पिङ्गलगान्धारो नाम विद्याधरेश्वर। मित्रशीरपि[2] समवाप्तगुरुजनशुभाशी[3], सत्यशीलतनुच्छत्[4] स यज्ञविदामुरपि[5] धर्मसूत्रच्छिदो मुः[6], इन्द्रियसयैसाम्[7] 'अप्रेगू अपि कामादिषड्वर्गरिपुधू,'[8] सम्भाव्यमानगणितजनोपकृतिसम्बोधोऽपि शम्य[9]", सयसाधुकारी[10][11] अनुजीविभिरपि[12] मधुव्यवहारी[13], प्रातःस्नायी,[14] स्थण्डिलशायी[15], क्षीरपायी[16] ब्रह्मवादिनाम्[17] आदेशानुसारम् अग्निष्टोमयाजी[18], सोमयाजी[19] च भूत्वा श्येनचित्[20]कङ्कचिदादिषु प्राज्याज्ययाजि[21]त्रिविधाग्नि[22]कर्मकृत[23] अग्निचित्सोमसुत्[24]ख्यातिमवाप। तस्मादेव समाराधनप्रसन्नस्य हुतादो[25] वराद् विज्ञाना[26], निजोपार्जितविप्रौजा[27]जनकामदुर्धृत्ते[28] सर्वंगसाभिलष्यमाणशर्मणोऽपि [29]कस्यादो सुशर्मणस्तस्यास्तातनसाधिप्रशाम [31]प्रतान् प्रभावतीनामा कन्याहम्। एकदा चापापापुरे स्वाभिलष्यमानिनी[32] निजमर्मा वेगवतीं द्रष्टुमहमगमम्। किन्तु सा कापि वनेवर्तिनी[33] तपसि स्थितेति नामप्राप्य तन्मातु पृथिवीदेव्या मुखात्वसियां मदनमञ्जूनामग्रस्थिता ज्ञातवती अत तामवलोकयितुमत्रायाता। सा च त्वद्विरहविधुराऽनशनकृशा, पाण्डुरधूसरा, वर्द्धकवेणी[34], त्वद्गुणगायनी, तदनु गदु स्वितोदधु निधाधराधीशकन्यावृन्देन परिवारिता, तव स्वरूपपरिचय मल्लमदवादिति विद्याप्रभावादिदानीं त्वामिह

---

१ राजघ उपसंख्यानम्'। २ 'क्विप् च' शास इत्० इतीत्वम्। ३ 'आशास क्वावुपधाया इत्व वाच्यम्'। ४ 'इस्मनत्रन्क्विषु च'। ५ ६ 'उपरस्थर०'। ७ गमादीनामिति, वक्तव्यम्। ८ 'ऊङ् च गमादीनामिति वक्तव्यम्'। ९ 'राल्लोप'। १० 'म्य क च'। ११ 'साधुकारिण्युपसंख्यानम्'। १२ 'सुप्यजातौ णिनिस्ताच्छील्ये'। १३ 'कर्त्तर्युपमाने'। १४ १५ 'व्रते'। १६ 'बहुलमाभीक्ष्ण्ये'। १७ 'ब्रह्मणि वद'। १८ १९ 'करणे यज'। २०, 'कर्मण्यग्न्याख्यायाम्'। २१ आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्'। २२ सुकर्मपापमन्त्रपुण्येषु कृञ। २३ अग्नौ चे'। २४ 'सोमे सुञ'। २५, हुतमत्तीति हुताद् अत्ति तस्य, 'अदोऽनन्ने'। २६ 'अन्येभ्योऽपि दृश्यन्ते' विड्वनोरनुनासिकस्यात्'। २७ उपसर्गे च संज्ञायाम्। २८ 'दुह कब्घश्च'। २९ 'क्ष्ये च'। ३० शॄ हिंसायाम् अस्मात् अन्येभ्योऽपि०' इति मनिनि न्ड्वशिकृति'। ३१ अनुनासिकस्य क्वि०' इति दीर्घ; 'मोनो धातो'। ३२ मन', 'स्वयन्मानिनोश्च'। ३३ 'व्रते'।

स्थित विश्राय त्वदानयनाय त्वत्प्रियतममन्यां तामाश्वास्य तदर्थसिद्धये तवाम्या शमाशु समागतास्मि । किन्त्विह प्रेमिनिरमन्य त्वामन्यचिन्तानिमग्नमवलोक्य 'हा हु स्वम्' इत्युक्त्वा त्वदीयप्रियमन्या साऽनुशोचिता । एतन्निशम्यात्युत्कण्ठितो वासवदत्तनप्ता जगाद यद्भयि कृपालुश्चेत् तदा अदृष्टजन्यतिकरेणोपलब्ध साक्षात्कृतिस्त्वम्, यत्र मे प्रिया मदनमञ्जुका वर्तते तत्र नीत्वा, मा तद्वियुक्तस्य पारपरिक्लैपारदर्शन कुरु । [ इति सोपपदकृत ]

एतदाकर्ण्य तमादाय खमुत्पतन्ती प्रभावती विहगेन मार्गेण ज्योतिष्मत्या निशि गन्तु प्रववृते । या ती चैकत्र ज्वलन्तमग्निमवलोक्य, करधृतनरवाहनदत्त हस्ता, तत्प्रदक्षिणा कुर्वाणा, प्रौढा सा, युक्त्यैवोद्वाहविधिं निर्वर्तितवती । नभस्तलात्तुङ्गतावनतां पृथिवीम् आशी विषगतिसदृशी सरित, अभ्रङ्कषान् पर्वतान्, अन्यानि च कौतुकानि पदे पदे प्रियमसु दर्शयन्ती समुत्पतन क्रमेण चातिदूरमाजगाम । तत्र चाकाशगमनश्रान्ते नरवाहनदत्ते पिपासौ, व्योममार्गादवतीर्य चन्द्रांशुधवलाम्भस सरस समीप वनान्ते चैकस्मिंस्तमवा तारयत् । तत्र पीताम्भस, क्षीणवदध्वक्ला तेस्तस्याश्रितैकान्तरतोर्णुतैर्रमणीये कानने, कान्तासम्भोगलालसा संमुत्पन्नवतीति नरवाहनदत्तेन हठादर्थिता प्रभावती कृताश्वासा मदनमञ्जुका चिन्तयन्ती कृच्छ्रादनिच्छया सम्भोगे प्रवृत्ता तस्मै स्वाभिप्राय सूचयन्ती कथामिमामकथयत्—

मदनमञ्जुकापहारे ( निष्ठा निर्देश )

आसीत् पुरा पाटलिपुत्रे काचिद् दुर्नर्दयितक्सुनुरतिरूपवती पूर्नधना

१ 'आत्ममान खश्च खित्यनव्ययस्य'। २ आङ्पूर्वकाच्छ्यते क्त, 'श्वीदितोनिष्ठायाम्' इतीडभाव 'ओदितश्च' इति न, यजादित्वात्सम्प्रसारणे 'हल' इति दीघ' आगतास्मीति भाव । ३ आत्मानप्रेमिनर मन्यते इत्यर्थे आममाने खश्च इच एकाचोऽम्प्रत्ययवच्च'। ४ 'इचएकाच'–। ५ 'सप्तम्या जनर्ड' इत्यापो सना० । ६ 'पञ्चम्यामजातौ'। ७ 'अन्येष्वपि दृश्यते इत्यत्र अपि शब्द सर्वोपाधिव्यभिचाराथ । तेनात्र परिपूवकात् खनूधातोड टाप । ८ दृशो क्वनिप् । ९ 'ट च विहायसो विहादेशो वक्तव्य'। १० 'निष्ठा । ११ कतरि कृत् । १२ 'निष्ठायामण्यदर्थे' 'क्षियो दीर्घात्'। १३ 'श्र्युक किति'। १४ ऊर्णातेर्णुवद्भावो वाच्य' तेन एकाच्त्वान्नेट् । १५ रदाभ्यां निष्ठातो न पूर्वस्य च द'। १६ दु गतौ, क्ते 'दुग्वोर्दीर्घश्च' विधवन्यर्थ । १७ 'पूञो विनाशे', निर्धनस्यथ ।

धनीका। समुच्छूनैकामयासना सा चाममतोपायानुनिश परपुरुषसङ्गार्थं 'पुत्र, मोदकास्तेमातरानेतास्मीति' शून्यभवनप्रीहीण सुत समाश्वास्येतम्ततो याति स्म। यतो ह्यन्वहमुप सा मोदकानानीय बालकाय ददाति स्मेति स तदाशया गृहेऽदूनैधतास्तूष्णीमतिष्ठत्।

एकदा विस्मृतिवशान्मोदकाननानीयमाना सा मोदकान् याचमानाय बालकायाकथयत्, 'पुत्र, अहं तु त्वकामुकरूपमोदकमतिरिच्य नान्य मोदक जाने। तन्निशम्यान्यामकथयाऽनया मदर्थं मोदका नानीता इति धीताश्वामनाशा ऽनैशीनस्वान्त स शिशुर्निरसुस्सजात'।

इत्थ हे प्रिय, त्वया सह सर्मगाऽह सुतरां त्वा स्वीकरोमि चेन्मयैव त्वत्म क्षमाय कृताश्वासाय अपीदानीं शैकणाशाया मदनमञ्जुकाया कुसुमसुकुमार हृदय परिस्कन्दीकृत मवेदिति प्रतिस्तब्धाह दयितमप्ययूनैदयित मदनमञ्जुका- त्वां नाभिलषामि। प्रभावस्येत्थमुक्तो नरवाहनदत्तस्तस्या (समागम) श्चारित्रौदार्य भृशा प्राशसत्। नयनयाश्चर्यनिर्माणकौशलञ्ज विधरनुचिन्तयन् 'यत्र मदनमञ्जुकाऽऽस्ते तत्र मा नयति' च पुनस्तामयमवीत्। तच्छ्रुत्वा प्रभावती तमादाय व्योममार्गणापादपुर प्राप्य स्नेहन विना "निर्वाणोन्मुखीं दीपप्रभा रश्मिश्री स्नेहेनेव, ग्रीष्मे "शुष्कजीवनां नदीं प्रावृट् वृष्टिपूरेणेव विरहाधिक्षामां", शुष्यन्तनु मदनमञ्जुकां तेन सङ्गमयामासेति शर्वरीशर्वरीशयोरिव तयो सङ्गमोऽन्योन्यानन्दाय समपद्यत। सङ्गमेभावपि तौ प्रभावती प्रभावोपनतानि मुर्पक्वानि फलान्यन्यानि स्वादिष्ठभोज्यानि चाभुञ्जा

१ स्त्री। २-३ श्रोदितश्च'। ४ 'स्वादय ओदित, अतः दुह् परि तापे अस्य श्रोदितश्च' इति निष्ठानत्व दून। ५ 'विभाषाऽभ्यवपूर्वस्य', हल', 'स्योऽस्पर्श'। ६ 'ग्रघोऽनपादाने, 'महय विभाषा' सगतेत्यर्थ। ७ ओव्रश्चू छेदने, 'स्वरतिसूति-इति वेट्कत्वात् यस्य विभाषा 'श्रोदितश्च' तस्यासिद्धत्वात् निष्ठादेश षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्य'। ८ 'परिस्कन्द प्राच्यभरतेषु'। ९ 'प्रतिस्तब्धनिस्तब्धौ च'। १० 'दिवोऽविजिगीषायाम्' अक्षीणकान्तमिति भाव। ११ निर्वाणोऽवाते'। १२ 'शुष क'। १३ 'क्षायो म'। १४ 'पचो व'। १५ 'भोज्य भक्ष्ये'।

ताम्। तद्विद्यावलेनैव च मदनमञ्जुकामपहाय न कोऽप्यन्य प्रेतीमेष्वपि जनेषु द्रष्टु तमशकत्।

प्रातःकाले विरहकृशायास्तस्याः पक्ष्मेर्णी[2] मुञ्चन्त निजप्रियमत्यमर्षपरवशा मदनमञ्जुका जगाद, 'क्षीबे[3] मानसवेगे हते पूर्वेषा हर्षोत्फुल्लनेत्रेणार्यपुत्रेण तदसृक्कर्ममुष्टहस्तेन मोक्तव्या, मृताया मर्मणा मया सहैवमेव बद्धा वा दग्धव्यनि समधिकदुःखनुभया मया चिन्तमासीत् किन्त्वसावग्निपर्वते वेगवत्या भिन्नितोऽप्य दृष्टेन प्राणो न म्लान इति विदितमेव भवतस्तथापि जीवत्येव तस्मिन्नयैषा त्वया मुक्तेति ह्रीणाया मे मनो दोदूयते। माऽस्या परन्येत्थमुक्तो नरवाहनदत्तस्तामित्थ मान्त्वयन्नुवाच, 'विद्या ममासाद्याचिरादेवामु शत्रु हत्वा पूर्तंत्वदभिलाषवित्तँ कृतकृत्य शान्तचित्ता त्वा करिष्यामीति खेद मा गा'। एव मदनमञ्जुकां समाश्वास्य नरवाहनदत्तो वैद्याधर पुरे उवास। प्रभावती च ध्यातस्वविद्याप्र भावत प्रातनरवाहनदत्ता स्वयमन्तर्हितैव तदीयमेवमप्रतर्क्य रूप कृतवती यत्त द्रूपेण स्यातोऽपि राजपुत्रो निःशङ्क यथासुख विविधान् भोगान् भुञ्जानस्त ग्रामाञ्चक्रे तथापि, इय मदनमञ्जुका वेगवत्या वयस्येनीमा वित्तीकृतनिजसखी सख्येकचित्तीभूता प्रभावती, निजसखीमिव सर्वथा परिचरति, एतञ्च 'अय भित्तीकृतसकलसपत्नस्वान्त प्रच्छन्नोऽनङ्ग इव मूर्तो, नरवाहनदत्त' एतत्सर्वं जानाना आषाढपुरवासिनो मानसवेगत, तद्रहस्यमुद्घाट्यन्तो निजकन्याऽनृण्य[5] जग्मु।

एकदा पारस्परिकयातामसङ्गेन मदनमञ्जुका, मानसवेगकृतस्वापहरणवृत्तान्त निगदितवती यत्स्खलितलग्नालुब्धो[11] गृध्यागुधितो[12] मानसवेग [13]क्षुधितो हर्यक्षो

---

१ स्त्य प्रपूर्वस्य' प्रस्त्योऽन्यतरस्याम् ( स्त्यै शब्दसघातयोः; सर्वाभू तेष्वपि जनेषु इत्यथ )। २–३ अनुपसर्गात् फुल्ल क्षीबकृशोल्लाघाः'। ४ 'उत्फुल्लसम्फुल्लयोरुपसख्यानम्। ५ 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् श्वादितो निष्ठायाम्'। ६ ध्रयुक' क्विति', न ध्याख्यापृमूर्च्छिमदाम्'। ७ वित्तो भोगप्रत्यययो'। ८ भित्त शकलम्'। ९ न ध्याख्यापृमूर्च्छिमदाम्, 'राल्लोप'। १० ऋणमाधमर्ण्ये'। ११ 'लुभोऽविमोहने' गार्ध्ये लुब्ध। १२ उदुपधाभावादिकर्मणोरन्यतरस्याम्', 'शब्विकरणेभ्य एवेष्यते', ( गुधित परिवेष्टित इत्यथ। गुध परिवेष्टने, दिवादि )। १३ वसतिक्षुधोरिट्'।

हरिणीमिवाभिभूय स्वमायया मामपहृत्य क्रूरकर्मभिर्भाययन् यावद्देवानुकूल यियति तावद्देवार्मर्पितेन, समुद्धृताग्निना, एलग्निह्नेन, भक्तजनाविर्तवाञ्छितेन, भैरवाकारेणाऽयिर्भूय भगवताभैर वेण सहुङ्कार प्रधर्षित 'किमिय विद्याधरेन्द्राणां भाविचक्र वर्तिनो भार्याऽस्मासु स्थितेष्वव परिभूयते' ? भगवतस्य

मन्नमस्त्रिकाया (स्वापहरणवृत्तान्त)

मुक्त. पापो मानसवगो मुखाद् रक्त वमन्नन्यां क्लिशितो निपतितवान् । ततस्ति रोहिते देवे, निर्धूपिततद्धुङ्कारभयशल्य, क्षणाद्वाश्वासन, स मयि मैर्या क्षिप्रमो निजगेह गत । अन्त पुरचन्द्रश्च तदामीमतिमीनां, वियोगविक्लवा, प्राण त्यागोन्मुखीं मामुपग य मउत्फीतांभिर्वाभि सान्त्वयन्त्य गथमुक्तवन्यो यथुरा पूर्तचरित्रा काञ्चिदूपवतीं मुनिकन्यामवलोक्य काममोहितो हठात्तामपहरत्तय मानमवगम्नश्रन्धुभि शप्तो यदनिच्छन्तीं परनारीमभिजिगमिपोस्ते मूर्द्धा शतधा विशल्प्यतीति वलादय परदारान् गन्तु नैव शक्तोस्यसौ मा भैषी, स्वादृशे नाचिरमेव ते भर्त्रा सह सङ्गम सम्भावित इति प्रमोदिता भव । एवमुक्तवतीष्वेव तासु तत्त्वसा वेगवती मामाश्वासयितुमिहागत्येतो गता त्था प्रासेत्यत पर न किञ्चित्ते निगूहम् ।

तदनन्तरमेव ज्योत्स्नासितैपत्रैरमला चान्द्री तनुरिव स्वकीयेन सौम्येन दर्श नेनामृतेनेव मा सिञ्चन्ती दुरात्मनोऽस्य साध्वी धात्री पृथ्वी दवी तत्रागाग्येथ मामवबोधितवती यन्मद्दुहितुवगत्या अत्रास्मिन राज्ये वितृक्लिप्तो भागो वर्तते । सा च, त्वदीयेन भर्त्रा परिणीतेति त्वदीया सखी । अतस्तन्नमात्मीय स्व समाकल्प्य समुपभुञ्जाना 'शत्रुहस्तनिपतिता तदन्न कथमह भुञ्जीय' इति विचारपरा शुभोदक परित्यक्ताहारमात्मान मोपेक्षस्य । स्वविद्यावलेन सचमेतद्

---

१ 'नृपस्तितिभायाम्' । २ 'अर्थ' पूजायाम्' इतीटि 'नाञ्चे पूजा याम्' । अग्नु विशेषणे इति चौरादिकाद्द क्ते निष्ठायां सेडि' इति णिलोपः । ३ निष्ठाशीङ्०' 'आदिकर्मणि निष्ठा वक्तव्या विभाषा भावादिकर्मणो । ४ क्लिश क्त्वानिष्ठयो' । ५ 'तनिपति- इति वट्कस्वाक्षियेधे प्राप्ते 'द्वितीया श्रितातीतपतित-इति निर्देशाविद् कृन्नत्यादीनामीटिस्त्वन 'यस्य विभाषेत्यस्या नित्यत्वाद्वेद् । ६ 'इञ्जिष्ठायाम्' । ७ स्फाय स्फी निष्ठायाम् । ८ 'पूढ्य' । ९ 'निष्ठायां सेटि । १० 'उदुपधात्- इति वैभाषिककित्वाभावे गुण ।

हमवगो[1] तुभ्यश्चानितथमभिदधे। एवमुक्त्वा सशपथ सुतासम्बद्धोद्दीप्त[2]स्नेहभाव याऽहमवम्योचिताहार कारिता। त्वया महागर्य्यप भ्राता वेगवत्या पराजितस्त्व च रक्षित। अत पर न किञ्चिदह वेद्मि। यदि[3]मेतत्किन्तु यन्नैराश्यध्वान्ताक्रान्तस्वान्तापि वेगवतीमिद्धिम् अश्लिष्ट[4]विरिब्ध[5] तद्दैवतवचश्च स्मरन्ती स्वध्राप्याशाऽऽलग्नान्[6] प्राणान् प्रघृष्टा[7]ह न पर्य्यस्याम्म् इति महानुभावाया प्रभावत्या प्रभावाद दृढ[8]शत्रुसङ्कटेऽप्यत्र मम प्राणपरिच्छेदो[9] मयोपलब्धस्त्वमिदानीम्। तथापि मदीये स्वान्ते कष्ट[10]मेतच्चिन्तया वर्तते यत्प्रभावत्या अनुपस्थितौ तव तद्रूप विनष्टे काऽऽवयोर्दशा स्यादिति।

इत्थमुद्घुषित[11]वाक्यां मदनमञ्चुका परिसान्त्वयति नरवाहनदत्ते तत्र तिष्ठति, प्रभावत्याश्च स्वपितुर्भवन समर्णवत्या[12] तदभ्यर्णतया[13] विनष्टतद्रूप नरवाहनदत्त कमपि तत्र स्थित पारदारिक मत्वैकदा सर्वोऽपि राजकुलपरिजनो भयाद्राजकुल गत्वा न्यवेदयदिति भयभीता वारयन्तीमपि मदनमञ्चुकामपवार्य स्वबलान्वितो राजा मानसवेगो नरवाहनदत्त पर्य्यवेष्टत्। तदानीमेव

नरवाहनदत्तस्य निग्रह

तन्माता पृथिवीदेवी सत्वर तत्रागत्य राजानमब्रवीत्, 'पुत्र, नाय पारदारिकोऽपि तु परिपीतस्फीत[14]श्रुतमकलशास्त्रकलाकलापक्षीरसागरावगाहनोद्भूतामृतयश श्वेत[15]धीर, दान्त[16], प्रशान्त[17]ताऽऽस्वान्त[18] मवदादृष्ट[19]तनूरुह विद्याधरैरचितम

---

१ अवगच्छामि। २ 'श्वीदितो निष्ठायाम्'। ३ 'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानिमन्थमनस्तम सक्ताविस्पष्टस्वरानायासभृशेषु। ४ म्लिष्टमविस्पष्टम् तद्विरुद्धम; स्पष्टमित्यथ। ५ विरिब्ध स्वरस्तेन स्पष्टस्वरमित्यथ। ६ सलग्नान् ससक्तान; निष्ठा नत्व निपातनात्। ७ घृषि शब्दे वैया य'। ८ 'दृढ स्थूलबलयो'। ९ 'प्रभौ परिवृढ'। १० 'कृच्छ्रगहनयो कष'। ११ घुषिरविशब्दने, इत्यनेन अविशब्दने घुष्टा रज्जुरित्यादावेव निषेधेऽत्र शब्देन प्रकटीकृताभिप्रायाथ इट्। १२ अदतिरिह गत्यर्थस्तस्मात् समर्णवत्यामित्यस्य 'अर्दे संनिविभ्य' इतीण्निषेध समागतवत्यामित्यर्थ। १३ अभेश्चाविदूर्ये। १४ श्रुतमध्ययनं श्रुतम् (अधीतमित्यथ)। १५ श्रत पाके' (सुपक्वदुग्धम्)। १६-१७ वा दान्तशान्त—। १८ स्पष्टमतदर मधुपाऽऽस्वनाम्। १९ हृषेर्लोमसु।

पचित[1], वत्सराजात्मजो नरवाहनदत्त इदानीं निजभार्यामुपायात । जामाता चायमस्माकम् इत्येतद्विद्याबलेनाहं मयमवगच्छामि । मात्रेत्थमुक्त उमुत्पन्न पानीमर्व[2] प्रध्या[3]नस्वेदो, नातिप्र[4]हृष्टो, मानसवगो जगाद, 'त्वया सह्येहान्ति[5] स्थित मयाऽविदित शत्रुरितीदानीमय निदय दित, निशितै[6] शस्त्रैश्छितोऽश्वसितोऽन्धापीन[7]मित कृष्णावा पुरो वा निहितः समवलोकित स्यात् ।' एतन्निशम्य जामातृस्नेहता माता पुनरभिहितम्, वैद्याधर लोकेऽधमा न लभ्यतेऽतोऽत्र विद्याधराणा या धर्मार्था सभा वर्तते तत्प्रधानस्याग्रे प्रसङ्गोऽयं समुपस्थापनीय । तेनैव[8] हि य समुचितो निर्णय प्रदत्तो भवत्स्व शोभतेतराम् । मातृप्र[9]श्नोत्तरयच एतद्विति गौर् चात्तन्मानसवेगेन प्रतिपन्न किन्तु बद्ध्वा त तत्र नेतुमादेशोऽभू[10]त् इति श्रुति नलिकाधीतै[11]तैस्सौ[13]तैः[12] देशविषोन्मत्त इव हस्तिस्नातकुन्ताघातसमसञ्जाताभर्षो नर वाहनदत्तस्तोरणस्तम्भमुत्पाट्यागणितांस्तत्रत्यान् भृत्यानतर्दीत् । हतस्य चैकस्य हस्तादसिमेकमाकृष्य दिव्यपराक्रम सोऽन्यानपि जघन्यान्निजमन्युवह्निदग्धान् न्तक[13]प्रघो[14]नकार्षीत् । नरवाहनदत्तीयमेतत्पराक्रममवलोक्य मानसवगो निज्य-या निजविद्यया बद्ध भार्यानुगतश्च स ता सभामनैषीत् इति भेरीमहाशब्दसमा हूता इतस्तत शब्दकारा विद्याधरा सुधर्माया देवा इव समागत्य सम्मिलिता ।

विद्याधरै परिवृतस्तद्राजो वायुपथो रत्नसिंहासन समुपाविष्ट इति दृष्ट्वा दुष्ट मानसवगस्तदग्रे स्थित्वेत्थमब्रवीत, 'मत्याऽपि स्वसुरन्त पुरे चारित्रविध्वंसकोऽय वध्य ' इति । एतन्निशम्य राज्ञा स्वाभियोगे प्रत्युत्तरीतुमुक्त आमुक्तो धीरो नर वाहनदत्त प्रस्तावानुत्तरमेतत्, 'सा एव सभा यत्र सभ्यो भवेत्, स एव च सभ्यो यो धर्मं वदेत्, स एव च धर्मो यत्र सत्य स्यात्; तदेव च सत्य सच्छल निर्मुक्त प्रतीयेत । अह त्वत्र मायया बद्धो भूमौ च स्थित । सम्प्रतिवादी मानसवगश्च मुक्त आसने चोपविष्ट इत्ययमपि यावद्याचनावदवस्थितो, विवादस्तावदासनवस्थित ।

१ 'अपचितश्च' । २ 'प्याय पी' । ३ सोपसर्गस्य प्यादेशो न । ४ 'हादोनिष्ठायाम्' । ५ 'द्यतिस्यतिमास्थामित्ति किति' । ६ 'शाच्छोरन्यतरस्याम्' । ७ आङ्पूर्वकस्य प्याय, अन्धूधसो ( अधसो ) प्यादेशोऽतोऽत्र अन्धापीनेऽन्धकूप मित प्रसिद्ध इत्यथ । ८ 'दधातेर्हि' । ० 'दो दद्घो' । १० 'अच उपसर्गात्' । ११ अनुपूर्वकाद्दाते क्ते दत्ति' । १२ धद् धातो 'घुमास्था-इत्यत्वम् । १३ पणुदाने इत्यस्य क्ते 'जनसनखनां सञ्झलो । १४ 'अदो जग्धिर्ल्यप्ति किति' ।

वायुपथ एतदाकर्ण्य तमपि मोचयित्वा, मानसवेगमपि क्षितावुपावेशयत् । तत सर्वेषु शृण्वत्सु नरवाहनदत्तोऽभ्यधाद् यदनेनाहृत्य समानीता स्वभार्या मदनमञ्चुकामश्मत्र प्राप्तवांश्चेत्तदा कस्य शुद्धान्तो-

नरवाहनदत्तस्य मुक्ति

मया ध्वसित ? अस्या स्वमा चाहृ वगवत्या मम पत्न्या मदनमञ्चुकाया रूपेणाम्युपगम्य स्वकीयो भर्त्ता निहितश्चेत्तदा का मे प्रक्षीणचारित्रापराधिता ?

एतत्सर्वमाकर्ण्य राजा वायुपथोऽब्रवीत्, 'भविष्यन्महोदयो महात्माय धर्म्य वदतीति नायमधमकलकपङ्केनाङ्कनीय । एवमुक्तोऽपि मानसवेगो मोहान्धोऽ धर्मान्न यन्न न्यवर्तत तदा धर्मानुरोधिनस्तस्य सन्नद्ध

मानसवेगस्य पराभव

सैनिको महान् सक्षोभ समजायत । तत्रत्यविद्य-कन्यका विलोक्यस्नरवाहनदत्तश्चाचकथत् यन्मायां विहाय मया सह युध्यस्व, एकेनैव च प्रहारेण क्षितौ युभूत्वा शतविशत चितौ निक्षिप्त युद्धकलानिष्णातस्य, नैकदा जन्यनिहतसपत्नासृक्पूरितप्रतिस्नातस्य मम पौरषप्रावलोकस्व । एवमन्योन्यसमुपजातकलहेषु विद्याधरेषु सभान्तरस्थात्स्महसैव वि णिस्तम्भान्भैरवरूपुरञ्जननिभो व्याघ्राम्बरो, विनिह्नुततरणि, विद्युल्लतातरलप्रदीप्तलोचनार्चि, प्रलयमहामेघ इव दव एक आविर्भूय 'न कथमपि भाविविद्याधरचक्रवर्तिन कुशलेऽत्र पराभवो भवदिति' गजन्मानसवेगमुत्थाप्याधोमुखीचकार । नरवाहनदत्तञ्चाशु भुजाभ्यामादाय सरक्षणार्थमृष्यमूकपवत परिसरल प्रापय्य तत्रैव च त स्थापयित्वा तिरोदधौ ।

इत्थमपनीते ततो नरवाहनदत्ते शान्ते च विद्याधरसम्भ्रमे वायुपथ स्वैरपरैश्च सहित स्वहर्म्यमाजगाम । मानसवेगोऽपि च रूपविपादाकुलितां मदनमञ्चुका पुरस्कृत्यापाढपुर प्रत्यावृत्तवान् ।

सुगदु सयाश्रक विधिविधानानुकूलमनिवाध परिवरिवृतीति । तत्रैव च

---

१ 'निष्ठायामण्यदर्थे' भियो दीर्घात्' । २ 'वा क्रोशदैन्ययो । ३ 'निनदीभ्यां स्नाते कौशले' । ४ सूत्राभावात् 'सूत्र प्रतिष्णातम्' इत्यस्य प्रत्युदाहरणम् । ५–६ विकुशमिपरिभ्य स्थलम् ।

प्राणिनां धीरत्वपरीष्टिरिति विजयलक्ष्मीमाश्लिष्ट, शिवमुपोषित एकोऽपि नर वाहनदत्तस्तैस्तैर्दारै संयोजितो मुहुर्मुहुर्वियोजित ।

अथैकदा ऋष्यमूकाद्रिमधिष्ठित तं प्रभावती समागत्योक्तवती य समासद्य धानात्पाप चिकीर्षुणा मानसवेगेन भवान् सभां नीत इत्येतद्विज्ञाय विद्याप्रभावेण भैरवन्वाविर्भावविडम्बन कृत्वा तत्पापपाशान्मया द्विर्णो भवानिह समानीत । एतद्धि समिद्ध सिद्धक्षेत्रम् इति वल्वतां विद्याधराणामपि मते, विदिते, जुष्टे, रक्षिते चात्र गिरौ कयामपि मायाप्रपञ्चा न प्रभवति । ममापि विद्याविभवो नात्र प्रसरतीति कथं त्वमत्र वन्याहारेण वर्त्स्यसीति मे दुःखम् ।'

एतदुक्तवत्या प्रभावत्या सह कालं प्रतीक्षमाणो नरवाहनदत्तो मदनमञ्चुकां ध्यायँस्तत्रोवास । तत्पर्वतासन्ने पवित्रे पम्पासरसि सस्नौ । स्वादूनि फलानि मूलानि च पप्सौ । मृगमांसोपदंशश्च तीरतरुपतितैं मरसं सुगन्धि च पयः पपौ । एव तत्र निवसतो रामाश्रमानालोकयतश्च तस्य मनो विनोदार्थं प्रभावती यत्किञ्चिद्रामायणवृत्तान्तमवर्णयत यदिदं ससौमित्रिमितस्य, रामस्य तापसं मह तस्मूले कृतोटजम् आसितम् इद तस्य भुक्तम् इदञ्च यातम् इत्यादि । एवमत्र कतिचिद्दिनानि स्थितो रामोऽपि यदृच्छा विमानीकृतलक्ष्मरोऽननैव पथा विमानेन जानकीमानिन्य । एवमेव भवानपीह कञ्चित्कालं स्थित्वा गतो मदनमञ्चुकामवाप्स्यतीत्यादिकथयन्त्या तया सह सजल्पित सहसितश्च निषमधर वाहनदत्तो दिनानि निनाय । ( निद्रानिन्दासमाप्ति )

एकदा धनवत्यजिनावत्यावुभे विद्याधर्यौ—याभ्यां स गन्धवपुरात् श्रावस्तीं प्रापितो भगीरथयशस परिणयतिस्म—दिवोऽवतीर्य पम्पायां सुस्नातौ तमुपजग्मतुः । स्वकीयया सख्या प्रभावत्या सह तत्र अजिनावत्या मिलितया धनवती नर वाहनदत्ताय प्रास्तावीत्, एषा अजिनावती प्राङ् मया वाचा तुभ्य दत्तेत्यासमाभ्यु दयेनाधुनैषा त्वया परिणेतव्यति' । एतद्धनवतीवाक्य प्रभावती नरवाहनदत्तश्च सर्वोऽस्नेहादनुमुमुदाते इति धनवती यथाविधि वत्सेश्वरायाजिनावता ददाना निजविद्याकल्पितदिव्यसम्भार सुतोद्वाहमहोत्सव निवर्त्यान्येद्युर्नरवाहनदत्त

---

१–२ 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' । ३ 'शिषिरदा स्नेहनमोचनयोः, नीत क' । ४ 'मतिबुद्धिपूजार्थेभ्यश्च' । ५–७ 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य' । ८–९ 'नपुंसके भावे क्त' । १० 'युजजोर्दुर्यजिप' ।

चभाषे, 'पुत्र, यत्र तत्र चिरं स्थातुमसाम्प्रतम् । मायावी हि विद्याधरवर्ग इत्य धुना सभार्यस्त्वं निजपुरीं कौशाम्बीमुपढौकस्व । अहमपि निजसूनुना चण्डसेनेन सह तत्रैवागमिष्यामि । धनवतीत्थमुक्त्वा दिवमुद्ययौ । प्रभावत्यजिनावत्यौ च नरवाहनदत्तं नभसा कौशाम्बीं प्रापयामासतुः ।

इत्थं कौशाम्ब्या उद्यानेऽवतारितो नरवाहनदत्तस्तत्रत्यैः सर्वजनैरदर्शी त्यतिभाग्यशालिनो वयं ये दिष्ट्या राजपुत्रं पश्याम इत्थं ब्रुवाणानां यूनां जरतांश्च समन्ततो महान् कोलाहलः समजनिष्ट । नगरोपकण्ठे समुपनिपेदिवांसं तं शुश्रुवान् वत्सराजश्छायाकाण्डसुधासारसिक्त इव वासवदत्तया, पद्मावत्या, रत्न प्रभादिभिर्वधूभिः, यौगन्धरायणादिभिर्मन्त्रिभिः, कलिङ्गसेनया, गोमुखादिभिश्च सह ग्रीष्मेऽत्रगो हन्मिव तमुपेयिवान् । तत्र वत्सेशो दृष्ट्वा च निजसुतं चिराद् दर्शिवांसंस्तमालिङ्ग्यामन्दानन्दं विविदिवांसं समुच्छ्वलदूमिवासल्यसागरमिव विविशिवांसं हर्षस्पष्टक्लिवेष्वङ्गेषु प्रोतमिव तं मोक्तुं न शेकुः । ततो मिलितेषु तेषु सर्वेषु प्रवर्तमाने महोत्सवे, सिद्धविद्याप्रभावतः सर्वमवगत्य मानसवेगस्य स्वसा, नरवाहनदत्तस्य पत्नी वेगवती, व्योममार्गेण तत्रावतीर्य निजपतिश्वश्रूश्वशुरस्तृत पादानतिर्नरवाहनदत्तं जगाद, 'भवदर्थे दुर्ललीभूता सेवा विद्यास्तपोवने साध यित्वा कल्याणिनस्तवान्तिकं पुनरहं प्राप्ता । एतदभिधाय सा प्रभावत्यजिनावत्यौ सन्न्यावभिगत्य ताभ्यामाश्लिष्टा यावत्ताभ्यां तत्रोपवश्यते तावदजिनावती माता धनवत्यपि तैस्तैर्विद्याधराधिपैः समाच्छादितव्योमतलैरिव तद्बलैर्युतै सह तत्रैवा जगाम । ततस्तस्या सुतो महाभुजो वीरश्चण्डसिंहस्तद्बन्धुमितगतिः, प्रभावत्या पिता पिङ्गलगान्धारः पूर्वप्रतिपन्नसभापतिस्त्वो वायुपथस्तथा वज्रप्रभेण पुत्रेण सह राजा हेमप्रभो गन्धर्वदत्तया सुतया सहितो गन्धर्वराजस्तथा चित्राङ्गदन युक्तस्सागरदत्तः, एते सर्व तत्रोपगता सपुत्रेण वत्सराजेन च सम्मानिता यथो चितासनेषूपाविशन् ।

तत्रैव सर्वेषूपविष्टेषु सत्सु पिङ्गलगान्धारो राजा सदसि तिष्ठन्तं जामातरं नरवाहनदत्तमुवाच, 'देवान्दिष्ट्या चक्रवर्तिनं भवन्तं पश्यन्तोऽतिस्नेहवशात्स्वय

---

१ 'जीयतेरतृन्' । २–३ 'भाषायां सदवसश्रुव' । ४ उपेयिवाननाश्वाननूचानश्च' । ५–७ विभाषा गमहनविदविशाम्, दृशेश्च' । ८–९ 'लटः शतृशानचौ०' ।

वयमिह समवहिता समाहयिता । नियतमता, दिव्यज्ञानवती, दधानाऽक्षसूत्रम्, वसाना कृष्णाजिनम्, स्वामभिरक्षन्ती सर्वदोषुद्धे । विद्याधरोत्तमवन्दनीया, सिद्ध विद्या सावित्री साक्षाद्भगवतीव ते श्वश्रूघनवतीति त्वदीयकार्यसिद्धौ न सन्देह स्तथापि यदह वच्मि तत्त्वमाकर्णय 'अत्र हिमाचले विद्याधराणा स्थितेर्द्वौ मार्गौ वर्तेते, उत्तरो दक्षिणश्च । कैलाशादर्वाग्दक्षिण , तत्परतश्चोत्तर । तत्रैषोऽमितगति रुत्तरभागाधिपत्यार्थमिदानीं तप्तसुदुश्चरतपा परितोपितेन शङ्करेणोक्तो यच्चक्र वर्तिनरवाहनदत्तस्ते समीहित साधयिष्यतीत्यथ तवान्तिकमुपयात । इदानीं तत्र यमिहामने समासान मन्दरदेवाख्यो दुर्मतिमुख्यो राजा वतत । स चैव बलवान् यदवाप्तविद्येनापि त्वया विजेतुमसाध्य । यस्तु दक्षिणभागे गौरिमुण्ड इति विश्रुतो राजा वर्तते सोऽतिदुर्जयो दुरात्मा च । स च विविधमाया विदितो, विदितस्य तव शत्रोर्मानसवेगस्य परमः सुहृदिति यावन्न स साधितस्तावन्न ते कार्यं सेत्स्यति । अतस्त्वमचिरेणैव सोत्कर्षं महाविद्याबल साधय । पिङ्गलगान्धा रेणेत्थमुक्त धनवरयप्यनुमुमुदे । विद्यासिद्धयथमीश्वराराधनायञ्च यथानिर्दिष्ट सिद्धक्षेत्र गत्वा तत्प्रसादात्प्रकर्षावाप्तये च समादिष्टो नरवाहनदत्त । तस्मिन्नेव प्रसङ्गे चित्राङ्गोऽब्रवीत्, 'देव, मिलिता इमे सर्वे राजानो भवन्तमभिरक्षन्तीति सर्वेषामग्रयायी एष विजय क्रियताम् ।

इत्थ तैरुक्त कृतनिश्चयो महाविद्याबलम् अर्जयिष्यन् नरवाहनदत्तो विहित माङ्गलिकक्रियोऽमितगतिप्रनाकल्पितोत्तमशिविकामारुह्य कल्पान्तपवनोद्धतमाग राम्भोनिर्भेनिजवलै परिवृतो नभ स्थगयन् क्षणादथ गन्धर्वपतिविद्याधरेश्वरैर्धन वाया च सिद्धक्षेत्रपर्वतकमानीयत । तत्र च सिद्धैरादिष्टस्तत्तीर्थजलैरास्मान पवमानो हविषा शिव यजमान , स्थण्डिलमधिशयान , सर्वदा विविधान् भोगान् भुञ्जानोऽपीदानीं फलैर्वृत्तिं कुर्वाण , स्वानुभावनैव च तपोविघ्नान् निघ्नान , व्योम चराधिपतिपरिवृतस्तै सर्वथाकृतरक्षो रक्षोभिरक्षोभितहृदयो दिवानिशमतन्द्रित शाङ्कराराधनायात्यन्तमतपसीत् ।

---

१ इय गतौ; समागता इत्यथ । २–३ आत्मनपदत्वाच्छानच्; 'आने मुक्' । ४ लक्षणहेत्वो क्रियाया ॥ ५ 'ईदास' । ६ 'विदे शतुर्वसु' । ७ 'तौ सत्', 'लृट सद्वा' । ८ पूङ्यजो शानन्' । ९ 'ताच्छील्यवयोवचन शक्तिषु चानश्' ।

तथा तपस्यन्त तमतिमुमुत्सुका पञ्च विद्याधरकन्यका मदनपरवशा मिथ समय चक्रुर्यत् अयमस्माभिर्मिलिताभिर्युगपत्पतिर्वरणीयो विवाहश्चानेन करणीय इति। यदि चैकामुना सह पृथग्विवाह कुर्यात् तदा सखीद्रोहिर्णी तामुद्दिश्य शेषाभिरग्निप्रवशो विधेय। तमवलोक्यैव दिव्यकन्यकासु तासु क्षुभ्यन्तीषु तद वाप्तिविषयक मत च धारयन्तीषु तत्राकस्मात्तपोवने महोत्पाता प्रादुरभवन्, तथाहि—पतिष्यता शूराणा गति बोधयन्निव उद्धेन्तमतरून् समुन्मूलयन्महारौद्रो वायुर्ववौ। किमत्र भवेदिति भयादिव भूमिश्चकम्पे। भीतावकाशदानार्थमिवाद्रि-सानवोऽस्खलिपत। हे विद्याधरा प्रभुममु रक्षत। रक्षत॥ इति वदद् इवानभ्र नभस्तल घोरघोषमकरोत्। किन्त्वेव भूतेऽप्युत्पातसम्भ्रमे नरवाहनदत्तोऽर्हन्त भगवन्त त्रिलोचन ध्यायन्निष्कम्प एव तस्थौ। अनिष्टाशङ्किनो गन्धर्वराजविद्याध-रेश्वराश्च सावधाना सन्नद्धाश्च द्विपदभ्यस्तमवन्तोऽवस्थितवन्त। व्याधूतलता-सीदगकोटिखड्गानि वनानि अहिताहितागमशसिन उत्पातान् भर्त्सयन्ति इव सिंहना-दान् मुमुचु।

अन्येद्युश्चाकस्मात् आकाशे कल्पान्ताम्बुदमेदुर घोरनाद विद्याधरबल-मदृश्यत। धनवती च तदानीं स्मृतनिजविद्याबलेन सत्र विज्ञाय सुन्वदभिजर-क्षिश्च विज्ञुगुप्स्यमानेन मानसवगेन सहाय गौरिमुण्ड समा

मानसवेग— यात इत्यभ्यधात्। तदानीमुद्गूर्णविविधायुधान् सवान् विद्या

युद्धम् धरान् प्रति समानसवेगो गौरिमुण्डोऽभ्यधावत्। क्व मानव।

क्व च वय खेचरा इति तद्गृह्णाणा युष्माक दर्पमहमिह क्षणेनैव अपनेतास्मि भवामीतिवादिन्न त निराकरिष्णुश्चित्राङ्गदोऽपि क्रोधादभ्यद्रवत्। गन्धर्वाधीश्वरो राजा सागरदत्तस्तथा प्रचण्डदोर्दण्डो वायुपथ, पिङ्गलगान्धार-श्चैते सर्वे विद्याधरश्वरमहारथा परतेजोऽसहिष्णव सबला सिंहा इवाभिगर्जन्तो द्विपद्द्विपमनोभीतिं प्रजनिष्णव समुन्मदिष्णु मानसवगमभ्यधावन् इति चित्रा ङ्गदाद्य सैन्यरेणुघनाकीर्णे, शस्त्रज्वालातडित्प्लुते, निपतत्पुरगम्बुनि तस्मिन् घोरे समरदुर्दिने सखरिणश्च शोणितासवसम्पूर्ण प्रकीर्णशत्रुशिरोपलि महापानगमिव चक्रु। कच धमकरमङ्कीर्णा, वद्धदायुधपक्षगा, मिलन्मेदोडिण्डीरा रुधिरापगा

---

१ इन्धार्थो शमक्रुच्छिणि'। २ 'अर्द्द प्रसाधायाम्'। ३ द्विपोऽमित्रे'। ४ 'मृगो यशसधोगे'। ५ 'तून्'। ६ 'अल्पम् निराष्म्०—

जनकृपालुर्दरो[1] विजयरपृहयालवे श्रद्धालवे तस्मै प्रददे। तत 'किमादिशसी'ति तदाज्ञागृहयालव इव सविमहा सर्वा विद्यास्तस्याविरभूवन्।

इत्थं नरवाहनदत्तोऽवाप्तसिद्धिवरो, निजविनयनिःशर्यालु[2] परमेश्वरं प्रणम्य तदभ्यनुज्ञातो दिव्य पद्मविमानमधिरुह्य सिद्धचारणोद्गीतामितगीत प्रथममिमित गतेवक्रपुरसञ्ज पुरमागतवान् इति तत्र सद्रु[3] रमितगति स्वनिवेश त सन्निवश्य, कृतातिथ्याय वर्णितनिजसिद्धये च तस्मै कृतप्रणतिर्दारुरपि[4] नरवाहनदत्तोपायनी कृतसुलोचनाख्यस्वसुतो दारुतामन्वभवत्। नरवाहनदत्तोऽपि चापरविद्याधर लक्ष्मीमिव प्रेमपाशसेरं[5] तामवाप्य मधुर्धारस्तदहस्तत्रैवानेपीत्।

अपरेद्युर्वक्रपुरीयास्थानवर्तिनं नृपचक्रवर्तिनं नरवाहनदत्तमम्बरतलादवतीर्य आस्मरैः, भासुरकार्तस्वरसवर्णोर्णापपरिवेष्टितशिरोभागोऽभङ्गुर-मेदुरवेत्रकरः, विदुर इव राजकुलनीतिविदुरः, एक पुमान् बद्धाञ्जलिरेव व्यनिज्ञपत्, 'देव, अहं क्रमागत पौरुरुचिदेवाख्यश्चक्रवर्तिप्रतीहारो जित्वरस्य धीमत सर्वार्थमिह आगत्वर[11]। एतदाकर्ण्य सत्वरकर्तव्यजागरूको[12] नरवाहनदत्तोऽमितगतेर्मुखमैक्षत। तेन च देव, सत्यमेतदिति विज्ञप्तस्तं स्वपृच्छस्य न्ययोजयत्।

अथ विद्याप्रभावत सर्ववृत्तमाकलय्य यगवत्यादिभिरितरपत्नीभि सह धनवती, निजौदार्यसन्तोपितागणितयाजयूक[13], स्वानुभावापसारितनिजदुर्हृद्दन्दशूक, तत्सुतश्चण्डसिंहश्च, दीप्रप्रभावोऽपि विनम्रो वायुपथान्वितो राजा पिङ्गलगान्धार, क्रमेण सागरदत्तेन स्मेराननहेमप्रभादिभिश्च सह चित्राङ्गद एते सर्वे समागत्य चक्रवर्तिनस्तस्य पादयोर्निपेतु। सोऽपि च श्वश्रूगौरवाद्गुवत्याश्चरणौ प्रणम्य समागतसयशुभाशशु[15] स्वागतेन सर्वान् सम्मानयामास। धनवती चापि जामातृशुभोदर्कमिच्छुराशीर्भिस्तमवर्धयत्। ततो विज्ञापितात्मसिद्धिवृत्तान्तास्ते चण्ड

---

१ 'कृपा लातीति 'मृगय्वादयश्च' इत्यौणादिककुप्रत्यये साधु। २ 'शीङो वाच्य'। ३ 'द्राघेट्सिशदसदोरुः, सद्रु स्थित इत्यर्थ'। ४ दारु काष्ठम् (दारुशब्द पुनपुंसकोभयलिंगः) दाता च तेन दारुभिन्न, न वसतेऽन्योऽस्माद्दाता यस्मादेव भूतोऽपि वा दारुतामन्वभवदित्यर्थ। ५ पिञ् बन्धने। ६, धेट् पाने। ७ 'सृघस्यद क्मरच्'। ८ भञ्जभासमिदो घुरच्'। ९ 'विदिभिदिच्छिदे कुरच्'। १० इणनशजिसर्तिभ्यः क्वरप्'। ११ 'गत्वरश्च'। १२ 'जागुरूकः'। १३ 'यजजपदशां यङ'। १४ 'नमिकम्पिस्म्यजसकमहिंसदीपो र'। १५ 'सनाशंसभिक्ष उः'। १६ विन्दुरिच्छु'।

सिंहादय सव नितरा प्रमुमुदिरे। पार्श्वोपमर्पितपत्नीकेन चक्रवर्तिना च 'मदी यास्ते मचिवा क्व वर्तन्ते' इति पृष्टा धनवती 'मानसवेगेन क्षिप्तास्ते मया सुमरध्य विद्याप्रभावेण पृथक् पृथक् स्थापिता' इत्यभिदधिस्त पर्य्यतोषयत्। ततो वत्सेशसुतो रूपिणीं विद्यामान्श्रिय तान् सवानानाययत्। तत्र समाजग्मीन पृष्टकुशलान् पादानेमीन्त्र तान् सवान् 'विभिन्नपरिस्थितिपौपतिभिरगणितसुख दु खसामह्िमिर्भवद्भिरियन्तो दिवमा कातिवाहिता इत्येकैक पृच्छन् यवतु चादि ष्टत् इति गोमुख आदावेव निजकथा वक्तुमारभत—

'देव, तदानीं द्विपा मानसवेगेन क्षिप्त मा कापि देवी हस्तयोगृहीत्या ममाश्वास्य च दूरेऽरण्ये स्थापयन्ती तिरोदधे। तदानोमतिदु खितोऽहमापातत स्तूर्णक प्रपातत स्वदेह परित्यक्तु धृष्णगभवम्। तच्चावलोक्य कोऽपि तापसस्त दानीमुपेत्य 'गोमुख, मैवम्, सिद्धार्थ वन्दोरुजनमन्दार स्वमसु त्व पुनर्द्रक्ष्यमि' इत्युक्त्वा न्यवारयत कस्त्व कथञ्च तद्वेत्सीति पृष्टश्च स शिवक्षेत्र स्वकीयाश्रम मा नीत्वा कृतातिथ्योऽब्रवीत, 'कुण्डिनाख्यपुरीयो नागस्वामी नामा द्विजोऽहम् पितरि स्वगते तत पाटलिपुत्रक गत्वा विद्योपादानार्थं जयदत्तमुपाध्यायमुपा सदम्। किन्तु शिक्ष्यमाणोऽपि न यदाहमक्षरमप्यविद तदा सर्वे छात्रा मामु पाहसन्निन्द्यमानस्ततोऽह विन्ध्यवासिनीं प्रस्थितो मध्येमार्गं वक्रोलकाभिध पुर प्रापम्। तत्र च भिक्षार्थं प्रविष्टाय मह्यमेका गृहिणी गृहादेकस्माद्भिक्षया सहैक रक्तकमल प्रादात्। तद्गृहीत्वा यावदहमपर गृह प्राप्नोमि तावन्मामव लोक्य तत्रत्या गेहिनी, 'हा धिक्'। भवान् योगिन्या विप्रलम्भितो यतो हि तया रक्ताब्जव्याजेन तुभ्य नरहस्तोऽय प्रदत्त इति पर्यस्यमदर्शयत्। एतदा कर्ण्य यावदह वीक्षे तावत्त तदम्बुजमपि तु नरपाणिरेवत्यनिर्भीतोऽह तस्यास्तस्या नरपादयो पतित्वा 'मात, तथा कुरु यथाह प्राणिमीति तामवोचम्। तन्निशम्य सा मामादिशत् 'इतो योजनत्रय गच्छ। तत्र करभके ग्रामे देवरक्षितनामा द्विजोऽस्ति। तस्य गेह साक्षात्सुरभिरुत्तमा कपिला वर्तते साऽद्य शरण प्राप्त त्वा मस्यां निशायामवश्य रक्षिष्यति। तयेत्युक्तो भीतोऽह तस्माद्धावन् दिनक्षये करभग्रामे तस्य द्विजन्मनो गेह प्राप्य प्रविष्टस्तत्र कपिलामवलोक्य कृतप्रणामो

---

१ २ 'आद्यामहनमपन'–इत्यत्र 'भाषायां धात्र कृत्सृगमिजनिनमिभ्य'। ३ 'मासहिवावहिचाचल्पापतीनामुपसख्यानम्'। ४ न्यपितृयोनजिद्द'। ५ 'शृव-द्योरार'। ६ ७– मिय मुकुलुक्तो'।

यान्त्य दयि, भीरु[1]कोऽहं तव शरणं प्राप्तोऽस्मीत्यवाचम् तावदेवान्याभि सह तन्वन्ती सा योगिनी मन्मांसरुधिरार्थिनी नभोमार्गेण तत्रागात् । तामवलोक्य स्थावर[2]-जङ्गम-रक्षणश्वरा सा कपिला निजखुरमध्ये मां सन्निवेश्याखिलां निशां ताभियोंगिनीभिर्युध्यन्ती मामावीत् । प्रातस्तु सा तासु गतासु कपिला मामवोचत्, 'पुत्र, अथाहं त्वामभिरक्षितुं न शक्नोमीतीन पञ्चयोजन्यामेकस्मिन्नरण्यस्थशिवालयेऽधुना भूतविषो नामोत्तमो यायावरा[3]नुगामी शैवो व्रतते सोऽर्थैन्ते त्वां शरणागतं त्वां रक्षिष्यतीति तां नमस्कृत्य ततः प्रस्थितोऽहं समवाप्तभूतशिवं समाश्रितस्तच्छरणोऽतिष्ठम् । रात्रौ च तत्रापि ता योगिन्यस्तथैवागमन्निति सोऽन्तर्गृहं मां प्रवेश्य त्रिशूलहस्तो द्वारस्थो योगिनीनिरभर्त्सयत् ता सत्रा जित्वा च मामादिशत् । प्रातश्च सोऽपि मामभ्यधात् यदूमहत्तत परं पुनस्त्वामभिरक्षितुमहं न शक्नोमीतीतो दशसु योजनेषु मध्यावासाख्ये ग्रामे वसुमतिनामा विप्रोऽस्ति तदन्तिकं त्वं व्रज । तत्र तेन तृतीयस्यामस्यां निशि सुरक्षितो मुक्तो भविष्यसि । इत्थं तेनोक्तो विहिततत्प्रणामस्ततोऽनुप्रस्थितः किन्त्वध्वनो दैर्घ्यात्स मध्यावासमनवाप्तस्यैव मे मध्येऽध्व सूर्योऽस्तं गत इति नक्तं पुनः समुदितास्ता योगिन्यो मामागत्याकस्माद्दिद्यु[5]दुद्धरया यावत्समुत्पाट्य विहायसा यान्ति तावत्तासां पुरोऽन्या अपूर्वा योगिन्यः परापतन्निति ताभिस्सह तासाम पूर्वोद्धते युद्धे सम्प्रवृत्ते तासां हस्तादेकस्मिन्नतिनिर्जने देशे पतितस्तत्रापावृतद्वारेण 'प्रविश' इति अन्तः प्रवेश ददृदिवैकं महामन्दिरमपश्यम् । द[6]दृशे च पलायमानस्तत्र प्रविश्य नारीशतसमावृतामद्भुताकारां प्रभया प्रदीपमुज्ज्वलितां मदनुकम्पया सृष्टां महौषधिमिव सुश्रिय[7]मेकां नारीमपश्यम् । समाश्वस्तेन च मया क्षणात्पृष्टा साऽभाषत यदहं सुमित्राख्या यक्षिणी शापादवमिह स्थिता वर्ते । मदीयशापशान्तये च मानुष सङ्गं समादिष्ट इत्यशङ्कितप्राप्तस्य मां भजस्व । एवमुक्त्वा सा चिरं मामुपावेश्याज्ञापिताभिर्दासीभिर्वस्त्राहारपानैरुपाचारयदिति तया यक्षिण्या सह मसुरस कतिचिद् दिनानि तत्राहमासम् ।

---

१ 'कुकलपि याच्य'। २ 'स्थेशभासपिसकसो वरच्'। ३ 'यश्च यङ'। ४ राजसूयसूर्य०'। ५ 'भ्राजभासधुर्विद्युतोर्जि०'। ६ अन्येभ्योऽपि दृश्यते' इत्यत्र दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । तेनात्र दृ भयेऽस्मात् क्विपि धातोर्द्वित्वं ह्रस्वत्वञ्च । ७ क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च ।

एकदा सा स्वैरं मामित्थमब्रवीत्, यदिदानीं क्षीणशापाऽहमितो व्रजामि। मत्प्रसादाच्च समवाप्तदिव्यज्ञानः, प्रधीः, सिद्धभोगो निर्भयस्तपस्वी त्वं भविष्यसि। इहस्थः किन्तु त्वं मध्यमं पुरं मा व्राजीः। एवमुक्त्वा तिरोभूतायां तस्यां समुत्पन्नकौतुकोऽहं मध्यमं पुरमारूढस्तुरङ्गममेकमद्राक्षम्। तदभ्यर्णं चरणितश्चाश्वेन तेन खुरेणाभ्याहतः क्षणादस्मिन् शिवालये स्थितमात्मानमपश्यम्। ततः प्रभृत्यत्रैव स्थितोऽहं क्रमात्सिद्धिं गत इति मनुष्यस्यापि मे जगत्त्रिकालज्ञानं वर्तते। सिद्धयश्च भवस्यापि क्लेशबहुला इति त्वमिहास्स्व सर्वप्रतिभूर्विभुः, शम्भुस्तत्राप्यभीष्टसिद्धिं विधास्यतीति।

ज्ञानिनेत्थमुक्तोऽहं त्वत्पादप्राप्तिसञ्जाताभ्यस्ततदाश्रमे एतावन्ति दिनान्यनैषम्। स्वप्ननिर्दिष्टभावत्कसिद्धिश्चाद्य धौम्यवत् कयाचिद्दिव्यया स्त्रिया गृहीत्वाऽहमिहानीत इत्येष, देव, मदीयो वृत्तान्तः'।

एवमुक्त्वा तूष्णीकामासीने गोमुखे नरवाहनदत्ताग्रे मरुभूतिरवोचत्, 'मान सवेगेन तदानीं क्षिप्त मां कापि देवता निजपाणिभ्यामादाय दूरे चाटव्यां विन्यस्य तिरोऽभवत्। अतिदुःखातस्तत्राहं मरणोपायचिन्तया भ्राम्यन्नदीपरिक्षिप्तमाश्रममेकमवलोकितवान्। तत्र च गत्वा न प्रविश्याहं शिलातले समुपविष्टं ज्वलत्नेत्रं जटालं तापसमेकमवलोक्य समुपागतः कृतनतिर्विहिततत्स्तोत्रैः कस्त्वम्, कथञ्चेमाममानुषीं भूमिं द्वितीयपत्ररहितोऽभ्यायात इति तेन पृष्टः सर्वं तस्मायवर्णयम्। तदाकर्ण्य, 'सुधी स त्वमात्मानमधीरोऽधीरिव वधीः। प्रभोर्वार्त्तां त्वं ज्ञास्यसि। ततः परं यद्यक्तु क्षमं स्यात् तत्त्वया करणीय'मित्युवाच। एवं भात्रेकवार्त्ताजिज्ञासया तत्र मयि स्थिते तां नदीं जातु दिव्या स्त्रियः समाजग्मुरिति तापसो मामवदत् यत्तासां स्नान्त्या एकस्यास्तटस्थापितवस्त्रमानय। तेन च त्वं प्रभोर्वार्त्तां ज्ञास्यसि। तच्छ्रुत्वाऽहं तथैवाकार्षम्। हृतवसना च सा शरीरविपक्तो च वसना मामन्वगात्, नरवाहनदत्तस्य वार्त्तामाख्याय 'भजवासभी गृहाणेति' तापसेनोक्ता चाब्रवीत्, 'नरवाहनदत्तो ह्यद्य हरमाराधयन् कैलासपर्वते यतते

---

१ 'प्यायते सम्प्रसारणं च'। २ 'द्युतिगमिजुहोतीनां द्वे च'। ३ 'भुव सञ्ज्ञान्तरयोः'। ४ 'विप्रसम्भ्यो ड्वसञ्ज्ञायाम्'। ५ 'मितद्र्वादिभ्य उपसङ्ख्यानम्'। ६ 'घः कर्मणि ष्ट्रन्'। ७ 'दाम्नीशसयुयुजस्तुतुदः'-इति ष्ट्रन् 'तित्स्वरितम्'-इतीडभावः।

कपिपर्ययैरेव च दिवसै स विद्याधरसम्राट् भविष्यति। इत्थं तत्कथासरतवाग्मा वनिता विमुक्तशापा दिव्या भार्या समपद्यत। तया साकं च स तापसस्तस्थौ। अहमपि च चिन्ताधविग्रतत्कथनसक्षातत्वग्ममागमास्थस्तत्रैव न्यवसम्।

गतेषु कपिपयन्दिवसेषु सगर्भा सा दिव्या स्त्री भ्रूणं प्रसूयाचोचत 'आर्य, त्वत्सङ्गत्या मम शाप शान्त। पुनरपि मत्प्रेप्सा चेत्तदा तण्डुलं महेतन्मम गर्भं श्रास्वा श्मशाने समदहान। एवमुक्त्वा प्रयातायां तस्यां स तापसस्तत ण्डुल तद्गर्भं श्रास्वा प्सास्या च खमुत्पत्यैनामन्वगात्। अहमपि च सर्वदुर्लालि स्थलथिप्र स्वन्तिसविप्र, पथिप्र सिद्धसिध्य तद्दिशाय पाकभाण्डाद्धत्तमिवधट्टय ममक्षयमिति यग्राहमष्टीर तत्रैन काञ्चन समजायत। एव बुवन्नहं भ्राम्यन्नेक पुर प्रापम्। तत्र च वेश्यागृहे निवसतो मे एका कुट्टनी छलाद्दमन कारितवनीति वमतो मे मुखाद् भास्वत्पद्मरागनिभे उभे प्रागभुक्तसिक्थे निरगच्छताम्। निगत एव च ते कुट्टन्या तयोपात्ते भक्षिते चेत्येतेन नष्टां मदीयां हेमसिद्धिं सा कुट्टनी अगृह्णात्। तेनातिग्लानोऽप्यहं सर्वं तच्चन्द्राधशिपरस्य शिनस्य विधानमवधार्य पारस्याकृपारस्यव मसारस्यास्यापरिमित यहुच्छुलत्व च विचार्यातिविप्रसन्न प्रा सर्ये तपसा देवीमाराधयितु चण्डिकागृहमागच्छम्।' त्रिरात्रोपोषित च सा स्वप्ने देवी मामादिशत् यत्त्वदीय स्वामी सिद्धकाम सजात इति गम्या त परय। तदाकर्ण्य प्रबुद्धोऽहं प्रात मयाचिदेश्येह त्वत्पान्मूलमानीत। एतावती, इय मदीया कथा'। ( पूर्वकृदन्तसमाप्ति )

इत्थ कुट्टनीविडम्बनरूप भीघोर्मरुभूतेर्गृत्समाकर्ण्य शत्रुतरून्मूलनवायुर्ज स्वले नरवाहनदत्त सपार्श्वगो जहास। हरिशिखश्च तत इत्थमात्मीयां कथां वक्तुम् आरभत—'भीष्मेण शत्रुणा मानमवगेम तथा

उत्तरकृत्प्रत्यया प्राप्त मामेका देवता समादायोज्जयिन्यामकत्र सुरक्षित न्यधात्। तत्र चाहमतिदु खिता निशागमे दह त्यक्तुमि च्छन् श्मशाने काष्ठैश्चितामारचयम्। तत्राग्निं प्रज्वाल्य पूजयन्त मामागमिनमभ्यर्थ

---

१ 'अतिलूधूसूखनसहचर इत्र'। २ पुव सञ्ज्ञायाम्।

(पूर्वकृदन्त-समाप्ति)

॥ उत्तरकृदन्तप्रत्ययाः ॥

३–४ 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्'। ५ भीमादयोऽपादाने।

६ 'समानकर्तृकेषु तुमुन्'। ७ भविष्यति गम्यादय'।

शोतु पर्य्यासस्तालजङ्घनामा भूताधिपतिरभ्यधात्, 'मा वह्निं प्रविश[2] धृष्णुहि। नेप कालस्ते मर्त्तुम्[3]। तव प्रभुरद्यापि प्राणिति। अतः पूर्णसिद्धिकामं तं दर्शकस्त्वं नूनं प्राणान् धारयेति'। तेनेत्थं मरणान्निवारितोऽहं तव सयोगाय देवाग्रे तपस्यन् स्थितः कयाचिद्देवतयेहानीतः।

हरिशिखेनेत्थमात्मकथायामुक्तायामन्यैरपि चोपवर्णितेषु क्रमादात्मवृत्तान्तेषु, नरवाहनदत्तोऽमितमतेर्गिरा धनवती प्रेर्य सर्वेभ्यस्तेभ्यस्स्वमचिवभ्य मया विद्या अदीक्षपदिति सर्वेष्वपि तेषु विद्याधरी भूतेषु 'अधुना स्वशत्रून् पराजित्यास्माकं प्रमोददायो भव' पुत्र शुभेऽहनि धनवत्योक्तो नरवाहनदत्त

मानसवेगगौरिमुण्डवध

शिरोरागमिव शत्रुर्भारं सद्योऽपसारयितुं गोविन्दकूटाख्यं, गौरिमुण्डपुरं प्रति स्वबलप्रयाणारम्भमादिशत्। अतः[9] स्फारीभवच्छन्नाकविद्याधरबलमकालोदितशत्रु विनाशकधूमकेतुलीकादामाकाशे समदृश्यत। नरवाहनदत्तोऽपि च शत्रुसद्वाहन[11] स्यदोपशमैशालिनीं स्वकीयकरेणुकामारुह्य, सवाश्च स्वभार्या वह्येषु समारोह्य, चण्डसिंहादिकेषु च पुरःसरेषु नभसा विजयाय प्रतिष्ठमानोऽध्वनि धनवती निकेतमासाद्य स्वीकृततदर्चो मातङ्गपुरादाहवाह्वाय विद्याधरेशयोर्गौरिमुण्डमानसवेगयोः एकं दूतं व्यसर्जयत। अन्येद्युश्च सर्वान् दारान्[3] मातङ्गपुरे संस्थाप्य दिव्यं रानभि मह गोविन्दकूटं सम्यगभ्यपेणयत्। तत्र च प्रतिभटक्रोधैधाय[15] निर्गतौ गौरिमुण्ड मानसवेगकौ, चण्डसिंहान्योऽग्रतः प्रत्यगृह्णन्। प्रवृत्ते चोभयतः सगरराग[16] सङ्ग्रामे, पतत्सुभटपादप, स्रवद्रुधिरनिर्झरः स गोविन्दकूटाद्रि शुशुभे। शूराणां जीविताग्रे आहवकालो रक्तावोर्द विलसत्खड्गलताजिह्वो जृम्भते स्मेति रणे एकं दुर्जननिचायमिव सम्मुखागतं मानसवेगं स्वयमेव युद्धविशोपाध्यायो[17] नरवाहन

---

१ 'पर्य्याप्तिवचनेष्वलमर्थेषु। २ 'शकधृषज्ञाग्ला'–इति तुमुन्। ३ काल समयवेलासु तुमुन्'। ४ तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम्'। ५ माष-पचनाद्य'। ६ 'अण् कर्मणि च। ७ 'पदरुजविशस्पृशो घञ्'। ८ स्थिरे'। ९ भावे'। १० स्फुरतिस्फुलत्योर्घञि इत्याकारः। ११ 'स्यदो जवे'। १२ घञि 'नोदात्तोपदेश' इति न वृद्धिः। १३ 'दारजारौ कर्त्तरि णिलुक् च'। १४ 'अवोदैधौद्मप्रश्रथहिमश्रथाः' (क्रोधवर्धनार्थमिति भावः)। १५ अकर्तरि च कारके संज्ञायाम्', 'घञि च भावकरणयो'। १६ 'अवोदैधौद्म०'। १७ परिमाणाख्यायां सर्वेभ्यः' दुर्जनरादिभिर्विस्यध राश्येकत्वेन समुदायिना परिच्छित्तिर्गम्यतेऽनश्चिनोते परिमाणाख्यायां घञ्। १८ 'इन्धः'।

न्तोऽभ्युत्पत्य तत्क्षणमेव च भग्नशिरस्त्राण कशेषु समाकृष्य पाप्मनस्तस्याकृत नाशार शिरोऽसिना चिच्छेद। तद् दृष्ट्वा प्रकुपितमुच्चै कृतमरोष, प्रधावित च गौरिमुण्ड कशेष्वाकृष्य गृहीततदङ्घ्रियुग्मोऽभ्रे भ्रामयित्वा शिलाया पातयन्ननुबन्ध मित्र नमभिनिर्ग्रानतामनयत्।

एव गौरिमुण्ड मानसवेगयोर्हतयोराश्रितसद्भावे च शेषे भीते तद्बले, गगनस्था सत्र सुरा साधु साध्विति ब्रुवन्तो विद्याधरश्रीयस्य चक्रवर्तिनस्तस्योपरि पुष्पवृष्टि कुर्वन्तो निजसमदभाव प्रकटीकृतवन्त। इत्थ निजविजय मदनमञ्जुकावाप्ति विश्रार्धगौरयमनुमवन्नरवाहनदत्तस्तैस्तै स्वकीयोर्णाय सहायकनृपतिभि सह तत्प्रस्तावेन कृताभिलावस्य गौरि मुण्डस्य राजधार्मी प्रविश्य, तत्सम्बन्धानां विद्याधराधीशाना प्रणतिपूर्णहृदयसौज न्योद्गार[१] भृश शसन् अनभीष्टोत्कार रत्नोत्करपरिग्रह, पुष्पनिकरकराणां तेषा पूजोपहार प्रतिपन्नवान्।

ततो निहतसकलसपत्नराज्यावाप्तिकृतसमुत्सव नानादिग्देशसमागतागणित-विद्याधरोद्गीयमान निजविजययश सस्तावे[१२] छन्दोगकृतसस्ताविव[१३] शृण्वन्त त सम्राज धमवती समुपेत्य 'देव, गौरिमुण्डस्य गन्धवविद्याकृतापूर्वसस्सवा, त्रैलो क्यसुन्दरी आत्मनिकानाम्नी कन्याऽस्ति ता त्वमुपयच्छस्व। एवमुक्तो राजा ता मत्रानाय्य तदहन्येव तामुपयेमे। प्रातश्च वेगवती प्रभावत्यौ सम्प्रेष्यापाढपुरान्म-दनमञ्जुकामानाययदिति तत्रानीता सा निजपरिभावकमानसवेगवधोत्पन्नहृष्ट-निर्भरमानसा शूर स्वपति निरहान्ते सम्प्राप्यानिर्वचनीय समदमन्वभवत्। नरवाहनदत्तोऽपि च चिरोत्सुकस्तस्यै सर्वा विद्या दत्त्वा प्रभावतीं सम्प्रेष्य भगी रथयशसमप्यानाय्य गौरिमुण्डपुरोद्यानवर्ती सर्वाभिर्भार्याभि सह कृतपानादि विविधलीलाप्रस्तार[१४] चिर चिक्रीड।

---

१ निष्प्रायरणम्। २ 'उपसर्गे रुव'। ३ अभिनिस स्तन शब्द-सज्ञायाम्'। ४ 'समि युद्रुदुव'। ५ श्रिणीभुवोऽनुपसर्गे'। ६ यौ क्षुश्रुव। ७ 'अवोदोर्नियं'। ८ 'प्रे द्रुस्तुस्रुव'। ९ 'निरभ्यो पूल्वो'। १० उन्न्योग्र'। ११ कृ धान्ये'। १२ यज्ञे समिस्तुव' इत्यनेनाधिकरणे घञ् यज्ञे इत्यर्थ। १३ सस्तुतिमिव। १४ 'प्रे स्त्रोऽयज्ञे'।

एकान्ताऽऽस्थानवर्तिनं चक्रवर्तिनमुभौ विद्याधरचारौ समागत्य विज्ञप्तवन्तौ यत् देव, आवामितो धनवतीगिरा मन्दरदेवस्य दिक्षु रभाज चेष्टा ज्ञातु गताव भूत। तत्र चास्थानगतोऽनुभूयमानविद्याधरैश्वर्यादुग्राह

मन्दरदेवपराजय

शङ्खलक्षणाभ्यामात्मसाम्याभ्यामेव स भुवनाकर्णितो यत्नरवाहन दत्तेन विद्याधरश्रीमग्राह्य कृत्वा गौरिमुण्डादयोऽखिला परिणायेन शारा इव पर्य्यायेण निहता इत्यस्माभिरवबुद्धिर्निवेद्य एषोऽत्र न्याय। तदाकर्ण्य दिने, तत्रच्छन्नावितस्ततोऽटन्तौ कृतनिशोपशायौ च सर्वथाऽनुमिततच्चिकीर्षावावामिह देव विप्रमुपागतवन्तौ।

द्विपक्षिकीयागतचारमुखादनदाकर्ण्य कोपाकुलीभूता नरवाहनदत्तसभाऽनिलाहता पद्मिनीव सञ्जाता। चित्राङ्गदस्य बाहू निजवलयमिस्वनैः स्वप्रभोर्युद्धादेशमिवामागयताम्। क्रुधा भ्रमतोऽमितगतेर्वक्षसि समुत्फलन् हार 'वीर, उत्तिष्ठ, उत्तिष्ठ इति वदन्निव प्रतिबभौ। करेण सशब्दक भूमिं ताडयन् पिङ्गल गान्धारो वैरिनिकायचूर्णनोपक्रममिव व्यधित। वायुपथस्य मुखे कोपेनारोपिता चापलतेव विद्विपामन्ताय पदमादधे। सक्रुद्धश्चण्डसिंह पाणिना पाणिं सम्मर्द्यन्नेवमह शत्रून् निर्मिमन्थिषामीत्यभिदधदिवालक्ष्यत। सागरदत्तस्य बाहुर्व्योम्नि मूर्च्छता हस्तास्फालनजन्यशब्दन रिपुमिवाह्वयत। नरवाहनदत्तस्तु कोपाविष्टोऽपि प्रवृत्तिस्थ एवानाकुलस्तिष्ठन् 'अक्षोभ्यत्वं महता महत्त्वलक्षणमि'ति सूचयन् शत्रु जेतु यात्रायै निश्चिन्वान सचिवान्वितो भार्याभि सह विमानमारुह्य गोपिन्त्यकृतत प्रतस्थे। सर्व गन्धर्वराजविद्याधराधिपा अपि चैन चन्द्र ग्रहा इव परिवार्य सह जग्मुरिति धनवत्या पुर मरन्त्या नरवाहनदत्तो हिमाचलमास्थाय सितपद्मोच्छ्रितातपत्र, समुन्नमद्भ्रमचामर मत्राहुपयुक्तमुपायनमिवादाय समुपस्थित महामर एक प्रापत्। तत्र 'चक्रवर्तिन्, भवताऽस्मिन् सरसि स्नातव्यमि'ति वायुपथनात्कस्तत्र स्नातुमवातरत्। तदानीं दिव्या वागुद्गत्येत्थमसूचयत्–यदत्र सरसि

1 प्रथने वावशब्दे'। २ 'उदि ग्रह'। ३ 'समि मुष्टौ। ४ 'परिन्योर्नीणोर्द्यूताभ्रेषयो' अभ्रेषो यथाप्राप्तकरणम्, तत्राथ घञि, न्याय। ५ 'परावनुपात्यय इण'। ६ 'व्युपयो शेते पर्य्याये'। ७–८ निवासचितिशरीरोपसमाधानेष्वादेश्च क', एकत्र निवासेऽन्यत्र समूहेऽनेनैव घञ्। वैरिनिकाय इत्यत्र 'सघे चानौत्तराधर्ये' इति वा घञ्।

अचक्रवर्तिन स्नान न सिद्धयति। अतोऽद्य प्रभृति त्वदीय चक्रवर्तित्व सिद्ध सञ्जातम्। तदाकर्ण्य जलाभ्यन्तरे प्रविष्टश्चक्रवर्ती धौताञ्जनारुणदृश, शिथिलितकेशपाशा, अङ्गसंसक्तार्द्रवासस्श्च प्रिया पश्यन्त पुरे सहाम्बुधी पाथस्पतिरिव चिक्रीड। तदानीं तस्मात्सरस समुत्पतन्त्य पतत्रिपङ्क्तय, प्रत्युद्गतानां श्रियां रसना इव प्रतिबभु। तत्रत्यानि विकसितान्यपि कमलानि च नरवाहनदत्तव, रोधवधूवदनाम्भोजच्छायाव्यविजितानि इव जलोर्मिषु निममज्जु। तत्र कृतस्नानश्च तस्मिन्नहनि तस्यैव सरसस्तटेऽसौ सपरिच्छद उवास। सभायामचिवश्च नर्म कथालापैस्तत्रैव स्थितोऽन्येद्यु प्रातर्विमानस्य सवल्लात प्रतस्थे। मार्गे च वायुपथस्य पुरमवाप्य तदनुरोधेन त वासर तत्रैव निनाय। अपरेद्यु न तत्पुरी योद्यानादिविहारार्थ गतो हेमसिकतिलम्बरित्तटोद्यानविहारिणीं सौम्यसलापमनो रमामपरामिव रमा वायुपथस्वसार वायुवेगयशोनाम्नीमपश्यत्। सापि चागत त वीक्ष्य तदासक्तचित्तेन तेन स्थाँवम्मार्गी समाश्रित्य ततोऽन्तन्त्य इति सल्लित विलक्ष स, हेरम्बतरपराङ्मुखीं तां मत्वा निजावासमागतवान्। ततो गामुख वैदग्ध्यवशेन राप महस्थन मरुभूतिनाऽवगतेऽचिरे, वृत्तान्ते तन्मन्त्रणया वायु वेगयशश्चित्त जिनासुर्गोमुखस्तत्पुरमयासीत्। वायुपथश्चाकस्मात् पुर द्रष्टुमिवागत त प्रीत्या सत्कृत्यैकान्ते नीत्वा जगाद यद्वायुवेगयशानाम कन्या मदीया भगिनी वर्तते। सा च सिद्धैर्भाविनी चक्रवर्तिपत्नी उक्ता। प्राभृतरूपाञ्च तामह चक्रवर्तिन नरवाहनदत्ताय दित्सामि तत्र तव साहाय्यमपत्तते। वायुपथोक्तिमेतामाकर्ण्य गोमुखोऽब्रवीत्, यद् यद्यप्यस्माकमेव प्रभुररिविनिगीषया प्रस्थितस्तथापि मद्वचित यत्तद्यावश्यक्य साधयितुमह प्रयतिष्ये। एवमुक्त्वा समामन्त्र्य प्रचलितो गोमुखोऽभ्यर्थनां विनैव सिद्ध कार्यं नरवाहनदत्ताय न्यवेदयत्। अन्यच्चाथ तमेवार्थं वायुपथे विज्ञापयति धीमान् गोमुखो राजानमब्रवीत्, 'देव, वायुपथोऽय तव भक्त इत्येष यद् ब्रवीति तत्त्वया नून कर्तव्यम्। एवमुक्तस्तथेति प्रतिपन्नो राजपुत्रो वायुपथेन दत्तामनिच्छन्तीमपि तदनुजां स्वीचकार। तदानीं व्रियामाणा साऽरोचत् अकामयमानाऽप्यह भ्रात्रा मदीयेन, दीय इति मदीयस्मिन् कर्मणि लोकपाला यूय साक्षिण' इति। श्रुत्वा स्वाश्रैव तस्यास्तद्वचो, वर्तमाने तत्रत्ये वायुपथान्त पुराङ्गनायोराविरो, न कोऽप्यन्य शुश्राव। गोमुखश्च किन्तु

१ 'कर्मव्यतिहारे णच् स्त्रियाम्, णच स्त्रियामञ्', 'न कर्मव्यतिहारे'।
२ 'अभिविधौ भावे इनुण्'।

नच्छ्रुत्वा तद्वाक्याशय बुभुत्सुरितस्ततोऽभ्रमदित्येका तेऽग्निप्रवेश कर्त्तुमुद्यताश्च- तस्तो विद्याधरकुमारिका ददर्श। तेन तथाकरणस्य कारण पृष्टाश्च ता वायुवेगयश- कृत समयोल्लङ्घनरूपात्मावमाह तस्मै तद्धेतु निजगदु । तदाकर्ण्य गोमुखो राज्ञ समीप गत्वा नरवाहनदत्तायेत्थमखिल तन्न्यवेदयत् । तदाकर्ण्य विस्मितो राजा ता कुमारिका रक्षितु वायुवेगयशसा प्रार्थित सर्वै सह तत्र गत्वा पुर प्रज्वालि- तानलाश्च तस्य कुमारिका पश्यन् वायुपथराजाऽनुज्ञया निजगदे, देव, एषैका कालकूटपते सुता कालिका नाम, द्वितीया च विद्युत्पुञ्जात्मजा विद्युत्पुञ्जा, तृतीया चैषा मन्दरस्य सुता मतङ्गिनी, चतुर्थी च पद्मप्रभा नाम्नी महादंष्ट्रसुता, पञ्चमी अहञ्चेति वय पञ्च सिद्धक्षेत्रे तपस्यन्त भवन्त मारमोहिता मिथ समय व्यदध्म यत्पञ्चभिरस्माभिरयमेव प्रिय पतीकरणीय । भिन्नया च न कयाचिदप्यात्माऽस्मै समर्पणीया। कुर्वन्त्याञ्च तथैकस्यामन्याभि सखीद्रुह तामुद्दिश्य वह्नि प्रवेष्टव्य । एतत्समयभीताह पृथक् परिणय नेच्छमधुनापि न तुभ्यमात्मा समर्प्यते इति लोकपालसाक्षिणि मदीयेऽस्मिन् समये सदा एता मम निर्बरा सखीरुपयम्यैताभि सहाह निरुद्द्वाबोच्छ्रायवता भवताऽनुग्रहणीया। इत्थ तयोक्ते मरणविरता कुमार्य परस्पर समाश्लिष्य न्यस्तुतुषु । राजा चापि निरतिशय जहर्ष । तत्पित- रोऽपि च तत्सर्वमवगत्य तत्क्षण तत्रागतास्तस्मै नरवाहनदत्ताय यथाविधि सर्वा- स्ता ददुरित्येव पञ्च गजाप्लावविद्याधरात्मजा समवाप्य वत्सेशसुत पर माहा- त्म्यमुपगतवान् ।

एव तत्र ताभि सह चिर वर्तमान नरवाहनदत्त हरिशिख सेनापति- रेकदोवाच, 'देव, शास्त्रज्ञोऽपि भवान् कथमधुना समुल्लङ्घितनीतिनियमो विग्र हावसरेऽनर्थमहप्रहाय कामाय भोगप्रसरावसर ददाति ? क मन्दरदेव जेतु त्वदीयो यात्रोद्योग कियन्ति दिनानि इहान्त पुरे सह ते विहार ? हरिशि खेनेत्थमुक्तो महाराजो जगाद, 'हरिशिख, युक्तमुक्त भवता किन्तु न मेऽत्र कोऽपि भोगायोद्योग । अय हि भार्याप्राप्तिकरोऽधुनाऽस्मिन् सहायक इति

---

१ आमोदोऽस्त्वन्योऽमद । २ अविवाहिता, 'नौ वृधान्ये' इत्यनेन धान्य एव यत् विधानादिह 'प्रदृश्दनिश्चिगमश' इत्यप् । ३–४ 'उदि श्रयतियौतिरू द्रुव' । ५ 'विभाषाङिरुप्लुवो' ( गजाप्लावा गजगामिनी )। ६ 'अवे ग्रहो वर्षप्रतिबन्धे' । ७ 'पुसि सज्ञाया घ प्रायेण' इत्यधिकरणे घ ।

मयाऽभिनन्दित । अद्यैव च प्रमादघन्ना वणिज स्वकीयमर्थसिद्धये इव विमुक्त प्रमाद्याश्चा मदीयसैनिका अरिपरिभावाय, निजविनयसिद्धये च साधयन्तु । एवमुक्तवन्त राजान श्वशुरो मन्दरोऽवदत् , 'देव, दूरदुर्गमभूमिष्ठोऽय मन्दरदेवोऽसि द्धचक्रवर्त्यङ्गसंरम्भेन न कनापि जेतु शक्यते । अय हि देवमाय महावीरसुर रक्षितद्वारदेशायां त्रिशीर्षाख्यगुहायां सुरक्षितो वर्तते । तत्र च देव, चक्रवर्तिरस चन्दनपादपो वर्तते । तस्य च तरोर्निकट न शमोत्यचक्रवर्ती जनो गन्तुम् इति त्व त स्वाभीष्टसिद्धये समाराधय । मन्दरादित्थमाकर्ण्य निराहारो निष्प्रावारो यतमतो नरवाहनदत्तो रात्रौ त चन्दनतरु गच्छन् सुदारुणेभ्यो विघ्नेभ्यो वित्रास्यमानोऽपि तस्य तरोमूलमवाप्य निबद्धोत्तुङ्गवेदिक महातरु त सोपानैरध्यारुह्य ववन्दे । तत्र घातिमम्मस्तत्तर 'चक्रवर्तिन् , अयमहं ते सिद्धश्चन्दनवृक्षः, स्मृतमात्र एव चाह त्वां सन्निधास्ये । त्वमधुनेतो गोविन्दकूट व्रज, तत्रान्यान्यपि रत्नानि ते सेत्स्यन्ति यनाचिरमेव त मन्दरदेवविजयनिर्धय । रात्रावेवम शरीरिण्या वाचोक्तो नरवाहनदत्तोऽनिहृष्टस्तथेत्युक्त्वा सिद्धिमान् , द्वियपाद पकृतप्रणतिर्निजकटकमायातस्तां निशां नीत्वा प्रातरास्थानेऽखिलेभ्य साधित चन्दनतरुवृत्तान्तमाचख्यौ । तत मत्राभि स्वदयिताभि सर्वैनिजसचिवादिभिश्च सह सम्मन्त्र्य मन्दरदेवदर्प विजेतुकामश्चन्दनतरूपातिपादितान्यरत्नसिद्धयें दिव्यन विमानेन गोविन्दकूटगिरिं समासमाद ।

तत्र चैकदाऽऽस्थानमण्डपगत चक्रवर्तिन नरवाहनदत्त व्योममार्गणागत प्रमसङ्गको विद्याधरो, यश्चाग्निपर्वते शत्रुभिसमेन भयाद् रक्षितवान् आसीत् , समागत्य दत्तनिजपरिचय सप्रीतिस्वीकृतराजातिथ्यादरातिशय आब्रवीत् , 'देव, दक्षिणदिग्वर्ती मलयाख्यो महागिरिरस्ति । तत्रैकस्मिन्नाश्रमे वामदेवनामा महान् ऋषिरस्ति । स त्वा कस्यचित्कार्यस्य हेतोरेकाकिनमाह्वयति' इति तेनाहमिह प्रेषित । त्वञ्च मदीय पूर्वार्जित प्रभुरित्यहमिहायात । तदेहि, तस्य मुनेरन्तिक शीघ्र सिद्धये साधयाव । तेन विद्याधरेणैवमुक्तस्तत्रैव भार्याः सेनाश्च सस्थाप्य तथेत्यभ्युपगत्य नभोमार्गेण क्षिप्र मलयाचलमवाप्य वामदेवमभ्युपगतो जरसा पाण्डुर, प्रांशुशरीर, नेत्रकुहरस्फुरत्तारकमणियुग्मम् विद्याधरेन्द्र

१ प्रे मणिजाम्' । २ 'रदमौ च' । ३ 'परौ भुवोऽवज्ञाने' । ४ 'एरच्' । ५ 'वृणोतेराच्छादने' । ६ 'प्रद्वहनिविगमश्च' । ७ 'मयादीनामुपचस्यानम्' । ८ 'एरच्' ।

रत्नस्थान, ममुक्षमजटाश्तम, सिद्धिसाहाय्यहेतो महागत हिमाद्रिमिवावलोक्य तन्मुनिचरणौ ववन्दे। सोऽपि च प्रदर्शिताद्यातिथ्याद्यो राजानमेवमभाषत, 'पुरा, पुरारातिना कामरूपेण त्वघोऽपि त्व रत्या तोषितेन शम्भुना सर्वविद्याध रेन्द्राणां चक्रवर्ती विनिर्मित । मम चैतस्मिन् गम्भीरान्तर्गुहान्तरे आश्रमे विविधानि रत्नानि सन्ति, मदादिष्टानि तानि साधयित्वा त्व गृहाण। एव सिद्धस्य ते मन्दरदेवो जेतव्यो भवेदेतदर्थमेव गिरिशाज्ञया त्व मयेह समाहूत ।

तेन मुनिनेत्यमुक्तो नरवाहनदत्त प्रहृष्टस्ता गुहां प्रविश्य विजिततत्रत्य-विघ्नौघोऽभिधावन्त मत्तगजेन्द्र दृष्ट्वा प्रदत्ततन्मुखमुष्टिप्रहार, दन्तस्थापितपादो लाघवेनैव त मत्तगजेन्द्रमारुरोह । तदानीमेव 'साधु, सिद्ध चक्रवर्तिनस्ते महा हस्तिरत्नमित्येषाऽशरीरिणी वाणी गुहामध्यादुद्भूत्' ततोऽहीन्द्राम खड्गमेक-मवलोक्य स तन्महारत्न चक्रवर्तित्वलक्ष्म्या केशपाशमिवाग्रहीत् । येन 'साधु भो जैत्र खड्गरत्न ते सिद्धमि'त्यशरीरिणी वाग्भूयो गुहाभ्यन्तरे समुद्भूत् । तत स चन्द्रिकारत्न, तदनन्तरञ्च कामिनीरत्नमेव विघ्नसिनीनाम्ना प्रसिद्ध विद्यारत्नञ्च सोऽसाधयत् । इत्थ साधितकार्यकालोपयुक्तमाहात्म्यप्रदरत्न स गुहाया निर्गत्य तस्मै वामदेवर्षये सिद्ध सर्व प्रशशसेति प्रीतो मुनिस्त सिद्धमहाचक्रवर्तिनम् जगाद, 'पुत्र, कैलाशोत्तरपार्श्वस्थित मन्दरदेवमधुना त्व विजित्योर्जितसाम्राज्य श्रिय भुङ्क्ष्व' इति ।

तेन मुनिनेत्थमुक्त. सिद्धकार्यो नरवाहनदत्त कृतत मुनिस्तव, अमृत प्रभेण सह व्योम्ना प्रत्यायाह्वाय गोविन्दकूटस्य श्रश्रुवा महाप्रभावत्तया धनव त्याऽभिरक्षित स्वशिबिर प्राप। तत्र गृहीतविष्टरश्च[2] पृच्छद्भ्यो जनेभ्यो धाम देवर्षिदर्शनम्, तदादेशेन गुहाप्रवेशम्, रत्नानां सिद्धिञ्च सर्व शशसेति वाद्यमान तूर्यो नृत्यद्विद्याधरीकस्तत्र महोत्सवाभिनन्दितो जनोऽजायत ।

परेद्युर्विजयाशमिनि लग्ने द्विजेभ्य प्रदत्तादरं[3], कृतमङ्गलो ब्रह्मनिर्मित सार्वदत्त विमानमारुह्य मन्दरदेव विजेतु ससैन्यान्त.पुरसमन्वितो नरवाहनदत्त सेनापतिहरिशिखादेशानुविधायिभिश्चण्डसिंह पिङ्गलगान्धार-वायुपथ विद्युत्पुञ्जादि भिर्निजानुचरै सह रणाय प्रतस्थे इति प्रचलद्विद्याधरसामन्तचैवसेनाच्छन्नगगने

---

१ ऋद्धोरप् । २ 'इक्षासनयोर्विष्टर' । ३ प्रद्वृदनिधिगमथ' ।
४ धरिरण्योरुपसर्गानम्' । ५ द्वित्वप्रकरणे के इत्यादीनामिति वक्तव्यम्' ।

त्तत्तेजोनिह्नुतप्रभ प्रभाकरो लज्जयेव निममज्ज। ततो देवर्षिगणसुसेवित दिव्याङ्गनोद्यान गण्डशैलमतिक्रम्य स्फटिकापाण्डुरश्चिव कैलासभूभृतो मूलम वाप। तत्र च मन्दाकिनीतीरे स्थापितनिजसेनापरिच्छद त विद्याधराधिपधीमान मन्वर उवाच देव, अनेकविघ्न कैलासप्रैस्य समुल्लङ्घ्याग्रतो गन्तु न योग्यम्। हरास्पदस्यैतस्य हि लङ्घनेन विद्या नश्यन्तीत्यस्य त्रिशीर्षगुहामुत्तरेण गन्तव्यम्। सा च गुहा देवमायाभिधानेन राज्ञाऽभिरक्ष्यते। स च राजाऽतिरस इति तमजित्वा पुरो गमनमयोग्यम्। मन्दरेणैवमुदितो धनवत्या चानुमोदितो नर वाहनदत्तस्त वासर तत्रैव स्थित आदौ साममयुक्तये कृततत्कृत्योपजापाय देव मायाय दूत प्राहिणोत्। देवमायश्च किन्तु सान्त्वन तच्छासनममतियमानो युद्धाय समनह्यत्। अतोऽपरेद्युस्सन्नद्धैस्तैस्सैः स्वकीयराजे सह स चक्रवर्ती त देवमायारिपोस समूलमुन्मूलयितु प्रतिप्रायात्। देवमायोऽपि च तत्सर्व बुद्ध्वा योद्धु मसन्नद्धो वराहवज्रमुष्ट्यादिभूरिभूपतिसमन्वितोऽभ्युज्जगामाभ्यमित्रम् इत्युभयसेनासङ्घातसमाच्छादिताम्बरश्छिन्नभूरिशिर श्रेणिकरकावर्षभीषण सवी रगर्जितो घोरो रणघनागम समजायत। तत्र चण्डसिंहो देवमायस्याग्रयोध सेनान्य वराह जघान। अमायिना नरवाहनदत्तेन मायी देवमायश्च शरै सच्छ्यो रणे मूर्च्छितो बद्धोऽक्रियत। बद्धे च तस्मिन् वज्रमुष्टिमहाबाहुप्रभृतिभि सह तत्सैन्यमभज्यतेति विमानस्था 'साधु! साध्विति स्वार्थवन्तो देवा विजयिन स्तस्य जयस्वैन चक्रु। अथ सयतानीत तमाश्वासननिर्गदै सान्त्वयित्वा नर वाहनदत्त ससैन्य देवमायमनुगृह्यामुञ्चत्। सोऽपि च तद्बाहुजितो वज्रमुष्ट्या दिभि सार्द्ध प्रणतस्तस्य शासननियमान् प्रत्यपद्यत।

अथैव प्रवृत्ते सग्रामनिवृत्तिसूचककोणाघातनिक्वाणे[11], शान्ते चोभयसैन्याहवे हवे[12], व्यपगते च तस्मिन्महोरात्रे, प्रातरास्थानमायातो देवमायोऽधीश्वरेण तत्र त्रिशीर्षगुहाद्वाय पृष्टो यथातथ्यमेवमवर्णयत, 'देव, पुरा विद्याधरवराधिते भिन्न

---

१ २ 'घञर्थे कविधानम्'। ३ 'व्यधजपोरनुपसर्गे अप्, अत उपसर्गे घञ्, उपजाप। ४ 'घसपोध' इति अदो घस्लादेश। ५ 'व्यधजपोरनुपसर्गे' इत्यप्। ६ ७ 'स्वनहसोर्वा', घञ्, पक्षे अप्। ८ 'नौ गदनदपठस्वन। ९ 'सघोद्धौ गणप्रशसयो', सयत्लमित्यर्थ। १० 'यम समुपनिविषु च'। ११ 'क्वणो वीणायाञ्च'। १२ 'आङि युद्धे'। १३ शब्दे, 'भावेऽनुपसर्गस्य' इतिह्वयतेरपूसम्प्रसारणञ्च।

साम्राज्ये कैलासस्य दक्षिणोत्तरे द्वे पार्श्वे अभूताम्। तत्र सयमपूर्वककृततपस्तुष्टेन शम्भुना ऋषभाय्यश्चक्रवर्ती भवितु प्रदिष्ट। स च जातूत्तर पार्श्व गच्छन् कैलासमुदलङ्घयदिरयघ्वस्थितहरक्रोधाद् भ्रष्टविद्यो दिवोऽपतत्।

तत स दैवात्सादोऽपि तदानीम् अन्यादो, निर्निनदोऽपि समाकर्णितकाननपतत्रि-श्वापदनिनादो निर्निगदोऽपि श्रुतिविपयीकृतसशिष्यमुनिगणनिर्गादोऽस्युग्रेण तपसा पुनर्हरमाराध्य सन्तुष्टात्तस्मादुभयो पार्श्वयोश्चक्रवर्तित्वमयाचदिति पिनाकभृत्स्योत्तरदक्षिणोभयपार्श्वगमनसौलभ्याय कैलास भित्वा महागुहाविवर चक्रे। एव विद्ध कैलाश समुद्विग्न 'भगवन्नेत मदीयमुत्तरपार्श्वं मानुषागम्यमिति गुहयाऽनया पार्श्वं तत्तेषां गम्य सञ्जातमिति 'देव, तथा कुरु येन मदीयैषा मर्यादा न भिद्येत'। कैलासेनेत्थ विज्ञप्तो हरो दिग्दन्तिदक्षिपाहीन्द्र गुह्यकान् रक्षकान् गुहायां स्थापयामास। दक्षिणे विद्याधरेश्वरम् महामायम्, उत्तरे चापराजिता चण्डिका कालरात्रि स्थापयन् कृतगुहारक्षो हरो महारत्नानि समुत्पाद्य तत्र व्यवस्थामादिदेशयदिय द्विपार्श्वी सिद्धरत्नस्य चक्रवर्तिन सदूतानां सदाराणां तदनुज्ञातानां राज्ञाश्च गम्या भविष्यति, नान्येषाम्। व्यस्थे इत्थमादिष्टवति समये समये विद्याधरीसार्यमाणवीणाप्रक्वणमाकर्णयंस्तत्रर्षभक साम्राज्य कुर्वन्नपि दर्पमूलकर्णानिव निजप्राणान् वह्निणे ददौ। एष च त्रिशीर्षस्यगुहाया अस्या आगमो या च युस्मादृशैर्विना घनजनमदैरन्यैरगम्या। तस्य चैतद्गुहाद्वाररक्षिणो महामायस्य कुले कालानुक्रमेण जातोऽह देवमायनामा। मम जन्मनि दिव्या सरस्वती सप्रमदाय सप्रमदाय मदीयजनकाय व्याजहार यद्विद्याधरेषु जातोऽय मृधे रिपुभिर्दुर्जय। यश्चासु जेष्यति नूनस चक्रवर्ती भविष्यतीति। तेनास्य स्वामिनाऽमुनाऽनुवर्त्येन प्रभुणा च भाव्यम् सोऽह त्वया जितोऽसौ भवान् कैलाशोभयपार्श्वैकचक्रवर्ती प्रभाववानस्माक प्रभुरिति त्रिशीर्षगुहामेता सीर्त्वा निजयलवशीकृत शेषाहितसमाजमज स्वममजमुदजेनव समजेतु।

---

१ यम समुप०'। २ नितराम् अदनम् स्याद् 'नौ ण च' सद्रहितो निरदान इति भाव। ३ 'नौ गदनद०' नि शब्द इत्यर्थ। ४ 'नौ गदनद०' निगादो, वचनम्। ५ 'क्वणो वीणायाञ्च'। ६ 'नित्य-पण परिमाणे'। ७ मदोऽनुपसर्गे'। ८ सपक्षीकाय। ९ 'प्रमदसम्मदौ हर्षे'। १० 'समुदोरज पशुषु' (समज पशूना सङ्घ, उदज पशूनां प्रेरणम्)। ११ अज गतिक्षेपणयो इत्यस्माद्धोट्।

देवमायेनेत्युक्तश्चक्रवर्ती जगाद "मद्वयमथ गुहाद्वारमासाद्य तत्र ¹प्रगाम प्रात कृतसन्निधयश्च ता गुहा प्रवेष्टास्म' इति। एवमुक्त्वा नरवाहनदत्तोऽन्यो न्योपह्वैराह्ववसम्मिलितै सर्वै राजभि सह तत्र गत्वा गुहाद्वारमावसन् निरालोका न्तर्भागां पुञ्जीभूतकृष्णपान्तघनतामिस्रामिव स्थितामनर्ह दुरभिप्रवेशां तां गुहा मालुलोके। द्वितीयेऽह्नि कृततत्सपर्यो ध्यातोपनतसद्रत्नसहाय, सपरिच्छद स चन्द्रिकारत्नैस्तत्रत्यतमासि, चन्दनेन चाहिदिग्विपान्, हरितरत्नेन दिग्गजान् खड्गरत्नेन च गुह्यकान्, अन्यै रत्नैरन्यान् विघ्नौघं निवार्य सेनया सहामुमुत्ती र्णवान्। ततश्चोदग्द्वारेण विनिर्गच्छति तस्मिन्, 'चक्रवर्तिन्, रत्नप्रभावासमा ह्वात्म्येन त्वया गुहेय तीर्णेति' दिवो वागुदभूत्। अथ धनवती देवमायश्च त प्रमुमूचतुर्यदेतद्गुहाद्वारे सर्वदा कालरात्रिः सन्निधत्ते, सा ²चामृत जिहीर्षूणां दानवेन्द्राणा ³वधकारिणी विष्णुनाऽमृतम थने पूर्वमुत्पादिता। सैषा गुहामेतां रक्षितु शर्वेण समादिष्टा येन यथोक्तैस्त्वादृशैर्विनाऽन्यो न कश्चित्तरेत् इति। चक्रवर्ती सिन्दूररत्नस्त्वञ्च गुहामिमां तीर्णवान्, इत्येषा विजयसिद्धये त्वयाऽवश्यम र्चनीया। एव धनवती देवमायोक्तस्य तस्य नरवाहनदत्तस्य वासरस्तत्रात्यगात्। कैलासोत्तरसानघश्च समासन्नमग्रामरुधिरोचिता, इव सन्ध्यारुणा, अराजत। रात्रस्तस्य सर्वं बल समुपलब्धबलस्तमोघनो गुहागृहरूप मयो वैरमिव स्मरंस्त दानीमावृणोत्। आयसोद्धनघनोरस्कभूताद्विगुण कालरात्रिक्रोधाङ्कुर, इवाविर्भूवेति क्षणेनैव नरवाहनदत्तमतिरिच्य सर्वं तत्सैन्य शीतलीभूतापघन निःसञ्ज सजज्ञे। तदवलोक्यानर्घादुर्मनायमानकालरात्रिविजृम्भितं तत्सर्वमवगत्य नरवाहन दत्तस्तद्गुहाद्वारोपप्रघणस्थतत्रत्यभूस्तुपदर्न निघं-तरूपलब्धैर्मानुषिम-पश्चिमफ-लपुष्पैस्तामचयनित्थ तुष्टाव, 'देवि, त्व हि प्राणिनां प्राणशक्तिः, तेषां सञ्जीवनी चेति त्रिभुवन त्वमेवाश्वासयसि। दुष्टदुरितद्रुमस्तम्बघ्नंदुर्घर्ष-परिघं-पाणिर्दुर्गा त्वमेवेति जगदुत्पत्ति स्थिति नाशहेतवे तुभ्य नम। किन्त्वत्र सुतापि यदा

---

१ 'ह्व सम्प्रसारणञ्च न्यभ्युपविषु'। २. 'आङि युद्धे'। ३ 'हनश्च वध'। ४ 'मूर्तौ घन'। ५ 'उद्घनोऽत्याधानम्'। ६ 'अपघनोऽङ्गम्'। ७ 'अगारैकदेशे प्रघण प्रघाणश्च'। ८ 'उपघ्न आश्रये'। ९ 'निघो निमितम्' (समारोहपरिणाहयुक्त वृक्षय)। १० 'द्वित मित्र' 'घनेर्मन्तिरयम्'। ११ 'स्तम्ब क च' १२ 'करखेऽयोविद्रुषु'। १३ 'परौ घ'।

कालरात्रि सा न तुतोष तदा स्वमूर्द्धोपहारेण स सामाचिचिपद् इति स्वशिर श्छेत्तु मनुपात्ताट्टहासोद्घ[1] तुष्टा देवी तत्क्षणमवोचत्, 'पुत्र, माहस मा कार्षी। ण्पाऽह ते सिद्धा अचिरेणैव सर्वैतद्वए प्रकृतिस्थ भवतु। विजयश्च त्वमाशु प्राप्नुया। एव तस्यामभिदधत्यामेव सर्वे तन्नरवाहनदत्तयल पल्यङ्कसुसप्रबुद्ध मिव सञ्जातमिति मत्वास्तद्भार्या, वयस्या, अन्ये विद्याधराश्चावासमानन्दैयव- श्चक्रवर्तिनस्तस्यात्मीयजनर्दर्ण-यक्षविशिष्ट त प्रभाव मुहुर्मुहु प्राशसन्। वीरो नरवाहनदत्तश्च तदानीं विहिताहारपानाद्यावश्यकक्रियोऽनुभूततद्रात्रिप्रियस्वप्न, कालरात्रि प्रातर्विधिनाऽनाधिरम्यचर्य पयोधिगाम्भीर्यनिधिर्विरुद्धविद्याधरानिरुद्धा ध्वान धूमशिख प्रतिप्रायात् इति मन्दरदेवीयप्रधानेन तेन सह चक्रवर्तिनस्तस्य तादृश जन्यमजनि यत् सर्वतो व्योम, खड्गमयमिव, मही च शरमूधमयीव, आहवहवश्च 'जहि जहीति जहि, मा जहिहि, जहीहि, जहाहि इत्युग्रवीरवाक्यमय इवाभवत्। आमायकाए प्रवतमाने एव मेनयोरुभयोर्युद्धे चक्रवर्ती, धूमशिख युद्धे बद्ध्वा शान्तधूमशिखोद्रेकमभ्रिदग्ध घनमिव कृत्वा निजशासन ग्राहयामास।

द्वितीयऽह्नि चाग्रतो योद्धुमायान्त मन्दरदेव चारेभ्यो ज्ञात्वा किञ्चिद्दूर गतोऽग्रे बहुराजगणसैन्य-सधिर्ति, रचितव्यूहमग्रत समागत तमवलोक्य स्व पक्षीयराजन्यककारितप्रति यूहरचनो नरवाहनदत्तोऽवेलमभ्यधावत् इति प्रलय कालोद्वेल्लजलधिक्षुभितजलौघानुकारिणोरुभयो सेनयोराहवो भयावहोऽवर्तत। एकतश्चण्डसिंहाद्या महारथा, अन्यतश्च काञ्चनदंष्ट्राख्यप्रभृतयश्शूरा युध्यन्ते स्मेतिविक्षोभितकुलक्ष्माभृत्प्रकम्पितत्रैलोक्योऽपलोक्यो विजजृम्भे सग्राम।

तत्र सर्वविद्याधरसैनिकानाम् अग्रेस्थाय युध्यमानस्य नरवाहनदत्तस्य प्रथमत स्थित्वा प्रतियुध्यमानस्य मन्दरदेवस्य च, परस्पर भीरुङ्कारम् आक्रोश ताम् 'अलमेवकार[10] पलायितेने'ति न्यक्कारपूर्वकम् अरिवेद[11] प्रहरताम्, यावद्वेद माहतानाञ्च सैनिकानां निर्भरमरितसकलत्रिभुवनोदरो महानुदभूद्रणारवः[13]। स च

---

१ 'सपोद्धौ गणप्रशसयो'। २ 'परेश्च घाङ्कयो'। ३ 'द्वितोऽथुच्'। ४ 'यजयाचयतविच्छप्रच्छरक्षोनङ्'। ५ 'स्वपो नन्'। ६ 'उपसर्गे घो कि' ७ 'कर्मण्यधिकरणे च'। ८ 'विभाषाऽग्रे प्रथमपूर्वेषु'। ९ 'कर्मण्याक्रोशे कृञ खमुञ्'। १० 'अन्यथैवकथमित्थसु सिद्धाप्रयोगश्चेत्'। ११ 'कर्मणि दृशिविदो साकल्ये'। १२ 'यावति विन्दजीवो'। १३ विभाषाङ्कि रुप्लुवो'।

